तव्य इति । तस्मादर्थपरिज्ञानाभिनिवेशादिदमेव प्रधानमित्युपपन्नम् । अथास्यैवमखिल-
पुरुषार्थोपकारवृत्तिसमर्थस्य संग्रहः ॥

तद्यथा—नामाख्यातोपसर्गनिपातलक्षणं ( नि॰ १. १-११ ) भावविकारलक्षणं
( नि॰ १. २ ) नामान्याख्यातजानि न सर्वाणि च यथोपन्यस्य पक्षप्रतिपक्षौ विचार्या-
5 वधारणं सर्वाण्याख्यातजानि कानिचिदनेकधातुजान्यपीति ( नि॰ १. १२-१४ )
मन्त्राणामर्थवत्त्वानर्थकत्वे विचार्य शास्त्रारम्भप्रयोजनद्वारेणार्थवत्तावधारणं ( नि॰ १.
१५-१६ ) पदविभागपरिज्ञानप्रतिज्ञावबोधावलम्बिप्रदर्शनाय आदिमध्यान्तानेकदैवतलिङ्ग-
सङ्कटेषु मन्त्रेषु याज्ञिकापरिज्ञानद्वारेण देवतापरिज्ञानप्रतिज्ञा ( नि॰ १. १७ ) अर्थज्ञप्रशंसा
अनर्थज्ञावधीरणं ( नि॰ १. १८-२० ) वेदवेदाङ्गव्यूहः सप्रयोजननिघण्टुसमाम्नाय-
10 विरचन प्रकरणत्रयविभागेन नैघण्टुकप्रधानदेवताभिधानप्र[illegible]विभागलक्षणं ( नि॰ १. २० )
निर्वचनलक्षणद्वारेण शब्दवृत्तिविपर्ययोपदेशः ( नि॰ २. १ ) अर्थप्राधान्यालोपोपधावि-
कारवर्णलोपविपर्ययोपदेशेन सामर्थ्योपप्रदर्शनायादिमध्यान्त[illegible]लोपोपधाविकारवर्णलोपद्विवर्ण-
लोपाद्यन्तविपर्ययाद्यन्तवर्णव्यापत्तिवर्णोपजनोदाहरणचिन्ता अ[illegible]तस्यान्तर्धातुनिमित्तेन संप्र-
सार्यसंप्रसार्योभयप्रकृतिधातुनिर्वचनोपदेशः भाषिकप्रायोवृत्ति[illegible]भ्यो नैगमशब्दार्थप्रसिद्धिः
15 नैगमप्रायोवृत्तिभ्यो भाषिकशब्दार्थप्रसिद्धिः देशाव्यवस्थया श[illegible]ब्दरूढ्युपदेशः तद्धितस-
मासनामनिर्वचनलक्षणं ( नि॰ २. २-३ ) शिष्यलक्षणं ( नि॰ २. ४ ) विशेषव्या-

---

2. *m.* °पकारकवृत्ति°. 3 *d.* भावविकार°. 4. *bi* o[illegible] *m.* न before सर्वाणि, all Mss. have it. 5 *d* आख्यातजानानि for आख्यातजा[illegible]नि, *m* °धातुजन्यपि. 6. *m.* अर्थधारण for अर्थवत्तावधारण. 7 *bi.* °प्रतिज्ञा[illegible]बोधा°. Here the reading of *m.* is better; but not being supported [illegible]y other Mss. i is not introduced in the text; *m.* reads °प्रतिज्ञा तदव[illegible]बुभोधावलम्बिप्रदर्शनाय 8. *m* reads °दैवतलिङ्गकेषु मन्त्रेषु, *bi* याज्ञिकपरिज्ञान° 8-[illegible] *a. d* अर्थज्ञ[illegible] अनर्थविधारण, *m.* अनर्थज्ञावधीरण, *bi* अनर्थज्ञावधारण. *d* [illegible] °निघण्टुसमान्न° 12. *m* °मध्यान्त°. *bi* om. °द्विवर्णलोपाद्यन्त° I read the t[illegible]xt with *a. d* and *m.* but perhaps the word आद्यन्त after विपर्यय is [illegible] superfluous [illegible] think the reading should be °वर्णलोपद्विवर्णलोपाद्यन्तविपर्यय[illegible] [illegible] व्यापत्ति° [illegible] will be seen from reference to the text given above. 15 *bi* शब्दरूपव्यपदेशः, *a d. m.* as in the text 16. *bi.* विशेषेण व्या[illegible] [illegible]प्पया for विशेषव्याख्यया of *a d.* as in the text, *m.* विशेषव्याख्याय.

---

4. यथोपन्यस्य—I feel there should be इति here for यथा, [illegible] [I. 7.] [illegible] sense is not clear. I have, however, kept यथा in the text. Ser [illegible] read by any of the Mss. or by the printed editions.

ख्यया तत्त्वपर्यायभेदसङ्ख्यासंदिग्धोदाहरणनिर्वचनव्यवस्थया नामाख्यातोपसर्गनिपातानां विभागेन नैघण्टुकप्रकरणानुक्रमणं (नि॰ २.५-३.२२) अनेकार्थानवगतसंस्कारानुक्रमणं (नि॰ ४.१-६. यावदन्तं) परोक्षकृतप्रत्यक्षकृताध्यात्मिकमन्त्रलक्षणं स्तुत्याशीःशपथाभिशापाचिख्यासापरिदेवनानिन्दाप्रशंसादिभिर्मन्त्राभिव्यक्तिहेतूपदेशः (नि॰ ७. १-३) निदानपरिज्ञानख्यापनायानादिष्टदेवतोपपरीक्षणायाध्यात्मोपदेशप्रकृतिभूमत्वं इतरेतरजन्मत्वं 5 (नि॰ ७. ४) स्थानत्रयभेदशः तिसृणामेकैकस्या माहाभाग्यकृतोनेकनामधेयप्रतिलम्भः पृथगभिधानस्तुतिसंबन्धाद्वा (नि॰ ७. ५) देवतानामाकारचिन्तनभक्तिसाहचर्यसंस्तवकर्मसूक्तभाक्त्वहविर्भाक्त्वव्यञ्जनभाक्त्वानि (नि॰ ७. ६-१३) पृथिव्यन्तरिक्षद्युस्थानदेवतानामभिधेयाभिधानव्युत्पत्तिप्राधान्यस्तुत्युदाहरणं तन्निर्वचनविचारोपव्यवधारणानुक्रमेण व्याख्याय दैवतप्रकरणनिर्णयः (नि॰ ७.-१२.) विद्यागारप्राप्त्यु- 10 पायोपदेशः मन्त्रार्थनिर्वचनद्वारेण देवताभिधाननिर्वचनफलं देवताताद्भाव्यं (नि॰ १॰ १३.) इत्येष समाम्नो निरुक्तशास्त्रचिन्ताविषयः ॥

तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसंग्रहः । सा च पुनरियं साक्षात्कृतधर्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थमुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्यमवेक्ष्य तदनुजिघृक्षया वाक्यार्थसामर्थ्यादभिधेयानुगृह्य मन्त्रार्थावबोधाय छन्दोभ्यः समाहृत्य समाहृत्य 15 समाम्नाता । सैषा छन्दोवयवभूता छन्दोधर्मिण्येव । यथा यूपावव्रस्तो हि गौर्गोधर्मा । इयं च तस्या द्वादशाध्यायी भाष्यविस्तरः । तस्या इदमादिवाक्यं **समाम्नायः**

---

1. *bi.* °सन्दिग्धोदाहरणान्निर्वचन° It appears to be °दाहरणतन्निर्वचन°, *vide* comm. on Nir. II. 5. 4. *bi.* °शपथाभिशापाभिख्यापरिदेवना°, *m.* °परिदेवनानिन्दा° *a d.* °मन्त्राभिव्यक्तहेतूप°. We read with *bi* and *m*, as °व्यक्ति° makes better sense. 5. *bi* and *m* निदानपरिज्ञानव्याख्यापनाय, *a. d* [illegible] above; *m.* reads °मादिष्ट° for °मनादिष्ट°, all read °पदेशप्रकृति°. For the sense, however, I believe it should be °पदेश प्रकृति°. 6. *m* पकैकस्य for पकैकस्या; *d* महाभाग्य° for माहा°. 7. *m.* पृथगभिधानस्तुतिसम्बन्धाद्वा. This agrees with the text VII. 5. But it is supported by a single Ms. only. *a d. bi.* पृथगभिधानव्युत्पत्तिसम्बन्धाद्वा; *bi.* °चिन्तनं भक्ति°, *a d.* as above. 9. *m.* °द्युस्थानदेवतानदेवतानां; *a. d.* °व्युत्पत्तिप्राधान्यस्तुतीन्युदाहरण, *m.* °प्राधान्यस्तुत्युदाहरणं, *bi.* °प्राधान्यश्रुत्युदाहरण. 13. *m.* योरादिदेवपत्न्यन्ता. 14. *m.* अपेक्ष्य for अवेक्ष्य. 15. *bi.* वाक्यार्थ° for वाक्यार्थ°, *a. d. m* as in the text; *a* अभिधेयमनुगृह्य, *m.* अभिधेयानुगृह्य. 16. *m.* and *d* समाम्नाताः for समाम्नाता। *m.* यूपावव्रस्ताद्ध गौ, *bi.* यथापव्रस्तागौर्गोधर्मा इति. We read with *a.* and *d.* which continue [illegible] गोधर्मेव [illegible] तस्या &c. I separate the sentences in accordance with the sense. 17. *bi.* अयं for इय; *a. d. m.* तस्य for तस्या.

**समाम्नात** इति । गवादिर्देवपत्न्यन्तः शब्दसमुदायः समाम्नाय उच्यते । समाङ्पूर्वस्य म्नातेरभ्यासार्थस्य कर्मणि कारके समाम्नायः । समभ्यस्यते मर्यादयायमिति समाम्नायः । स च ऋषिभिर्मन्त्रार्थपरिज्ञानायोदाहरणभूतः, पञ्चाध्यायीशास्त्रसंग्रहभावेनैकस्मिन्नाम्नाये ग्रन्थीकृत इत्यर्थः ।

तस्य किमिति । **स व्याख्यातव्यः** । स च योसमाम्नातश्छन्दस्येवावस्थितोगवादिरन्यैर्वा निरुक्तैर्यः समाम्नातोय चैतस्मिन्निरुक्ते स एव उभयलक्षणोपि व्याख्यातव्य । आह । कथमेतद्गम्यतेसमाम्नातव्याख्यानमप्यत्राभिमतमिति समाम्नानार्हाणां वा किमर्थमसमाम्नानम् । उच्यते । निर्वचनलक्षणोपदेशात् निर्वचनप्रसक्तानां च मृगकर्णदक्षिणालक्ष्मीनिघण्डुभद्राधःशब्दप्रभृतीनामेवमाद्यानां निर्वचनोपदेशाद्गम्यते-
10 समाम्नातव्याख्यानमप्यत्राभिमतमिति । यत्पुनरेतदुक्तं समाम्नानार्हाणां वा किमर्थमसमाम्नानमिति । अत्र ब्रूमः । न हि समाम्नानार्हाणामन्तोस्ति तेषां सर्वेषां समाम्नाने शास्त्रान्त एव न स्यात् । अतश्चाध्ययनश्रवणज्ञानशक्तिहानदोषः प्रसज्येत । शक्यधेतावल्लक्षणोद्देशोदाहरणभूतनिघण्टुशब्दसमुदायेनाधीतवेदेन मेधाविना तपस्विना लक्षणविनियोगार्थेच्छन्दोदैवतनिदानविदाभियुक्तेनागमवता मन्त्रार्थोभ्यूहितुमित्येतावानेव निघ-
15 ण्टुषु शब्दसमुदायः समाम्नातः । तस्मादुपपन्नमसमाम्नातव्याख्यानमप्यत्राभिमतमिति । असमाम्नानं च सर्वेषां शास्त्रातिगौरवभयादिति । व्याख्यातव्यः । विभज्येमान्यत्र नामानीमान्याख्यातान्युपसर्गा इमे निपाता इम इदं सामान्यलक्षणमिदं विशेषलक्षणमिमान्येकार्थानीमान्यनेकार्थानीमान्यनवगतसंस्काराणीदमभिधानमिदमभिधेयमिदमभिधानस्य निर्वचनमित्येवंविधया मर्यादया परिपाट्या यथासमाम्नात आख्यातव्यो निर्वक्तव्य इत्यर्थः ।
20 **तमिमं समाम्नायं निघण्टव इत्याचक्षते** । तं च योसमाम्नातश्छन्दस्येवावस्थितोगवादिरन्यैर्वा निरुक्तैः समाम्नातस्तमिमं च निघण्टव इत्याचक्षतेन्येप्याचार्या इति वाक्यशेषः । निरुढा ह्ययमेतस्मिञ्छब्दसमुदाये संज्ञेत्यभिप्रायः ॥

---

1. *d.* गवादिर्देवपत्न्यन्त *d* om. समाम्नाय 5. *m.* om. तस्य किमिति 5-6 *b*₁. स च यो असमाम्नात छन्दस्येवावस्थितो गवादिभिरन्यैर्वा निरुक्तैर्य समाम्नात स च &c We accept the reading of *a d m* 7. *b*₁ अभिमितमिति The above text reads with *a.* and *d* 8. *m.* om वा; *b*₁. adds इति after असमाम्नानं 9 ■ °भद्राधा° for भद्राध°; *a.* and *d* निर्वचनमदेशात् for निर्वचनोपदेशात् 10. *b*₁ असमानव्याख्यान for असमाम्नातव्याख्यान of *a d m* 12. *m.* अध्याय(व?)नश्रवणज्ञानशक्तिहानिदोष. 13. *b.* *b*₁. निघण्टुशब्दसमवायेन, *a d.* and *m* as in the text 14 *b*₁ °विनियोगार्थच्छन्दो°. 16. *a d* om. च before सर्वेषां. 18 *b*₁ इमान्यनवगतसंस्काराणि, *a d m.* as text. 19. *d.* एवंविधाया, *m.* एवं विधाय, for एवंविधया of *a b*₁; *d* परिपाट्या, *m.* परिपाद, for परिपाट्या. 21 *a. d.* °वस्थितो अगवादिरन्यैर्निरुक्तै° 22. *b*₁ °तस्मिंश्छन्द समुदाये, we read with *a. d m.*

**निघण्टवः कस्मादिति ।** निघण्टुशब्दव्युत्पादविषया प्रश्नो निर्विवक्षयेदमाह । **निगमा इमे भवन्ति ।** येष्वभिधाननिर्वचनप्रारम्भकेष्वाचार्योयं यास्को निरुक्त-कारः कस्माच्छब्दमुत्तरत्र न कुर्यात्तेष्वपि व्याख्याकाले कस्मादिति शब्दः समुत्पाद्य-स्तथा हि व्याख्यासाकल्यं भवति । **निगमा इमे भवन्ति ।** निश्चयेनाधिकं वा निगूढार्था एते परिज्ञाताः सन्तो मन्त्रार्थान् गमयन्ति ततो निगमसंज्ञा इमे भवन्ति । 5

आह । कः पुनरेतेषु विशेषो येनैत एव ज्ञापयन्तीति । उच्यते-यस्मादेते **छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः ।** छन्दांसि मन्त्रास्तेभ्य उपलक्षितसामर्थ्याः समाहृत्य ग्रन्थीकृता इत्यर्थः । आह कस्मात्पुनरेतावन्त एव ग्रन्थीकृता इति । उच्यते । इतो यस्मादेतैरेव छन्दस्यवस्थितैरभिनिविष्टधियामपि मेधाविनां तपस्विनां लक्षणविनि-योगार्षच्छन्दोदैवतनिदानविदामपि सतां मन्त्रार्थपरिज्ञानोद्यमभङ्गः क्रियते दुष्परिज्ञान-10 त्वादेषाम् । एतेषु परिज्ञातेष्वप्रतिबन्धेन शक्यते मन्त्रार्थः परिज्ञातुमित्यत उच्यते त एव ज्ञापका भवन्तीति । अतश्चैन एवोपनीतसामर्थ्याः समाहृत्य समाम्नाता इति समाम्नान-मात्रमेव दर्शयति । प्रकरणगताश्च नित्या एवैत इति गम्यते ।

**ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः ।** उदाहृताः समाम्नाता निर्वचनप्रसक्तो निरुच्यन्ते य एते समाम्नाता गवादयस्त एते 15 मन्त्रार्थनिगमयितृत्वादुभयेपि निगन्तवः सन्तो निगमनाद्धेतोर्निघण्टव उच्यन्त इत्यौ-पमन्यवः । इत्येवमर्थनिगमयितृत्वान्निगन्तव एते संज्ञाः सन्तोतिपरोक्षवृत्तिना शब्देन

---

1. *d.* °शब्दव्युत्पिपादयिषया प्रश्नानिर्विवक्षयेदमाह. 2. *a. d* om. अथ यास्को निरुक्तकारः. 3. *a. d.* व्याख्याकालेऽयं समुत्पाद्यः, *m.* समुत्पाद्य for समुत्पाद्य. otherwise it agrees with the text. 4. *a. b. bi.* °साकल्यं, *d. m.* °साकल्य; *a.* निश्चयेनानधिकं वा निष्कृष्य निगूढार्था, *d.* निश्चयेन अधिकं वा निष्कृष्य निगूढार्था, *m.* agrees with *a*, but reads निष्कृत्य for निष्कृष्य. 5. *m.* adds ज्ञापयन्ति after गमयन्ति; *bi.* adds निघण्टव एव and *m.* निघण्टव after निगमसंज्ञा, *a. d* as in the text. 6. *m.* कस्मात् for यस्मात्; *bi.* adds गवादयः after यस्मादेते: *a. d. m.* agree with the text. 10. *bi.* परिज्ञानायोद्यमभङ्गः and दुःपरिज्ञान°; *a. d. m.* as in the text. 12. *m.* adds समाहृत्य again after समाहृत्य; *m.* समाम्नायमात्र, *d.* समाम्नातमात्रं, for समाम्नानमात्रं of *a. b. bi.* 17. *m.* अतिपरोक्षवृत्तिशब्देन.

---

15. I am almost inclined to drop the Visarga of उदाहृताः here, and read उदाहृता-समाम्नाताः as one word or read उदाहृताः समाम्नातनिर्वचन°. Then only the sentence serves as a reason for the निर्वचन of words like निघण्टु. The manuscripts and the editions, however, read as above.

गकारस्थाने घकारं कृत्वा तकारस्थाने च टकारं कृत्वा निघण्टव उच्यन्ते । वर्णव्या-
पत्त्यादिलक्षणम् अथाप्याद्यन्तविपर्ययः¹ इत्येवमादि । तदेतत्परोक्षातिपरोक्षवृत्तिषु
शब्देषु यथासंभवं द्रष्टव्यम् । त्रिविधा हि शब्दव्यवस्था । प्रत्यक्षवृत्तयः परोक्ष-
वृत्तयः अतिपरोक्षवृत्तयश्च । तत्रोत्कटक्रियाः प्रत्यक्षवृत्तयः । अन्तर्लीनक्रियाः परो-
5 क्षवृत्तयः । अतिपरोक्षवृत्तिषु शब्देष्वेव निर्वचनाभ्युपायः² तस्मात्परोक्षवृत्तितामापाद्य
प्रत्यक्षवृत्तिना शब्देन निर्वक्तव्याः । तद्यथा । निघण्टव इत्यतिपरोक्षवृत्तिः । निगन्तव
इति परोक्षवृत्तिः । निगमयितार इति प्रत्यक्षवृत्तिः । यस्मान्निगमयितार एते निग-
न्तव इति निघण्टव इत्युच्यन्ते । उक्तं च—

" वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
10 धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥"

वक्ष्यति चायमपि वर्णविपर्ययवर्णव्यापत्तिलक्षणम् । त एते निगन्तवः सन्तो निघण्टव
उच्यन्त इत्येवमतिपरोक्षवृत्तयो निर्वक्तव्याः । प्रायेण चोणादिषु परोक्षवृत्तयः शब्दा-
श्चिन्त्यन्ते । तत्र तेषां लक्षणमुपेक्षितव्यम् । येषामपि लक्षणं नास्ति तेषामपि तत्र
कल्प्यम् । अपरिसमाप्ता ह्युणादय इति लक्षणविदः प्रतिजानते । सर्वथापि लक्षणासंभवे
15 पृषोदरादिनाप्रसिद्धिरेव द्रष्टव्या । तत्र हि यथाध्ययनमेव शब्दाः साधीयांसो भवन्त्य-

---

4. *a d* तत्रोत्कटक्रियाः प्रत्यक्षवृत्तयः, *m.* तत्रोत्(त्क?)टक्रियाः *bi.* तत्रोत्कक्रियाः 5. *bi.* om एव after शब्देषु; *a. b. d. m* as in the text add it. 8. *d.* om. इति before उच्यन्ते 13 *m* अत्र for तत्र, and उपेक्षितव्यम् for उपेक्षितव्यम् 14. *m.* कल्पम् for कल्प्यम्, अपरिसमाप्ताता for अपरिसमाप्ता, हुणादयः for ह्युणादयः, and प्रतिजानीते for °तिजानते. 15. *d.* appears to read पाठसिद्धिरेव द्रष्टव्या ?; *m.* adds सर्वे after हि, and reads शब्दः for शब्दाः ?. *d.* adds between यथा and ध्ययनमेव ( probably introduces in the body of the comm. a marginal note occuring in its orginal )—विकृतप्रत्यये दोषः शास्त्रीयः शब्द इष्यते । स्वदेशिकदर्भिश्च स्वदेशे स पुनस्त्रिधा ॥ १ ॥ अन्वयपोगनिर्योगयोगाद्यादेशिधा द्विधः । ते च धुन्नादि-भूतादिस्वरूपाश्च यथाक्रमम् ॥ २ ॥ शुद्धान्मूलकमिश्रभेदैर्यौगिकत्रिधा । ते च भ्रान्तिस्तु-स्वार्थिके ....?.

---

1. I take the liberty of adding निघण्टव उच्यन्ते after टकारं कृत्वा on the analogy of the sequel. Otherwise, I fear, the sentence remains incomplete. The whole para appears to be in an unsatisfactory condition.

2. and 11. For the लक्षण See Nir II. 1.

9. The Kārikā occurs in the Kās'ikā on पृषोदरादीनि यथोपदिष्टम् । ( *Pāṇ.* VI. 3. 103. )

भिव्याहारानभिघातायेति हि लक्षणविदो मन्यन्ते । **इत्यौपमन्यवः** । आचार्यो मन्यत इति वाक्यशेषः । उपरतमन्युरुपमन्युस्तस्यापत्यमौपमन्यवः । कीर्तिप्रथनार्थमौपमन्यवग्रहणम् ।

**अपि वाहननादेव स्युः समाहृता भवन्ति** । अपि वैवं यथोक्तम् । अपि वैवमन्यथा निघण्टवः स्युः । कथमिति । आहननादेव । न निगमनादित्यभिप्रायः । 5
विद्यमानमपि निगमनमविवक्षितमेतस्मिन्पक्षे । अनेकक्रियायोगेऽपि हि सति कांचिदेव क्रियामङ्गीकृत्य नामधेयप्रतिलम्भो भवति । तदुत्तरत्र वक्ष्यामः । आह । किमेतेभ्य आहृतमिति । उच्यते । **समाहृता भवन्ति** । समः स्थाने नीत्येव नियुक्तः । दर्शयिष्यति चायमुपसर्गव्यत्ययं 'निरित्येष समित्येतस्य स्थाने' इति । आङविद्यमान एवाभ्याहृतो मर्यादार्थप्रकाशनाय । हन्तेः पाठार्थे वर्तमानस्यानेकार्थत्वाद्धातूनां वर्णव्यापत्त्यौच- 10
शब्दवत् हकारस्थाने घकारः । अथ कोऽर्थः । एतस्मिन्पञ्चाध्यायीसंग्रहे मर्यादया पठिता ह्येते भवन्ति तस्मात्समाहृताः समाहन्नेव एते सन्त उपसर्गव्यत्ययोपसर्गाध्याहारवर्णव्यापत्तिभिर्निघण्टव इत्युच्यन्ते । प्रसिद्धश्च पाठार्थे हन्तेः प्रयोगः । एवं हि वक्तारो भवन्ति 'ब्राह्मण इदमाहतम्' 'सूत्र इदमाहतम्' इति । अर्थप्राधान्यादर्थनिर्वचनवशेन शब्दविपरिणामोऽयं प्रदर्शितः । 15

**यद्वा समाहृता भवन्ति** । पूर्ववदेवोपसर्गव्यत्यय उपसर्गाध्याहारोऽत्रापि । धातुस्तु हरतिरत्र । यद्वस्मादित्यर्थः । यस्माद्वा एते समाहृता भवन्ति छन्दोभ्यस्तस्मात्समाहरणक्रियायोगात्समाहृतेव एते समाहृताः सन्तः पूर्ववदेवोपसर्गव्यत्ययादिक्रमेण निघण्टव इत्युच्यन्ते । एतस्मिन्नपि निगमनसमाहननक्रिये निघण्टुषु विद्यमाने अप्यविवक्षिते कृत्वा समाहरणक्रियायोगहेतुको नामधेयप्रतिलम्भ उक्तः । एवमेष निघण्टुशब्दो गमेर्नैकोप-20
सर्गोद्धन्तिहरतिभ्यां वा द्व्युपसर्गाभ्यां निरुक्तः ।

---

1. *a. b. m.* add एवमौपमन्यव again before आचार्यो, *d.* मन्यत only instead. 6. *a. b. d. m.* add हि after विद्यमानमपि. 9. *d.* पद्माहृतो for एवाभ्याहृतो. 10. *b.* वर्णव्यापत्त्या for वर्णव्यापत्त्या. 11. *a. b. d. m.* add तकारस्य दकारः after घकारः, *d.* हकारस्य स्थाने for हकारस्थाने, *bi.* as the text above. 13. *m.* om. इति before उच्यन्ते. 14. *m.* ब्राह्मइदमाहतं? *bi.* ब्राह्मणे इदमाहतम्? 19. *m.* reads गमन? for निगमन?; *a.* विद्यमानेऽप्यविवक्षिते?, *b m.* विद्यमाने अयविवक्षिते ?, *bi.* विद्यमाने अर्थविवक्षिते. 21. *a. d* हन्तिहरतिभ्यां वा द्युपसर्गाभ्यां, *b.* द्व्युपसर्गाभ्यां, *m.* द्युपसर्गाभ्यां, *bi.* न्युपसर्गाभ्यां.

---

7. उत्तरत्र etc., *vide* Nir. I. 12.

आह । किमयं पुनरतिमहान्यत्न एकस्मिन्नभिधानेनेकधात्वर्थनिर्वचनकृत इति।
उच्यते । इह नावत्सर्वाण्याख्यातजानि नामानीति सिद्धान्तः । सत्याख्यातजत्वेभिधे-
यस्था या क्रिया लक्ष्यते तदभिधानसमर्थे परोक्षवृत्तौ वा तदभिधायिनि रूढिशब्दे वा
धातुरुत्प्रेक्ष्यते स च पुन: स्वरवर्णक्रियासामान्येन । तत्रैव सति रूढिशब्दे यावन्तो
5 धातव: स्वलिङ्गं रूढिगतं दर्शयन्ति तावतः संगृह्य स रूढिशब्दो निर्वाच्यः । किं कार-
णम् । विशेषलक्षणव्यवस्थाभावात् । नहि तत्र विशेषलक्षणव्यवस्था काचिदस्ति
ययैकोवतिष्ठेतान्ये व्यावर्तेरन् । अपि चोक्तं वार्तिककारेण

" यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् ।
अर्थश्चाप्यभिधेयस्थस्तावद्भिर्गुणविग्रहः ॥ "

10 इति । रूढिशब्दगतास्ता च धातूनां रूढिशब्दवाच्येर्थे क्रियायोगे सत्येतत् । अभावे तु
क्रियाया रूढिशब्दे वर्तमानमपि धातुलिङ्गमकिंचित्करम् । स एव क्रियाभावस्तदाश्रय-
निर्वचनव्यावर्तको भवति । ता एतास्तिस्रः क्रिया निगमनसमाहननसमाहरणाख्या निघ-
ण्टुषु विद्यन्ते । तदभिधायिन्यपि च रूढिशब्दे निरुच्यमाने गमिर्हन्तिर्हरतिश्चाहंपूर्विकया
संनिपत्य वदन्ति ममानुरूपं मयैतं निर्ब्रूहि मयैतं निर्ब्रूहीति । गमिस्तत्र गकारमात्मीयं
15 व्यापदं मन्यते घकारम् । तथा हन्तिहरती स्वकारं व्यापदं घकारं मन्येते । तस्मादय-
मनेकैर्धात्वर्थैर्निघण्टुशब्दो निरुक्त एवजातीयाभिधाननिर्वचनप्रदर्शनाय ॥

**तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च
तानीमानि भवन्ति** । इहैतावदेवोक्तं समाम्नायो निघण्टव इति । समाम्नायशब्द-
पर्यायप्रसक्तस्य च निघण्टुशब्दस्य व्युत्पत्तिरुक्ता । न तु निघण्टुशब्दस्यार्थतस्त्वमवधा-
20 रितं तदवधार्यत इति पर्यनुयुक्तस्तच्छब्द: । किं पुनस्तदिति । **यान्येतानि चत्वारि
पदजातानि** या एताश्चतस्रः पदजातय: । क्व । लोके वेदे च । कतमानि तानि।

1. *m.* °मिधानेकधात्व°, *a. d* °निर्वचने कृत.   3. *m. b* om. या before क्रिया; *a. b m.* °समर्थपरो°, *b₁ d* °समर्थे परो°; *a* तावद° for वा तद° of *d. m. b. b₁.*, *a. d. b₁* om. वा before धातु°, *m.* as text above, *b.* °शब्देन for °शब्दे वा.   4. *d.* रुत्प्रेक्ष्यते, *a b. m* रुत्प्रेक्षते, *b₁.* रुपकृत.   5 *b.* स्व स्वं लिंग, *a. m. b₁* स्वलिंग, *d* स्व लिंग; *b₁.* वर्णयन्ति for दर्शयन्ति, *b₁.* तावन्तः; *b.* om स before रूढिशब्दो.
7. *a. d.* read as text, *b. m* ययैको व्यवतिष्ठ (ष्ठे *m.*)तान्ये, *b₁.* योपमेकोव-तिष्ठेतान्ये   8 *a. d* यावतोमेव ?, *b* यावत्समेव ?, *b₁. m* as text.   10. *m.* रूढिशब्दवाक्येऽर्थे ?; *a.* तक्रियाया for तु क्रियाया.   12. *a d* om. ता before एता; *m. b₁.* read it.   14. *b. m.* om मयैत निर्ब्रूहि ( *1st* ); *b. m* गमिस्तावदत्र, *a. d. b₁*, as text.   18. *m.* इहैतावता तदेवोक्त ?

8. The quot. occurs in Brihaddevatā II. 102. But वार्तिककार means कुमारिलभट्ट probably.

**नामाख्याते चोपसर्गनिपाताश्च** । किं तेषामिति । इमानि चत्वारि पदजातानि
सन्ति एतस्मिञ्शास्त्रे । किमिति । निघण्टुसंज्ञानि भवन्ति । नित्यमेवानुविधीयमानानि
भवन्तीत्याह । न कदाचिदपि न भवन्ति नित्यं भवन्त्येवेत्यभिप्रायः । **चत्वारी**ति
चतुर्ग्रहणमवधारणार्थम् । नैकं पदजातं यथार्थः पदैन्द्राणामिति । नापि द्वे यथा
सुबन्तं तिङन्तं च । नापि त्रीणि निपातोपसर्गावेकतः कृत्वा । नापि पञ्च षड्वा यथा 5
गतिकर्मप्रवचनीयभेदेनेति । **पदजातानी**ति पदगणा इत्यर्थः । जातशब्दो हि गणे
प्रसिद्धः । तद्यथा गोजातमश्वजातमिति । तद्वदिहापि । तत्र नामपदगणः स्त्रीपुंनपुंसक-
विभागेन । तथाख्यातपदगणः कर्तृवचनभाववचनकर्मवचनप्रविभागेन । तथोपसर्गगण
आङादिः । तथा निपातगण इवादिः । एवमभिप्रेत्योक्तं **चत्वारि पदजातानी**ति ।
अत्र नामाख्यातयोः पूर्वमभिधानं प्राधान्यात् । अप्राधान्यादुपसर्गनिपातानां पश्चात् ।10
उभे अपि नामाख्याते निपातोपसर्गनिरपेक्षे अपि सती स्वमर्थं ब्रूतः । न तूपसर्ग-
निपातानां नामाख्यातनिरपेक्षाणामर्थोऽस्ति । वक्ष्यति हि ' न निर्बद्धा उपसर्गा अर्थान्नि-
राहुरिति शाकटायनः ' इति । वाच्येन चैते अर्थेनार्थवती द्योत्येनोपसर्गनिपाता इति वा
प्राधान्यम् । ' नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति ' इति । तस्माद्युपपन्नं
भवति प्राधान्यान्नामाख्यातयोः पूर्वमभिधानमप्राधान्याच्च पश्चादुपसर्गनिपातानामिति ।15
नामाख्याते इतीतरेतराकाङ्क्षित्वमुभयोर्नामाख्यातयोः समासेनाभिधानम् । कथमितरे-
तराकाङ्क्षित्वमिति । यज्ञदत्त इति हि नामशब्दस्तावदेव साकाङ्क्षो भवति यावद्
पचतिपठतीत्याद्याख्यातशब्देन निराकाङ्क्षीक्रियत इति । तथा पचतीत्याख्यातशब्दस्ता-
वदेव साकाङ्क्षो भवति यावन्न यज्ञदत्तशब्दः । पचति यज्ञदत्त ओदनमितीतरे-

---

1. *a. d.* as text, *b., m. bi* add अपि after चत्वारि. 2. *m.* एतस्मिञ्छास्त्रे. 3. *m.* om. न after कदाचिदपि and adds चत्वारि पदजातानि before चत्वारीति. 5. *d.* तिङन्तं च; *m.* तानि for नापि. 6. *m.* कर्मप्रवचनीयभेदेनेति ? 7.–8 *b.* °नपुंसकलिङ्गविभागेन, *bi. m.* °नपुंसकलिङ्गप्रविभागेन, *a. d.* as text. 8. *m* कर्तृ-वचनकर्मवचनभाववचनप्रवि°; *m.* तथोपसर्गपदगण आङादि निपातपदगणः 11. *b.* समर्थं for स्वमर्थं. 12. *m.* °निपातानामाख्या°. 13. *a b.* इतिचा° for इति वा. 14. *m.* प्राधान्यनामाख्यातयो°. 16. *a. d.* इतरे° for इतीतरे° of *m. bi*; *d.* कथमिती-तराकाङ्क्षित्वमिति. 18. *m.* इत्याख्यातशब्दैः and adds च after तथा. 19. *m.* यो यत्र for यावन्न; *d.* om. पचति.

---

12. For the quot. *vide* Nir. I. 3.

14. For the quot. *vide* below Nir. I. 3.

16. I believe we should read here °काङ्क्षित्वादुभयो° instead of °काङ्क्षि-त्वमुभयो°. But all Mss. read as text.

तराकाङ्क्षित्वमुभयोर्नामाख्यातयोः । समानकार्यत्वं चैतयोर्लक्ष्यते वाच्येनार्थेनार्थक्यत्वमित्यतः समस्येते नामाख्याते इति । नाम्नः पूर्वनिपातोऽल्पाच्तरत्वात् । नामपदवाच्यार्थाश्रयक्रियोपलक्ष्यत्वादाख्यातस्य पश्चान्निपातः । उपसर्गनिपाता इत्युभयेषामुपसर्गनिपातानां नामाख्यातयोरर्थविशेषद्योतकत्वात् समानकार्यत्वमित्यतः समस्यन्ते । आख्यातसहयोगित्वादुपसर्गाणामाख्यातानन्तरं पाठः परिशेषाणां निपातानां पश्चादपरिमिताश्च निपाता इति ॥

**तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तान्यपि यानि निघण्टौ उक्तानि ।**

**तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति । तत्र ।** तस्मिन्नृग्वेदप्रसिद्धे पदचतुष्टये निघण्टुशब्दसमानसंज्ञोपलक्षिते ये तावन्नामाख्याते तयोस्तावदेतल्लक्षणं प्रदिशन्ति । कतमत् । यदेतद्वक्ष्यमाणमित्यभिप्रायः । **प्रदिशन्ति ।** प्रविभज्येदं नाम्नां लक्षणमिदमाख्यातस्येत्येवं दिशन्त्युपदिशन्ति आचार्या इति वाक्यशेषः । आह लक्षणोपदेशः कस्मात् । अनुक्रमणेनैव सिद्धत्वात् । अनुक्रमणेनैव हि वक्ष्यति 'इमानि पृथिवीनामधेयान्येकविंशतिः' 'हिरण्यनामान्युत्तराणि पञ्चदश' 'कान्तिकर्माण उत्तरे धातवोऽष्टादश' 'गतिकर्माण उत्तरे धातवो द्वाविंशशतम्' इति । तत एव विज्ञास्याम इमानि नामानीमान्याख्यातानीति । तस्मादयमनर्थको लक्षणोपदेशः । नानर्थकः । कस्मात् । व्यापि हि लक्षणं समाम्नातान्यसमाम्नातानि च व्याप्य वर्तते । वस्तुनस्तूक्तमनुक्रमणादेव विज्ञास्याम इति । अत्र ब्रूमः । निर्देशोऽसौ न हि लक्षणम् । निर्देशश्च परिच्छिन्नविषयः । स तर्हि किमर्थ इति । शास्त्रे स्वस्वभावोपप्रदर्शनार्थः । तस्मादसमाम्नातार्थोऽयमादितो लक्षणोपदेशो युक्त इत्युपपन्नम् ।

आह । तात्पर्येणैवेदमन्तरेण समाम्नातवदसमाम्नातानि कस्मान्नोपदिश्यन्ते । अपि च तथा सूपदिष्टानि भवन्तीति । उच्यते । तथा ह्युपदेशगौरवं प्रसज्येत ग्रहणशक्तिहानं चापि । तथा चोक्तम्

---

1. [illegible] *d* वक्ष्यते for लक्ष्यते 3. *bi* नामपदवाच्यार्थाश्रय°; *m.* आख्यानार्थस्य for आख्यातस्य 4 *m.* समस्यते for समस्येते. 11 *m* om हि, before वक्ष्यति; *a d* लक्ष्यति for वक्ष्यति. 13 *bi* गतिकर्मण; *a b d. m. bi.* द्वाविंशं शतम्, but cf. Nir III 9 14 *m* इमानि नामान्याख्यानीति 15. *a.* स्यात for कस्मात्; *bi* अपापि for व्यापि, *bi* समाम्नातान्यसमाम्नातानि; *d.* व्याप्या for व्याप्य. 16 *b* तत्र for अत्र. 17 *m* हि for तर्हि 18. *m* लक्षणोपदेशोपयुक्त इति I, *d* लक्षणोपदेशोऽयुक्त I 19 *bi.* °समाम्नानानि. 20 *a. b d.* [illegible] text, *m. bi.* भवति for प्रसज्येत; *m.* °शक्तिहीनं. 21. *bi* om. तथा after अपि which it connects as अपि चोक्तम् and not with the last sentence as in the text.

---

2. For this reason of the पूर्वनिपात *vide* Pān. II. [illegible] 34

11.-13. For the quotations, *vide* Nir. II. 7, 10; and III. 9; also Nigh I, 1, 2, and II. 6, 14.

"ऋषयो ह्युपदेशस्य नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥"

इति । तस्मादुपदेशगौरवभयाद्ग्रहणशक्तिहानदोषाच्च समानलक्षणोपदेशः क्रियत इति ।

आह । किं पुनस्तल्लक्षणमिति । उच्यते । "**भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि** । नामपदवाच्यार्थाश्रयक्रियाव्यङ्ग्यो भावः पाकरागत्यागाख्यः । स 5 यत्र प्रधानं गुणभूता क्रिया तदिदं भावप्रधानम् । किं पुनस्तदिति । आख्यातम् । आख्यायतेनेन गुणभावेन वर्तमानानेककारकप्रविभक्ता स्फुरमाणेव प्रधानद्रव्यभावाभिव्यक्त्युन्मुखीभूता क्रिया तस्याश्च प्राधान्येन वर्तमानो भावः स्वात्मलाभप्रधान इत्याख्यातम् ।

आह । कथं पुनर्गुणभूता क्रियेति । उच्यते । तदर्थत्वात् । तदर्था हि सा । भावार्था । भावसिद्ध्यर्थमात्मलाभमनुभूय कारकेषु तण्डुलादौ पाकाख्यं भावमभिनिष्पाद्यावसि- 10 तप्रयोजनैकपद एव तिरोभवति । यस्य च यदर्थं आत्मलाभस्तत्तद्गुणभूतं भवति । भावसिद्ध्यर्थश्च क्रियाया आत्मलाभस्तस्माद्गुणभूतेति गम्यते । भावसिद्ध्यैव चानुमीयते क्रिया परोक्षापि सती ।

आह । कथं पुनः परोक्षा क्रियेति । उच्यते । न हि सेन्द्रियाणामन्यतमेन स्वरूपस्था सती कदाचिदपि संनिकृष्यते । किं तर्हि । तदवसाने योभिनिष्पद्यते भावस्तेन लिङ्ग्यते । 15 नूनमभिनिर्वृत्ता क्रिया यया भावोयमभिनिष्पादित इति । नाभिनिर्वृत्ता चेदभविष्यथैव प्राक् क्रियानिर्वृत्तेर्नाभवदयं भाव एवं सांप्रतमपि नाभविष्यत् । अस्ति चायम् । तस्मादभिनिर्वृत्ता क्रियेत्येवमनुमीयते । तदेतदाख्यातं क्रियावाचकमपि सद्भावार्थत्वात् क्रियाया भावप्रधानमुच्यत इत्येवमेके मन्यन्ते ॥

अपरे पुनर्भावप्रधानमाख्यातमिति प्रकृत्यर्थप्रधानमिति मन्यन्ते । प्रकृत्यर्थविशेषणं हि 20 प्रत्ययार्थादय इति । भावः कर्म क्रिया-धात्वर्थ इत्यनर्थान्तरम् । स यत्र प्रधानं गुण-

1. *m.* reads ऋषयोप्युप°; *bi* पृथक्तशः. 3. *m.* °शक्तिहीनदोषाच्च; *b.* सामान° for समान°. 5. *m. d.* °व्यङ्ग्यो for °व्यङ्ग्यो; *m.* पाकयागाख्यः. 6 *m.* प्रवान for प्रधान. 7. *m.* स्फुरमाणप्रधान° ( perhaps better ). 8 *a. b d. m.* as text, *bi.* प्रवर्तमान°; *a d.* स्वात्मलाभ° प्रधान, *bi. m* स्वात्मलाभप्रधान, *b* स्वात्मप्रधानलाभः, *a. d. b. m.* as text; *bi* इत्याख्यातः 11. *bi. m.* °प्रयोजनैकदेश पद, *m d* as text; *a. d.* °लाभस्तद्गुणभूत, *bi.* as text. 14. *d.* माह पुनः कथ. 16. *a.* मूर्तं for नूनं; *bi.* यथा for यया of *a. b. d. m* 17. *bi.* सा for प्राक् of *a d. b m.* 18. *m.* सद्भाव for सद्भावार्थत्वात् 19. *bi.* भाव प्रधान for भावप्रधान of *a. b. d. m.* 20. *bi.* पक्षे for अपरे of *a. b. d*, *m.* पने instead. 21 *m.* इत्यर्थान्तरं for इत्यनर्थान्तरं of *a. d. bi. b.*

1. Sayanâchârya in the introduction to his Bhâshya on सामसंहिता quotes this verse as of पूर्वाचार्याः. His reading is—ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वतः । The second line as above.

भूतानि साधनानि तदिदं भावप्रधानम् । किंपुनस्तत् । आख्यातम् । आख्यायन्ते स्त्रीपुंनपुंसकानि क्रियागुणभावेन वर्तमानान्यनेन क्रिया च तेषामुपरि प्राधान्येन वर्तमानेत्याख्यातम् ॥

अाह । कथं पुनरत्र क्रियायाः प्राधान्यमिति । उच्यते । सा ह्यत्र शब्दवाच्या । 5 अर्थगृहीतानि तत्साधनानीत्यतः प्राधान्यमत्र क्रियायाः । इतश्च प्राधान्यम् । कुतः । विशेषप्रत्ययाधानात् । पचतीति प्रथमपुरुषैकवचनपरस्मैपदान्त आख्यातशब्दो वर्तमानकालकर्तृविषयो यत्किंचिदविवक्षितविशेषमेव पक्त्रादि साधनमात्मन आश्रयभावेनोपलक्षयन्ननेकक्रियाशक्तिमत्यपि पक्त्राद्य साधने पचिक्रियायामेव विशेषप्रत्ययमादधाति । नान्यासु क्रियासु नापि विशिष्टे पक्त्रादौ साधने । यश्च यस्मिन्नर्थे विशेषेण वर्तते शब्दः 10 स एव तस्य प्रधानम् । विशेषेण च क्रियायामाख्यातशब्दो वर्तते गुणभावेन कारकेषु । तस्माद्विशेषप्रत्ययाधानाद्भावप्रधानमाख्यातमित्युपपन्नम् । अपि च क्रियाव्यापारविज्ञानपरतया पृष्टः 'किं करोति देवदत्तः' क्रियाख्यानपरतयैव प्रत्याचष्टे 'पचतीति' । न त्वोदनमिति पूर्वमुक्त्वा ततः पचतीति ब्रवीति ॥

अथ कथमुच्यते भावप्रधानमाख्यातमिति । शृणु । अमूर्ता हि क्रिया निरुपाख्या सा 15 हि कारकैरभिव्यज्यमाना कारकशरीरे वसन्ती शक्यते निर्देष्टुम् । इतरथा ह्यशरीरा सती सा न गृह्येत । अग्रहणे च सति कथमिव निर्दिश्येत । तत्रैव सति कारकसमूहेनाभिव्यज्यमाना क्रिया यस्मिन् साधने विशिष्टमात्मीयं कार्यमारभते पाकाख्यं तदभिधानशब्दोपपदेव साक्षाद्ग्रहणासंभवान्निर्दिश्यते । न ह्यनाश्रिता कदाचिदपि गृहीतपूर्वाकृतिरिति साक्षाद्ग्रहणासंभवः । तस्मादोदनकर्मका क्रिया देवदत्तकर्तृकौदनशब्दोपपदैव 20 निर्दिश्यते ओदनं पचति देवदत्त इति । तत्राविवक्षितस्वार्थ ओदनशब्दः । अपि च क्रियाव्यापारपिपृच्छिषयैव पृष्टः किं करोतीति क्रियाव्यापारमात्रमेव प्रत्याचष्टे पच-

---

2 *d* प्राधान्ये for प्राधान्येन 6 *b₁* प्रथमपुरुषैकवचनान्ते आख्यात°, *a b. d. m* as text, *m* वर्तमानकर्तृविषय. 8. *m* शक्तिमत्यपि, and विशेषेण प्रत्यय for विशेषप्रत्यय. 10 *m* गुणाभावेन°; *b₁* कारके for कारकेषु of all Mss. 12. *m.* क्रियाख्यापानपरतयैव 14 *a b d* निरूपाख्या 15. *b₁* च सन्ती for वसन्ती, *m* वसती ; *b₁*. *m* निर्दिष्टु for निर्देष्टु. 16. *m* गृह्यते for गृह्येत ; *b m.* add तथा before अग्रहणे 19. *a d* ओदनकर्मकाया, *b* °कर्मिका, *m* °कर्मिकाया, *b₁.* °कर्मकार्या. 21. *a d* क्रियाव्यापारपिपृच्छिषयैव पृष्ट किंकरोतीति । क्रियाव्यापा[व्या *d* ]परमात्रमेव प्रत्याचष्टे ।, *b* क्रियाव्यापारपिपृच्छिषयैव पृष्ट° किं करोतीति । क्रियाया व्यापरमात्रमेव प्रत्याचष्टे ।

---

19 I read °कर्मका क्रिया though it is not so read anywhere. The Mss. as well as *b₁*, indicate that there is an original या after °कर्मका, which by itself does not complete the sentence. Hence I guess it must be क्रिया instead.

तीति। ततः किमिति पर्यनुयुक्ते शब्दान्तरेणापाकरोति देवदत्त ओदनमिति । तस्माच्छब्दान्तरवाच्यत्वात् साधनस्य पचतीत्यत्र क्रियैव प्रधानमित्युपपन्नम्। यत् पुनरेतदुक्तमोदनमिति पूर्वमुपन्चेति तत्र ब्रूमः। न हि पर्यनुयुयुक्षां साधनगतां भाविनीमाशङ्कमानः पर्यनुयोगमात्मनो बुद्ध्यवस्थं कृत्वा तदपाकरणार्थमोदनमिति पूर्वं ब्रवीत्येवं तत्रापि द्रव्यविशेषपरिज्ञानार्थो द्वितीयः पर्यनुयोगोनुक्तो द्रष्टव्यः । तस्मात् पचतीति शब्दवाच्यत्वादत्र 5
क्रियायाः शब्दान्तरवाच्यत्वाद्द्रव्यस्य क्रियैव प्रधानमिति । इतश्च न द्रव्यप्रधानमाख्यातम्। एकस्मिन् वाक्ये द्वयोराख्यानयोरसमवायात् । पचतिपठतीत्युभयोः प्राधान्यादितरेतरेण समवायो नास्ति। न हीतरः शब्द इतरत्र गुणीभवति। द्रव्यशब्दे च समवायात्। समवैति द्रव्यशब्देनाख्यातशब्दः । पचति देवदत्त इत्युक्ते पचिक्रियागुणभूतो लक्ष्यते देवदत्तः। तस्मादुपपन्नं भावप्रधानमाख्यातमिति। अपि चोक्तम् 10

"क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यते।
त्रीनत्र पुरुषान् विद्यात्कालतस्तु विशिष्यते ॥"

इति। तत् पुनरेतच्चतुःप्रभेदमाख्यातं भवति । कर्तरि भावे कर्मणि कर्मकर्तरि चेति। पचतीति कर्तरि । भूयते पच्यते इति भावकर्मणोः। पच्यते स्वयमेवेति कर्मकर्तरि । चतुर्ष्वेष्वप्ययथार्थानि द्रव्याण्यप्रधानानीति क्रियैव प्रधानम् । तामभिदधत् 15
तथैव लक्ष्यमाण आख्यातसंज्ञो भवतीत्युक्तम् ॥

आख्यातलक्षणानन्तरं प्रतिज्ञाक्रमं भित्त्वा पूर्वमाख्यातलक्षणमुक्तं पश्चान्नामलक्षणमुच्यते। किंपुनस्तत्। **सत्त्वप्रधानानि नामानि**। लिङ्गसङ्ख्ययोरत्र सद्भाव इति सत्त्वम्। तथा लक्षणोपपत्तेः। तेषु प्रधानं गुणभूता क्रिया नामान्येव तानि। नमन्त्याख्यातशब्दे गुणभावेन नमयन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि। यथैव ह्याख्याते 20
विद्यमानमपि द्रव्यमविवक्षितमेवमिहापि विद्यमानापि क्रियाविवक्षिता द्रव्यपरत्वात्सत्त्वशब्दस्य। तद्विक्रियाजनितमुत्तरकालं क्रियाक्षेपभूतमभिधाय धात्वर्थोसौ व्यावर्तते ॥

---

1. *m.* पर्यनुयुक्तो for पर्यनुयुक्ते, *bi.* पर्यनुयुक्ते; *a.* °णापाकं करोति, *b.* °ण पाकं करोति. 5. *b.* द्रव्यविषयपरिज्ञानार्थो, *m.* द्रव्यविशेषपरिज्ञानार्थे; *a. d.* add अपि after नन्नुक्तः; *d.* पचतीति वाच्यशब्दत्वात् 6. *m.* शब्दान्तरं वाच्यत्वात्तद्द्रव्यस्य, and इतरश्च भावप्रधानं. 8. *d.* नहीतरशब्द इतरत्र 14. *a. d.* भूयते पाते पच्यत इति भावकर्मणोः. 15. *b.* चतुर्ष्वं नविवक्षितार्थानि, *m.* चतुर्ष्वप्यविवक्षितान्यर्थानि; *m.* द्रव्याण्यप्राधान्यानीति for द्रव्याण्यप्रधानानीति. 19. *a. b.* प्रधानगुणभूता for प्रधानं गुणभूता; *a. d.* नमयन्ति, *a.* नामयन्ति also, *bi. m.* नमन्ति. 21. *d.* om. अपि before क्रिया; *m.* विद्यमानक्रिया. 22. *b. m.* तद्वि क्रिया° for तद्विक्रिया° of *a. d. bi.*, *m.* °जनितमनुत्तरकालं; *b. m.* कृतार्थोसौ for धात्वर्थोसौ.

---

11. For quotation *vide* Rik-Prātis'ākhya. II. 12. 8.

आह । कथं पुनर्नाम्नि क्रिया विद्यत इति विद्यमानापि चाविवक्षितेति । उच्यते । प्रकृतिः प्रत्ययो विभक्तिरिति त्रेधा विभज्यमानमेतावदेवैतन्नाम । तत्र प्रकृतिर्धातुरित्येकोऽर्थः । धातुश्च पुनः क्रियावचनः स च नाम्नि विद्यत इति तदभिधेयभूतया क्रियया भवितव्यम् । यथावश्यं यत्रार्थस्तत्र तदभिधायकः शब्दो यत्र शब्दस्तत्र तद्वाच्योऽर्थ इति । संबद्धौ हि शब्दार्थौ वाच्यवाचकत्वेन नित्यमिति । एवं तावत् क्रिया विद्यते । यत् पुनरेतदुक्तं विद्यमानापि क्रिया कथमविवक्षितेति । अत्र ब्रूमः । नाम्नि यो धातुः प्रत्ययोपजनितेन प्रातिपदिकेनाभिभूतक्रियाभिधानशक्तिः प्रातिपदिकान्तर्लीनवृत्तिरेव समर्थमुद्भावयितुमशक्नुवन् प्रातिपदिकार्थमेवानुवर्तमानो द्रव्यप्रधान एव भवतीत्येवं न विवक्षिता क्रिया । सा विद्यमानापि विगृह्यमाणे नाम्नि प्रातिपदिकनिबन्धनादुन्मुच्यमाना द्रव्यगतमर्थं प्रकाशयति न प्राग्विग्रहादिति द्रव्यपरता सत्त्वशब्दस्य गम्यते । तथा चोक्तम्

> " शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते ।
> तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ "

इति । पुनश्चोक्तम्—

> " अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः ।
> तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ "

> " निर्देशः कर्म करणं प्रदानमपकर्षणम् ।
> स्वाम्यर्थोयाधिकरणं विभक्त्यर्थाः प्रकीर्तिताः ॥ "

इति । स्त्रीपुंनपुंसकभेदं निपातोपसर्गाणामपि वा कश्चिन्नामत्वमपेक्ष्य बहुवचनेनोक्तं नामानीति ॥

---

1. *a b. d m* चाविवक्षितेति, *bi.* वा विवक्षितेति. 2. *d* त्रिधा for त्रेधा 3. *d* °त्येकार्थः, 4. *a. b. d. m* तथा for यथा of *bi*, which is preferred as it yields better sense ; *m* तद्वाच्यार्थ for तद्वाच्योऽर्थः. *d. m* om. अपि before क्रिया *bi.* सकृत् प्रयोजयति तेन The reading preferred is met with in all our Mss *m.* अविवक्षिता for न विव°; *m.* °बन्धनान्मुच्य°. 12. *a. d.* प्रदीयते for प्रतीयते 14. *d.* om. इति. 16. *d.* प्राहुर्वेदे ? 18 *b. m.* स्वाम्यर्थोपाधिकरण, *d.* स्वाम्यर्थोधिकरण, *bi* स्वाम्यर्थोऽप्यधिकरणं. We prefer the first as it alone suits the metre

---

12. *Vide* Bṛihaddevatâ I. 42.

15. *Vide* „ I. 43.

अपरे पुनः । भावकालकारकसंख्याश्चत्वार एतेऽर्था आख्यातस्य । तेषां भावप्रधानता भवति । अतो भावप्रधानमाख्यातमित्युक्तम् । नाम्नोऽपि सत्त्वं द्रव्यं संख्या लिङ्गमित्ये-तेऽर्थाः । तेषां द्रव्यं प्रधानमित्यतः सत्त्वप्रधानानि नामानीत्युक्तमेवमेके मन्यन्ते ।

**तद्यत्रोभे भावप्रधाने भवतः** । एवं तावदनयोर्नामाख्यातयोः परस्पराविना-भूतयोः स्वपदार्थातिरेकस्य भावप्राधान्यमेकस्य सत्त्वप्राधान्यम् । अथ पुनर्यत्रैते उभे 5 भवतः । क्व च पुनरेते उभे भवतः । वाक्ये । तत्र कस्य प्रधानार्थः कस्य गुणभूत इति । शृणु । **भावप्रधाने भवतः** तस्य क्रियार्थत्वात् । वाक्ये व्याख्याते प्रधानं तदर्थत्वात् गुणभूतं नाम तदर्थस्य भावनिष्पत्तावङ्गभूतत्वात् । एवं तावदाख्यातं वाक्ये प्रधानम् ।

अथ पुनः कथमभिनिर्वर्त्यमानो भाव आख्यातेनोच्यते । किं वा तदाख्यातमिति । 10 यतो लोकप्रसिद्धैरेवोदाहरति तत्प्रसिद्धत्वाच्छब्दार्थसंबन्धस्य । **पूर्वापरीभूतं भावमा-ख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्** । आनुलोम्यानन्तरं गत्वा-मेकत्वात्पूर्वापरीभूतं पूर्वापरमिव यावन्निर्वर्त्यमानमभिन्नमेकमनेकाम् क्रियास्वात्मावस्थितगुणानदर्शितह-नपूर्वोत्तरपादविहरणाभिभोजनशयनागमनोच्चारणानाद्यान्याश्रित्य तदोपनिर्णीतवन्तोऽभिनि-र्वर्तमानं कर्मोचित् पृच्छति किं करोतीत्यन्य आचष्टे व्रजतीति । अविभक्तकर्तृकं द्विती- 15 यमित्युदाहरणद्वयं भावद्वयोपदर्शनार्थम् । **उपक्रमप्रभृतीति** । उपक्रम आरम्भस्तस्मा-दारभ्यापवर्गपर्यन्तं यावदन्त्या क्रियेत्यर्थः ।

---

1. *a. m.* भावप्रधानं भवति ततो. 2. *m.* om. इति before अतः. 3. *a.* द्रव्यप्रधान for द्रव्यं प्रधानं. 4. *a.* परस्पराविनाभूतयो, *b.* परस्परं विना°, *bl. m.* परस्पराविना°. 5. *a. d.* यत्र ते उभे for यत्रैते उभे, *b.* यत्रैते उभे नामाख्याते. 6. All read प्रधानमर्थः which I change into प्रधानार्थः, as I think the former is ungrammatical. 13. *m.* 'दर्शितहन' for 'दर्शितहन'. 14. *a. b. d. m.* 'पाद' for 'पद' of *bl.* 15. *m.* 'निर्वर्त्यमान' for 'निर्वर्तमान'; *b. d.* करोतीति, *a.* appears to do the same, *bl. m.* करोति; *m.* 'कर्तृक' for 'कर्तृक'. 16. *b.* °द्वयोपदर्श°.

---

3. *a. m.* read भावप्रधानं in L. 1. for भावप्रधानता, and *a.* reads द्रव्य-प्रधानं here for द्रव्यं प्रधानं of all the other Mss. From similarity to द्रव्य प्रधानं here, I am tempted to suggest that भावः प्रधानं in L. 1. is a better reading than the one in the text above, which, however, is retained as it is supported by many Mss.

15. Is it possibly अविभक्तकर्तृकं प्रथमं विभक्तकर्तृकं द्वितीयमिति? All the Mss. and editions read as अविभक्तकर्तृकं द्वितीय, but it hardly makes sense as it stands. Hence the query.

आह। अन्त्यार्थनियो भावनिर्वृत्तिनिर्देशनादन्त्यस्यैव निर्वर्त्यत इति। शृणु। पूर्वाभाव-भावे अन्त्यैव न स्यात्। पूर्वापेक्षं हि तस्या अन्त्यत्वम्। अपि च प्राप्तिफलो हि व्रजतिः। न चैकस्या क्रियायां गमनदेशान्तरप्राप्तिरस्ति। तस्मादुपक्रमाद्याभिः क्रियाभिरापदीपदमि-निष्पाद्यमानो भावोऽन्त्यायामभिसंनिष्ठते। ततः सन्निकर्षे शृणुते न लक्षावन्त्यस्यैव
5 निर्वृत्त इत्यस्ते दृष्टान्तः। अपि च प्रसिद्धमेतदुपक्रमादारभ्य यत्र व्रजितं यत्र व्रज्यते व्रजिष्यमाणं तत्सर्वमेकीकृत्य पदार्थं भवन्ति व्रजति देवदत्त इति। न प्रसिद्धिरपोह्या। यथार्थविज्ञानां [illegible] शब्दानामन्वाख्यानमात्रमेव शास्त्रेण क्रियते नोत्पाद्यन्ते शब्दा नाप्यर्थेषु विधीयन्ते। तस्मात्प्रसिद्धः शास्त्रसमयोऽपि लौकिकप्रसिद्धयैव पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजतिपचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्।
10 तस्मादुपक्रमानेकक्रियाभिर्निर्वर्त्यमानो भाव आख्यातेनोच्यत इति। आह च

" क्रियासु बह्वीष्वभिसंश्रितो यः पूर्वापरीभूत इवैक एव।
क्रियाभिनिर्वृत्तिवशेन सिद्ध आख्यातशब्देन तमर्थमाहुः ॥

इति ॥

मूर्तं सत्त्वभूतं सत्त्वनामभिः। कदाचित्तु तमेव भावं तथैवोपक्रमप्रभृत्यभि-
15 निर्वर्त्यमानमपवर्गपर्यन्तं मूर्तं सत्त्वभूतं सत्त्वरूपिणं लिङ्गसंख्यायुक्तं सत्त्वनामभिराचष्टे। कथम्। व्रज्या पक्तिरिति। तयोरेको विशेषः। कृदभिहितो भावो द्रव्यवद्भवति। सोऽयं प्रयुक्तस्य लक्षणस्य प्रयोगमपेक्ष्य कश्चिदपवादः। आह च

" क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात्।
संख्याविभक्तिव्ययलिङ्गयुक्तो भावस्तदा द्रव्यमिवोपलक्ष्यः ॥ "

20 इति ॥

---

2. *bi.* अन्त्यात्, we read अन्त्यस्ते with *a. b d m*, the reading of *bi.* is however, perhaps better, *a. d.* व्रजि for व्रजतिः, *m.* व्रजति. 3. *bi.* °देशान्तरे प्राप्ति°, we read with *a. b. d*, *m.* has °देशान्तरप्राप्ति°; *bi.* om one इत्य, all others have it. 4. *a. b. d. m* न लक्षावन्त्यस्यैवाभिनिर्वर्त्यते इत्यस्ते, &c., *bi.* न त्वमावन्त्यस्यैव निर्वृत्त इत्यस्ते, &c 5 *a. b d* कृपते for दृष्टान्तः; *a. d. m.* यत्र व्रजितः यत्र व्रज्यते यत्र व्रजिष्यमाणं, *b* reads यत्र व्रजितं यत्र व्रज्यते यत्र व्रजिष्यमाणं. 7. *m* अन्वाख्यानमात्र° 8. *m.* शब्दः for शब्दा; *a. b. m.* प्रसिद्धः शास्त्रसमयोऽपि, *bi.* प्रसिद्धशास्त्र°. 14. *a b d m* om. तु before तमेव; *m.* तथैव for तयैव. 15. *b.* °त्यभिनिर्वर्त्यमानं; *m* adds सन्तं after मूर्तं 16. *a.* तयोरेको for तयोरेको. 17. *b.* प्रयोगमुपेक्ष्य for °मपेक्ष्य. 19. *a.* °वोपलक्ष्य इति, *b.* °वोपलक्ष्य° इति, *d.* द्रव्यमिवोपलक्ष्य इति.

---

11. For quot. *vide* Brihaddevatâ I. 44. It reads इवैक एव for इवैक एव here.
18. For quot. *vide* Brihaddevatâ I. 45. It reads °विभक्त्यव्यय° for °भक्तिव्यय° .

आह । कस्मात्पुनरेक एव भावस्तिङन्तेन कृदन्तेन चान्यथोच्यत इति । उच्यते । शब्दस्वाभाव्यादेते नान्यत्र प्रयोजकमस्ति । अपि चोक्तमस्माभिर्व्यवस्थितानामेव शब्दानामभिधानाभिधेयसंबन्धेनाभिसंबद्धानामेव नित्यत्वाख्यानमात्रमेव क्रियते । नोत्पाद्यन्तेऽर्थेषु वा विधीयन्ते शब्दा इति । तस्या पङ्क्तिस्तूदाहरणद्वयमुक्तप्रयोजनम् ।

**अद इति सत्त्वानामुपदेश** इति । भावविकारः । स च पुनः सत्त्वभूतो ऽनरः । यदन्तरसंबन्धेनैव नाम्नो यत्प्रविशिष्यते तदुच्यते । किं पुनस्तत् । सामान्यविशेषवाचित्वम् । **तत्राद इति सत्त्वानामुपदेशः** । सामान्यत इति वाक्यशेषः । सर्वेषामपि सत्त्वानामव्ययत्वे प्राप्ते लिङ्गाविशिष्टत्वादिदमेवैकमुदाहरणमुपप्रदर्शनार्थम् ॥ 5

आह । विशेषोपदेशः कथमिति । उच्यते । **गौरश्वः पुरुषो हस्तीति** । सत्त्वानां विशेषोपदेश इति वाक्यशेषः । सोपाधिकनिरुपाधिकोपप्रदर्शनार्थमनेकोदाहरणम् । सामा- 10 न्यवृत्त्या विशेषवृत्त्या चोभयथा शब्दः प्रवर्तत इत्युभयमुपदर्शितम् ।

**भवतीति भावस्य** सामान्येनोपदेशः । अत्र हि सर्वेषां सत्त्वादीनामव्ययने प्राप्ते भवतिरेवैक उदाहरणार्थः परिगृहीतः । विद्यमानतामात्रानुवर्तनः सर्वे भवतिशब्दवाच्या अन्याभिर्विशेषक्रियाभिरभिसंबध्यन्ते । तस्माद्भवतीति सर्वक्रियाप्रसवबीजभूतमस्तित्वमात्रमेव निदर्शनेन भवतिशब्देनोच्यत इत्युपपन्नं भवति सामान्यवाचित्वम् । 15 विशेषनिर्देशः कथमिति । उच्यते । **आस्ते शेते व्रजति तिष्ठतीति** । सकर्मकाकर्मकोपदर्शनार्थमुभयथाप्युदाहरणम् ।

---

1. *a.* om. चान्यथोच्यत इति । उच्यते शब्दस्वाभाव्यादेते (through mistake); *b.* adds च again after अन्यथा; *m.* om. उच्यते after इति, and reads कृतेन for कृते. 5. *m.* इति भावविकार by joining the *Pratika*. 6. *d.* पदविशिष्यते; *m.* om. तत् after पुन. 8. *b. m* लिङ्गविशिष्टत्वात् 9. *bi.* adds व्यवसूतम् after उच्यते; *m.* om. कथमिति उच्यते; *bi.* गौरश्वपुरुषो 10. *b.* सोपाधिनिदर्शनार्थ. 12. *b.* सामान्योपदेश. 13. *a.* उदाहरणार्थेस्य for °र्थः; *d.* °मव्ययनप्राप्तौ भवतिरेवैक, *m.* भवतिरेवैक; *a. b. d. m.* विद्यमानता for मानत्व° cf. *bi.*; *d.* °नुवर्तनः for °नुवर्तन्तः. 14. *m.* °संबध्यते, *bi.* सम्बध्यन्ते, *a. b. d.* संबध्यन्ते. 15. *m.* अस्तितत्व° for अस्तित्व°.

---

4. For the प्रयोजन *vide* page 41, l. 15.

10. The sense of the line is not clear. Perhaps the reading of *b.* is better. But the reading of the majority of MSS. is retained.

**इन्द्रियनित्यं वचनमौदुम्बरायणः**। आह। इह तावदुक्तं पदचतुष्टयं भाववचनता द्रव्यवचनता गुणभावः प्रधानभावः पूर्वापरीभावः सामान्यवाचित्वं विशेषवाचित्वमिति नोपपद्यते। कस्मात्। वचनानित्यत्वात्। कः पुनरेवमाहानित्यं वचनमिति। उच्यते। **इन्द्रियनित्यं वचनमौदुम्बरायणः**। इन्द्र आत्मा ■ येन ईयते
5 लिङ्ग्यतेऽनुमीयते ऽस्त्यसावात्मा कर्ता यस्येदं करणं नाकर्तृकं करणमस्तीति तदिन्द्रियम्। तस्मिन्नित्यमिन्द्रियनित्यम्। किं पुनस्तत्। वचनम्। उच्यतेऽनेनेति वचनं वाक्यमित्यर्थः। कतमत्। यदेतन्नामाख्यातोपसर्गनिपातात्मकम्। औदुम्बरायणः। आचार्यो मन्यत इति वाक्यशेषः। उदुम्बरस्यापत्यमौदुम्बरिस्तस्यापत्यमौदुम्बरायणः ॥१॥

**तत्र चतुष्ट्वं नोपपद्यते युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः**
10 **शास्त्रकृतो योगश्च। व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके। तेषां मनुष्यवद्देवताभिधानं पुरुषविद्यानित्यत्वात्कर्मसंपत्तिर्मन्त्रो वेदे ॥**

**षड् भावविकारा भवन्तीति वार्ष्यायणिर्जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति। जायत इति पूर्वभावस्यादिमाचष्टे**
15 **नापरभावमाचष्टे न प्रतिषेधत्यस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं वर्धत इति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानां वर्धते विजयेनेति वा वर्धते शरीरेणेति वापक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं विनश्यतीत्यपरभावस्या-**
20 **दिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति ॥ २ ॥**

² नह। ततः किमिति। उच्यते। **तत्र चतुष्ट्वं नोपपद्यते**। तत्र तस्मिन्वाक्य however नित्ये सति यदेतत्पदचतुष्टयमुक्तमेतन्नोपपद्यते। कस्मात्। शृणु। यावदेव वक्तु- माति°, m श्रोतुश्च श्रोत्रेन्द्रिये वर्तेन तावदेव तदस्तीति शक्यते वक्तुं प्रच्युतं च नास्ति। others have

न त्वसावन्यस्यैव नि॰. *a d* °चतुष्टर। पद° for °वदुक्त पद°; *b m* इद for इह and वजितः यत्र वचनं यत्र m after °दुक्त showing that the sentence ends there. 7. *m* अन्वाख्यातमात्र°- 3 *m* इत्युपपद्यते for इति नोप°. 5 *bi* चास्य° for *bi* प्रसिद्धशास्त्र° 14. *a b m* तस्मिन्निति इंद्रि° for °स्मिन्नित्यमिन्द्रि°. 7. *m*. 15. *b*. °त्यभिनिर्वर्त्यमान; *m* °शास्त्रकृतोपयोगश्च 12. A. Bi complete Khanda 17. *b*. प्रयोगमुपेक्ष्य for °मपेक्ष्य. conclude Khanda 3 after प्रतिषेधति 20. *m* द्रव्यमितोपलस्य इति. om. श्रोतुश्च श्रोत्रेन्द्रिये found in all our Mss.

11. For quot. *vide* Brihad. for पदचतुष्टयं। See below I. 21.
18. For quot. *vide* Brihad p. 258 ( Bomb. Sansk. series. ) °मक्रिम्य° here.

अपि च वाक्यमपि समस्तमुद्भूतं तदिन्द्रिये नावतिष्ठते यदवयवभूतानि पदान्यवस्थितानि परिसंख्यातुम् । न च विनष्टाविनष्टयोः पदयोः सहपरिसंख्यानमस्ति । तस्माद्वचनानित्यत्वात्पदचतुष्ट्वानुपपत्तिरित्युक्तम् ।

किंचान्यत् । **अयुगपदुत्पन्नानां वा शब्दानामितरेतरोपदेशः ।** वाशब्दः समुच्चयार्थो "वा विकल्पोपमानद्वन्द्वसमुच्चयार्थेषु" इति हि निपातविदः पठन्ति । 5 वक्ष्यति चाचार्यः 'वेति विचारणार्थे' इत्युपक्रम्य 'अथापि समुच्चयार्थे भवति' इति । एवं चैतेषामयुगपदुत्पन्नानां शब्दानां वाक्यावयवभूतानां योऽयमितरेतरोपदेश इतरेतरगुणप्रधानभावो नाम आख्यातं प्रति गुणभावेनोपदेश आख्यातस्य च नाम प्रति प्रधानभावेनोपदेशोऽयं च नोपपद्यत इत्यनुवर्तते । किं कारणम् । न हि विनष्टं नाम गुणभावनियमादाख्याते नापि नष्टमाख्यातं प्रधानभावनियमान्नाम्नि । न हि विनष्टाविनष्टयो- 10 रितरेतरगुणप्रधानभावोऽस्ति ।

किं चान्यत् । **शास्त्रकृतो योगश्च ।** यथायं शास्त्रकृतो योगः शास्त्रदृष्टः शब्दस्य शब्दान्तरेण योगः । तद्यथा । उपसर्गस्य धातुना धातोः प्रत्ययेन प्रत्ययस्य लोपागमवर्णविकारैः । अयं च वचनानित्यत्वान्नोपपद्यते । किं कारणम् । अयुगपदुत्पत्तौ हि सत्यां धातुरुच्चारितो विनष्टः स कथमुपसर्गेण योक्ष्यते प्रत्ययेन वा । न हि विनष्टाविनष्टयो- 15

---

1. *bi.* °दिन्द्रियेणावतिष्ठते, and adds वाक्य again after अपि.  2. *m.* om. पदयोः, and adds इति after अस्ति.  4. *a.* युगपदु° for अयुगपदु°; *b.* किं चान्यत् for किंचान्यत्.  5. *a. b.* °द्वन्द्वे for °द्वन्द्व° of *d. m. bi.*; *b.* समुच्चयार्थेष्विति for °र्थेष्विति.  6. *b. m.* add चाचार्यो before वक्ष्यति; *m.* अपवादे for अथापि.  9. *a.* om. आख्यातस्य च नाम प्रति प्रधानभावेनोपदेशः ( perhaps error of copy ).  10. *d. m.* विनष्टं for नष्टं.  12. *bi.* किं चान्यत् for किं चा° of *a. b. d. m.*; *m.* शास्त्रदृष्टस्य, and adds सह योगः after योगः.  14. *bi.* om. च after अयं, all the Mss. have it.  15. *bi.* स कथमु° for स कथमु° of *a. b. d. m.*

---

1. All read तद् after उद्भूत. Should we read सत् instead?

5. It is not clear who are referred to by निपातविदः. Whence this text is quoted is not certain. Similar to it are the following quotations from the Sanskrit glossaries:—

वा स्याद्विकल्पोपमयोरेवार्थे पादपूरणे । समुच्चये च ( Quoted from मेदिनी in the रामाश्रमीटीका of अमरकोश, but not found in Jîvânanda's edition of मेदिनी ).

वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये । इति विश्वः ( Râmâs'rama's Tîkâ on अमरकोश ).

6. For the senses of वा *vide* Nir. I. 4.

योगोस्ति। तस्मात्र एष नामाख्यातयोरितरेतरगुणप्रधानभाव उपसर्गनिपातानां नामाख्याताभ्यां योगो यत्र पदचतुष्टमुक्तं सर्वमेतदसम्यगिति ।

युगपदुत्पन्नानामयुगपदुत्पन्नानामित्येवमारभ्यमाणयोर्वान्वययोरनयोरन्यो व्याख्यामार्गो भवति। नोपपद्यते । युगपदुत्पन्नानामयुगपदुत्पन्नानामित्युभावपि व्याहारौ प्रामुत.।
5 समानसंदिग्धत्वात् । इन्द्रियनित्यत्वात्पदचतुष्टानुपपत्तिरित्युद्धार्य मनाशङ्काद्वारेणैतदवतार्यते।
युगपदुत्पन्नानामिति । अथ मतम् ।

"अविचालिन एवैते कूटस्था अविनाशिनः ।
शब्दास्ते तु कल्पान्ते........." ॥

तस्माद्व्याप्तिस्याद्विशीर्णेष्वभिधेयेष्वाभिधानेषु कारणभावमानयमानेष्वाश्रयाभावादेवाव-
10 स्थातुमशक्नुवन्तोभिधेयाभिधानसहिता एव कारणात्मभावमधिकमनुभूयाभिसंभवत्कल्पे कल्पादावन्यकल्पविशिष्टकर्मनिर्जितकार्यकारणसर्वभूतसाधारणात्मभूते हिरण्यगर्भे विपर्तमाने तद्बुद्धिमाश्रयं प्राप्य तेनैव सह युगपदेवाभिव्यज्यन्ते विशेषात्मलाभाय शब्दा इति । अत्र ब्रूमः । एवमप्येतेषां युगपदुत्पन्नानां युगपदुत्पत्तावपि सत्यां यद्यपि पदचतुष्टं प्राप्नोत्येव सदावस्थितानां तथापीतरेतरोपदेश इतरेतरगुणप्रधानभावश्च न प्राप्नोति । नहि युगपदु-
15 त्पन्नयोर्गोविषाणयोरितरेतरगुणप्रधानभावोस्ति । किं चान्यत् । कूटस्थेषु चाविचालिषु

---

1 *b₁* पत्र for पत्र of *a b d m.*, *m* इतरेतरं गुणप्रधानभावोपसर्ग°. 2. *b₁* °योगे for °योगो, and °चतुष्टय° for °चतुष्ट° of all our Mss 3. *a. d* om °मयुगपदुत्पन्नानां° (perhaps an error); *b₁* om. °रनयो° of *a. b. d. m.* 4. *b* इत्युभावपि पाठो व्यापारो प्राप्तुत., *m.* agrees with *b.* but reads व्यापारं for व्यापारो. 5. *a. d.* मनाशङ्कापद्वारेणैतदवतार्यते, *m* °त्युद्धार्यमाणद्वारे° and °दवतार्यते We prefer the reading of *b.* and *b₁* correcting the latter where it is badly printed. 7 *d* °नाशनः for °नाशिनः. 9. *b.* तस्माद्व्याप्ति° for तस्माद्व्याप्ति°. 10. *b₁*. अशक्नुवन्त. भावि°, *a b d. m.* °कुवन्तोऽपि; *b₁*. °संभव° for °संभव° of *a b. d. m.* 11 *m.* °यत्रकल्प° for °अन्यकल्प°; *b* °करण° for °कारण°. I almost believe there ought to be °निर्मित° for °निर्जित°. 13. *a* °चतुष्ट°, all others °चतुष्टय° here, *m.* प्राप्नोत्येव for °त्येव. 15 *m.* इतरेतरप्रधानभावोऽस्ति; *b* किं चान्यत्.

---

7. We print this quotation as we find it in our Mss. It is doubtful whether it is accurate and correct especially in the latter incomplete half. We cannot trace it to its source. However it may be observed that the attributes कूटस्थ and अविचालिन् are often applied to शब्द in the Mahâbhâshya (See p. 7 and p. 136 of the Bombay Sanskrit series edition of it.)

14. च after इतरेतरगुणप्रधानभावः seems to be superfluous.

नित्येषु शब्देषु य एष शास्त्रकृतो योगः स एष नोपपद्यते। किं कारणम्। अयुक्तो हि युज्यते। नित्यं युक्ता हि धातव उपसर्गैः प्रत्ययैश्च। प्रत्ययाश्च लोपागमवर्णविकारैरिति। तस्मान्नित्यपक्षेपि वचनस्य यदेतदुपवर्णितं गुणप्रधानभावादि पदचतुष्टयमधिकृत्य सर्वमेतदसम्यगिति॥

**व्याप्तिमत्त्वात्तु शब्दस्य।** उच्यते। सर्वमेतदुपपद्यते। कस्मात्। व्याप्तिमत्त्वाच्छब्दस्य। तुशब्दः पक्षव्यावृत्तौ। व्यापनं व्याप्तिः सा यस्मिन्नस्ति सोयं व्याप्तिमाञ्शब्दः। तद्भावो व्याप्तिमत्त्वम्। तस्माद् व्याप्तिमत्त्वाच्छब्दस्य। सर्वमेतदुपपद्यत इति वाक्यशेषः। आह। कथं पुनर्व्याप्तिमाञ्शब्द इति। शृणु। शरीरे ह्यभिधानाभिधेयरूपा बुद्धिर्हृदयान्तर्गताकाशप्रतिष्ठिता। तयोरभिधानरूपाभिधेयरूपयोर्बुद्ध्योर्मध्येभिधानरूपया शास्त्राभिमतप्रयोजनविजिज्ञापयिषया पुरुषेण तदभिव्यक्तिसमर्थेन स्वगुणभूतेन प्रयत्नेनोदीर्यमाणः शब्द उरःकण्ठादिवर्णस्थानेषु निष्पद्यमानतया पुरुषार्थाभिधानसमर्थवर्णादिभावमापद्यमानः पुरुषप्रयत्नेन बहिर्विनिक्षिप्तोविनाशिनि व्यक्तिभावमापन्नः श्रोत्रद्वारेणानुप्रविश्य प्रत्याय्यस्य बुद्धिं सर्वार्थरूपां सर्वाभिधानरूपां व्याप्नोतीत्येवं व्याप्तिमाञ्शब्दः। आह। ततः किं यदि व्याप्तिमाञ्शब्दः। उच्यते। यदि नित्यो यद्यनित्यः पदचतुष्टयादि सर्वमुपपन्नम् एव। किं कारणम्। न ह्यसंव्याप्य

1. *a. d.* °योग एष नोपपद्यते; *b* अयुक्तो for °क्तो. 2. *a. d m* नित्ययुक्ताश्च धातवः &c., *b* also does so but adds हि after च. 3. *bi.* तदे° for यदे° of *a. b. d. m.*; *a. d.* °र्णितं गुणप्रधानभावविषयं चतुष्टयमधिकृत्य. 6. *b. d. m.* तुशब्दः पक्षव्यावृत्तौ after शब्दस्य, *a.* तुशब्दः पक्षव्यापत्तौ. *bi.* om. it. 8. *m.* om. पुनः after कथं. 9. *a. b. d. m.* °तिष्ठिता तयो° for °तिष्ठितयो° of $b_1$; *a. d.* तयोरभिधानाभिधेयरूपयो°. 10. $b_1$. adds बुद्ध्या not found in *a. b. d m.* before पुरुषेण, *b.* °सामर्थ्येन for °समर्थेन. 11. *a. b* °दीर्यमाणादिषु सत्पुर.°, *d.* °दीर्यमाणासत्पुरः°; *b.* °कण्ठादिषु वर्णस्थानेषु, *a. d.* निष्पद्यमानस्ततया, *b.* निष्पद्यमानतया, *m.* निष्पद्यमानस्तया. The last two make some sense. *bi* has निष्पद्यमानस्तया. We prefer the reading of *b.* as it makes the best sense. 12. *m.* पुरुषयत्नेन; *b.* विनाशिव्यक्तिभाव° for अविनाशिनि व्यक्ति°. 13. *a. d. m* प्रत्याप्यस्य, *b.* प्रत्यायस्य, *bi* प्रत्याप्यास्य, *m.* सर्वार्थरूपा सर्वाभिधानरूपा. 14. *m.* यद्व्याप्तिमान् for यदि व्याप्तिमान्. 15. *a. b. d. m.* यद्यनित्यः for यदा नित्य of $b_1$.

15. We adopt the reading of all our Mss. in preference to that of $b_1$. as it appears that here an answer is made to the objections based on both the suppositions of अनित्यत्व and नित्यत्व of शब्द. The answer to the former is first given and to the latter the reply is given below, see next page, L. 15 et seq.

पुरुषस्य बुद्ध्यवस्थमर्थप्रत्ययमादधीत । न चानवस्थितो व्याप्नुयात् । ततश्च नित्यम् । स
शब्दः स्वमर्थमभिदधत् स्वक्रियाप्रदेशोपजनितेनाभिधानेनाख्यातमित्येवमादिना स्वमा-
ख्यानमभिसंबध्य तिरोभवितुमुपक्रमते विनाशं चोपैति । तस्य स्वदेशोपजनितैराख्याता-
दिभिः स्वप्रदेशविशेषानुस्मृतिपूर्वकं परिसंख्यानमुपपद्यत एव । तस्मात्सम्यगेवोक्तम् ।
5 यत्पुनरेतदुक्तं न हि विनष्टाविनष्टयोः परिसंख्यानमस्तीति । अत्र ब्रूमः । पुरुषप्रयत्नोपज-
निताद्वक्त्रोद्धातात्स्वरस्यार्थप्रत्ययमाधाय शब्दव्यक्तय एव ध्वंसन्ते न तु शब्दाकृतयः ।
तास्तु तयाभिधानशक्त्या बुद्धिद्वारेणावस्थिताः स्वानर्थान् प्रकाशयन्त्यः स्थिता एव
भवन्ति । तासु साक्षात्पदार्थपरिसंख्यानं वर्तमानामितरासु विनाशिनीषु व्यक्तिषु लक्षणयो-
पचर्यते । तस्माद्व्याप्तिमत्त्वाच्छब्दस्य पदचतुष्टयादि सर्वमुपपद्यत एव । व्याप्तिमत्त्वादित्य-
10 नेनैवेतरेतरोपदेशः प्रत्युक्तः । शास्त्रकृतो योगश्च । नामाख्यातपदरूपे बुद्धितत्त्वे सत्त्व-
क्रियाविषये गुणप्रधानभावेनावतिष्ठेते । तयोर्गुणप्रधानभावे सति तच्छब्दे लक्षणयोप-
चर्यते । तथा च धातुरूपा बुद्धिस्तदर्थेया संयुज्यते । बुद्धिरेव हि धात्वादिरूपेण विपरि-
णममाना शास्त्रेण संस्क्रियते । तस्यां संस्क्रियमाणायां शब्दे संस्कारोपचारः क्रियते ।
तदभिधायकत्वाच्छब्दस्य । तत्र यदुक्तं वचनानित्यत्वादितरेतरोपदेशः शास्त्रकृतश्च योगो
15 नोपपद्यत इत्येतदयुक्तमिति । नित्यत्वपक्षेपि युगपदुत्पन्नानां गुणप्रधानभावो गोविषाण-
वन्नास्तीति यदुक्तमनैकान्तिकोऽसौ दृष्टान्तः । दृष्टो हि युगपदुत्पन्नयोरेककाले राजपुत्रा-
मात्यपुत्रयोर्गुणप्रधानभावः । तत्र यदुक्तं युगपदुत्पन्नानामितरेतरोपदेशो न प्राप्नोतीत्ये-
तदयुक्तं व्याप्तिमत्त्वाच्छब्दस्य सर्वमुपपद्यत इति तदेव सम्यगिति ।

---

1 *b. m.* add बुद्धि after पुरुषस्य, *d.* अर्थ प्रत्यय° for अर्थप्रत्यय°. 2 *a. d. m* शब्दस्तं तमर्थमभि° for शब्दः स्वमर्थमभि°; *a. d.* °पजनितेनानेनाभिधा°. 3. *b.* विनाशं चोपैति, *bi.* विनाश चोपैति. *a. d. m.* चोपैति. 7. *a. d.* तास्तु सूर्योभिधानशक्त्या बुद्धि-द्वारेणावस्थिताः स्वानभिधेयान् प्रका°. 9. *a d. m.* °दित्येतेनैवे° for °दित्यनेनैवे°. 10. *a. d.* शास्त्रकृतश्च मो योग ; *b.* नामाख्याने पदरूपे and सर्व° for सत्त्व°, *bi.* °रूपबु-द्धित्वे and °नातिष्ठेन, *a. d. m.* as text. 11 *b.* तच्छिष्टे for तच्छब्दे; *a.* तच्छब्द-लक्षणया व्याप्तिमुपचर्यते, *d.* तच्छब्दे लक्षणया व्याप्तिमुपचर्यते. 12. *b.* तदर्पनया for तदर्थेया, *m.* adds संस्क्रियमाणायां after तदर्थेया. *m.* °रेव for बुद्धिरेव, *b* om. हि after बुद्धिरेव; *b.* परिणममाना for विपरिणम°. 13 संस्क्रियतेति for संस्क्रियते; *a. d.* शास्त्रे for शास्त्रेण; *m.* शब्दसंस्कारो° for शब्दे संस्कारोप°. 14. *bi.* शास्त्रकृतस्य for °कृतश्च. 15. *b.* °पदेऽपि for पक्षेऽपि. 16. *a. d.* om. असौ; *a. d.* एक-कालराजपुत्रा°. 18 *a. b* स°गमयति, *d.* °युगपदुत्पन्नदेवसम्यगमयति.

---

2. I believe it must be स्वक्रियाप्रदेशोपजनितेन here, though none of our Mss. read it in this way. *cf.* LL. 3–4 below. Otherwise no sense is possible.

अपरो व्याख्यामार्गः । इन्द्रियनित्यत्वात्पदचतुष्टयानुपपत्तिस्तदाश्रयस्य च सर्वस्येत्ये-
वमाक्षिप्ते परिहारद्वारेणेदमवतार्यते । **युगपदुत्पन्नानां वा शब्दानामितरेतरोप-
देश** इति । अत्र समुच्चय एव वाशब्दः । कथम् । अयुगपदुत्पन्नानां वा युगपदुत्पन्नानां वा
नित्यानां वा अनित्यानां वेत्यर्थः । **इतरेतरोपदेशः** । इतरस्येत्याख्यातस्य क्रियावचने
शब्देऽभिधानत्वेनोपदेशः इतरस्य च नामशब्दस्य सत्त्ववचने शब्देऽभिधानत्वेनोपदेशः । 5
**शास्त्रकृतो योगश्च** । लक्षणमात्रेण चैते क्रियासत्त्वे आख्यातनामशब्दाभ्यां युज्येते ।
तस्मादुपपद्यते पदचतुष्टयमिति । आह आगममात्रमेतत् । हेतुरुच्यतां कथं विनष्टा-
विनष्टयोः सहपरिसंख्यानमवस्थितयोर्वा गुणप्रधानभाव इति । उच्यते **व्याप्तिम-
त्त्वात्तु शब्दस्य** । हेत्वर्थः समान एव पूर्वेण ।

आह । यदि व्याप्तिमत्त्वाच्छब्दस्य व्यवहारार्थं पदचतुष्टयमुपादीयते एवमपि नोपादे- 10
यम् । किं कारणम् । अभिनया अपि व्याप्तिमन्तः पाणिविहाराक्षिनिकोचादयः । तैरेव
कार्यसिद्धिरस्त्विति । अपि चैवं पदचतुष्टयदोषेण संभक्ष्यामहे न चाप्यतिमहान् वेद-
समुद्रः पठितव्यो भविष्यति क्लेशेनेति । उच्यते । स्यादेतदेवं यद्ययमपरो विशेषहेतुर्न
स्यात् । कतमः ।



**अणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके** । सत्यम् । अभि- 15
नया अपि व्याप्तिमन्तः । न त्वणीयांसः । ते महता यत्नेन व्याप्नुवन्ति न च निःसंदिग्धं
कुर्वन्ति । तत्प्रतीतशब्दार्थसंबन्धस्यैव नेतरस्य । शब्दस्त्वपरिमितमर्थमल्पीयसा यत्ने-
नोच्चारितो व्याप्नोति । तस्मादणीयस्त्वादिति विशेषहेतूपपत्त्या शब्देनैव संज्ञाकरणं व्यव-

---

1. *a. d.* om. च after तदाश्रयस्य. 2. *bi.* परिहारपक्षेण. 3. *m.* युगपदुत्पन्नानाम-
युगपदुत्पन्नानां वा. 4. *a. m.* om. वा अनित्यानां; *a. d.* om. इतरेतरोपदेशः; *a. d.*
om. इति after इतरस्य; *a. b. d. m.* आख्यातशब्दस्य for आख्यातस्य. 5. *m.*
adds. च सत्त्ववचनस्य after नामशब्दस्य. 10. *bi.* व्याप्तिमत्त्वाच्छब्दस्य. 11. *b.*
*m.* °सकोचादयः for °निकोचादयः. 12. *d* न चाप्यति° for न चाप्यति°. 13. *a.*
*b. d. m.* अतिक्लेशेन for क्लेशेन; *m.* इति before अतिक्लेशेन, *a. b.* om. इति after
अतिक्लेशेन. 17. *m.* तत्प्रतीतार्थसंबन्ध° ( perhaps better ); *m.* om. अर्थं after
अपरिमित.

---

7. Is it आगममात्रमेतत् ?

12. पदचतुष्टयदोषैः would have been better.

हारार्थं लोक इत्युपपन्नम् । यत्पुनरेतदुक्तमध्ययनदोषैर्न संभक्ष्यामहे न चायमतिमहान्वेदसमुद्रोध्येतव्यो भविष्यतीति । अत्र ब्रूमः । अभ्युदयो ह्यत्र वेदानुरूप एव भवति । अभ्युदयार्थं नः शास्त्रारम्भे यत्नः ।

**तेषां मनुष्यवद्देवताभिधानम्** । आह । एवं तावन्मनुष्याणां मनुष्येषु शब्देन
5 चतुर्धा विभक्तेनावबोधकरणम् । अथ मनुष्याणां देवेषु हविःसंप्रदानाशीःप्रार्थनादिव्यवहारः केनेति । उच्यते । तेषामेव शब्दानामियमेव व्यवस्था देवेष्वपि देवानपि प्रति । कतमा । मनुष्यवद्देवताभिधानमिति । मनुष्यैस्तुल्यं मनुष्यवत् । देवताभिधानमभिहितिरभिधानम् । यथैव हि मनुष्याः प्रयोजनेषु नामाख्यातोपसर्गनिपातैर्यथार्थमभिदधत्येवमेव देवा अपि । देवेष्वपि शब्दस्याभिधानशक्तिरपरिहीनेत्यभिप्रायः । तेपि हि
10 मनुष्यवद्देवा आह्वादियुक्ताः । 'पौरुषविधिकैरङ्गैः कर्मभिश्च संस्तूयन्ते' इति हि वक्ष्यति । तस्मादुपपद्यते मनुष्यवद्देवताभिधानमिति ।

आह । यदि नामाख्यातोपसर्गनिपातानामपरिहीना शक्तिर्देवानप्यभिधातुमथ किमर्थं वेदे मन्त्रः समाम्नात इति । उच्यते । **पुरुषविद्यानित्यत्वात् कर्मसंपत्तिर्मन्त्रो वेदे** । पुरुषेषु मनुष्येषु विद्यायाः विज्ञानस्यानित्यत्वात्पुरुषविद्यानित्यत्वाद्धेतोः कर्म-
15 संपत्तिः फलेन संपादनमविगुणकर्मसंपत्तिः फलसंपन्नमेव कर्म भविष्यतीत्येवमर्थं वेदे मन्त्रः समाम्नात इति वाक्यशेषः । इतरथा हि पुरुषेषु विज्ञानस्यानित्यत्वाद्यथार्थं नाभि-

---

1. *a. d. m* ॰ध्ययनकृतैर्दोषै, *m* भक्ष्यामहे for ॰समक्ष्या॰. 3. *m.* न for नः (bad), *a. b. d m.* read after यत्नः as follows —तत्र यदुक्तमध्ययनकृतैर्दोषैर्न समक्ष्यामहे न चायमतिमहान्वेदसमुद्रोऽध्येतव्यो भविष्यतीत्येतदुक्तमिति *b* for the last words *b.* ॰त्येतदयुक्तमिति *t*, and *m.* त्येतदुक्तमिति ।। † This sort of repetition is found in such writings, but is almost superfluous, therefore the reading is overlooked. 5. *b1.* भक्तेन for विभक्तेन of *a b. m*; *b1.* वेदेषु for देवेषु of *a. b. d. m.* 7 *b1.* मनुष्येण तुल्य for मनुष्यैस्तुल्य of *a. b d. m.* 8. *b1.* ॰भिहिति॰ for ॰भिहिति॰ of *a. b. d. m*, *a. d. m* अभिदधति. *b. b1.* अभिदधाति 9. *a b. d.* देवानपि for देवा अपि of *m b1*; *a. d* शब्दस्याभिधानेनशक्ति॰, *b1.* ॰भिधानेनापि शक्ति॰, *b. m* ॰भिधानशक्ति॰; *a. b d.* ॰परिहीणे॰, *b1 m.* ॰परिहीने॰. 10 *a. b.* कर्मभिश्च संस्तूयन्त इति हि वक्ष्याम. 12 *a. b d* ॰परिहीणा, *m. b1* ॰रिहीना. ॰तु *m.* वेदमन्त्र for वेदे मन्त्र.. 14. *a. d.* विज्ञानस्यानित्यत्वं तस्मात् पुरुष॰; *b. m* कायानित्यत्वात्तस्मात् पुरुष॰. 15 *a.* फलेनसंपादन for फलेन संपादनं; *b.* कर्मणः for कर्मसंपत्ति; *a.* सफल॰ for फल॰; *a. d.* ॰मेवं for मेव.

Mss. r.

2. This is not an exact quotation but all the words may be possible.

Nir. VIII. 5.

दधने देवान्नामाख्यातोपसर्गनिपातैरशिक्षितत्वान्मन्दशिक्षितत्वाद्विस्मरणशीलत्वाद्वा देवानामपराध्येयुरयथावत् प्रयुञ्जाना नामाख्यातोपसर्गनिपातान् । ततश्च सर्वार्थप्रत्यक्षदर्शो देवाः स्वल्पमप्ययथावदभिधानं न मर्षयन्ति विगुणमेतदिति । विद्यानित्यत्वात्तदभावे नेयुः कर्माणि । ततश्च देवताहीनं कर्मफलं न संपद्यते । न च केवलं फलासंपत्तिः । किं तर्हि । दुरिष्टहेतुको दोषोपि स्यात् । तस्मादेत एव नामाख्यातोपसर्गनिपाताः प्रयोगानुप- 5 रिपाटीविनियमार्थं मन्त्रत्वेन वेदे समाम्नाताः । न हि नामाख्यातोपसर्गनिपातान् परित्यज्य मन्त्राः सन्ति । एतदेव चतुर्विधं पदजातं प्रयोगानुपरिपाट्या कयाचिदवस्थितं मन्त्रा इत्युच्यते ।

आह । कथमनित्यत्वं विद्यायाः पुरुषेष्विति । उच्यते । येन वाक्यविरचनानुक्रमेणार्थवस्त्वनुक्रमेण वोक्त्वानुप्रेष्यते मनुष्य एवमेव ब्रूयास्त्वममुं देवदत्तमिति । स तेनैव वाक्य- 10 विरचनानुक्रमेणैवावबद्धमपि सन्तमर्थं न शक्नोति प्रतिपादयितुम । एवमनित्यत्वं विद्यायाः पुरुषेषु । तद्दोषं वा मनुष्यान् प्रति सर्वेषामेव मनुष्याणामनित्यत्वाद्विद्यायाः । अयमपि हि येन वाक्यानुक्रमेणाद्य वक्ति मनुष्यः कंचिदर्थं न तेनैव श्वः शक्नोति वक्तुम् । तत्र *यदुक्तं किमर्थं मन्त्रो वेदे समाम्नात इति । इदं न युक्तम् । पुरुषविद्यानित्यत्वात्कर्मफल-* संपत्त्यर्थं मन्त्रो वेदे समाम्नात इति । नह्यविचारितमेव विज्ञायते अत इदमाह ॥ 15

पदचतुष्ट्वमाक्षिप्य पक्षप्रतिपक्षशो विचार्यावधारितम् । विषयश्चाक्षेपप्रसङ्गेनैवास्य परिक्लृप्तः । देवमनुष्यव्यवहारार्थमेतदिति । तदेतत्सर्वमपि चोदकवशेन प्रसक्तानुप्रसक्तमुक्तम् । भावस्तु प्रकृतो यतस्तच्छेषमधुना वर्णयिष्यामः ।

---

1. *m.* adds यत् before देवाना. 2. *bi.* °पराध्येयपावत् for °पराध्येयुरयथावत्. 3. *a. d.* स्वल्पमप्यपराधं न मर्षयन्ति ।; *a.* repeats विगुणमेतदिति. 4. *m.* °ताहीनकर्मफल, *bi.* om. न after कर्मफलम्. 5. *m.* दुरित° for दुरिष्ट°. 6 *a. b. d.* °परिपाटि°; *b. m.* om. °वि° before °नियमार्थं 7. *b m* add हि after एतदेव; *a. d.* कदाचित् for कयाचित् 8. *a. b. d. bi.* इत्युच्यन्ते. *m.* इत्युच्यते ( better ). 9 *a. d. m.* add इह before येन. 10. *a.* ब्रूयास्त्वंगदेवदत्तमिति, *d.* ब्रूयास्त्वगतदेवदत्तमिति, *m* ब्रूयास्त्वमसुअमुदेवदत्तमिति, *bi.* इह तु न वाक्यविरचनानुक्रमेण अर्थवस्त्व मनुष्य एवमेव ब्रूयात् ' त्वं गच्छ देवदत्तमिति '. We have followed *b.* as intelligible of these all. 11. *bi.* °क्रमेण बद्धमपि for the tex[t] Mss. given above. 12. *m.* om after अयमपि all the text &c. to विमर्षे. 13. *bi.* om. अद्य before वक्ति; *d.* किंचिदर्थं for कंचिद for श्वः of *a. d.* 14. *a.* ससमाम्नात for समाम्नात. 15. *a. d.* नह्यवि......वे- वेदे पठ्यते इत्यत इदमाह. *b* नह्यविचारितमेव विज्ञायते इदमाह. *m.* नह्यविचारितमेव विज्ञायते अत इदमाह, *bi.* नह्यविचारितमेव विज्ञायते । अत इदमाह, 16. *bi.* विषयाश्च 17. *a. d bi.* परिक्लृप्ता.

स च पुनरुभयात्मा भावः । कार्यात्मा कारणात्मा च । तयोर्यः कार्यात्मा तस्मि-
न्नुत्पन्ने क्रियानिर्वृत्तौ योऽर्थः स भावः क्रियैव वा भाव इति । इदानीं कारणात्मा
भावो निरूप्यते । कथम् । क्रियाद्रव्ययोः स्वात्मस्थो विशेषः कार्यात्मप्रचलनयोः पुरो-
पभोगसन्तानोपक्षये कार्यात्मभावानीतो येनात्मभावेन भवनमात्रानिसंबन्धिना प्रलयकाले-
5 ऽवतिष्ठते सोऽत्यन्ताविनाशधर्मा आत्मा भाव इत्युच्यते ।

आह । कथमन्तरिह प्रसक्तः । शृणु । तद्विकारा एव हि द्रव्यगुणकर्मभावेनावस्थिताः
सन्तो नानाख्यातोपसर्गनिपातैरभिधीयन्ते स्थितिकाले । असावपि च प्रक्षीणसर्वविशेष-
भवनमात्रक्रियाभिसम्बन्धी सन् व्याकृतसर्वोपसर्गाभ्यां नामाख्यातशब्दाभ्यामुच्यते भव-
तीति भाव इति च । शब्दगतविमुखत्वादपोद्धृतसर्वविशेषानन्यैतावस्थानेतो शब्दावास्कन्दः ।
10 यत एतयोरेव साधारण्यार्थमनयोरिह प्रसक्तिः पदचतुष्टयाधिकरणे ।

आह । प्रधानमेतत् स्यात् । किं कारणम् । तद्भावेन ह्येतज्जगदवतिष्ठते प्रलयकाल
इत्येके मन्यन्ते । तच्च नैव । किं कारणम् । भावविकार एव हि सोत्तरशब्दवाच्यत्वात्
प्रधानभाव इति ह्युच्यते । पुरुषस्तर्हि । तत्राप्ययमेव हेतुः अनुपक्षीणशक्तित्वात् ।
एतेनैव ईश्वरपरमाण्वादिभावाः प्रत्युक्ताः । ईश्वरभावः परमाणुभाव इति सोत्तरपदत्वात् ।
15 शून्यं तर्हि । तदपि न । यस्माच्छून्यशब्देऽपि भावशब्दाप्रदर्शनम् । न तत्स्वर्थे
शब्दः प्रयुज्यते । शब्दो हि शब्दस्यार्थेन संबद्धः । किंचित्तदस्ति यच्छून्यमिति । लोके
हि प्रसिद्धं गृहं शून्यं ग्रामः शून्यः शून्ये शब्दमहत्त्वे इति । तस्मान्न शून्यशब्देनाभाव
एवोच्यते । किं तर्हि । अपेक्षाकृतं शून्यत्वमिति । भावशब्द एवात्रोत्तरपदत्वेन युक्त

---

1 *a. d.* अनयो for तयो°. 2 *b₁* om. यः after °निर्वृत्तौ. 3 *m.* कार्यात्म-
प्रचलनयो°. 4 *b₁.* भवन° for भवन°, *b* om. it, *b.* adds तनुनाशः before प्रलयकाले,
*m.* adds न तु माया instead. 5. *b₁.* °विनाशधर्मात्र for °विनाशधर्मा. 6. *d.*
प्रसिक्त for प्रसक्त; *m* द्रव्यकर्मगुणभावेना°. 7 *b₁.* प्रहीन°. 8. *m.* व्याकृत°
for व्याकृत°. 9. *b m.* शब्दगतविमुखत्वादपोद्ध°, *a. d.* शब्दगतं विमुखत्वादपोद्ध°, *b₁.*
शब्दगतत्वादपोद्ध°. 10. *b₁.* प्रसक्तिन् for प्रसक्तिः; *m.* om. अनयो before इह
11. *m.* होतज्ज° for ह्येतज्ज°. 12. *b₁* *m.* सोऽयं परशब्द° for सोत्तरशब्द°.
13. *a. d. m.* om. हि before उच्यते. 14 *a. d* परमाण्वादिभावविकाराः प्रत्युक्ताः,
*m.* °काराः प्रत्युक्ताः, *b.* °काराः प्रत्युक्त. 15. *a.* शून्ये शब्देऽपि भावशब्दाप्रदर्शनम्;
*d.* om. तर्हि, *m.* तस्मात् for यस्मात्. 16. *b₁.* संबन्ध for संबद्ध; *m.* om. तत्
after किंचित् 17. *a. d.* om. शून्ये शब्दमहत्त्वे. *m.* शब्दे महत्त्वे, *a. b. d.* तस्मान्न
शून्यशब्देनेह भाव उच्यते. *m.* तस्मान्न शून्यशब्देनेहाभाव एवोच्यते, *b₁.* तस्मान्न शून्यशब्दे-
नाभाव एवोच्यते. 18. *a. b.* अत्यपेक्षाकृत for अपेक्षा°. *m.* भावशब्दो ! for भावशब्द.

---

12. The sense would need तु to be added after एव हि.

इति चेत् । न । प्रयोगाप्रसिद्धेः । न हि भावभाव इति प्रसिद्धः प्रयोगः । न च प्रयु-
ज्यमानोऽपि भावशब्दो भावशब्द एवोपपदत्वेन प्रधानादिशब्दवत् कंचिद्विशेषप्रत्यय-
मादधाति । तस्मात्सर्वोपपदहीनस्य भवतेरनन्तस्य भावः । अनन्तेनात्मभावेनेदं जग-
न्नित्यम् । इतरैस्तु भावविकारैः परमाण्वादिभिर्भावविकारात्मभिरनित्यम् । कस्मात् ।
विकारात्मकत्वादेव । विकारो ह्यनित्यः । तमेव भवनमात्राभिसंबन्धेन प्रहीणसर्वभाव- 5
विकारमेतत्सद्भावविदेव श्रुतवेदान्तरहस्यसंपदः परावरविदो वेदविदो मेधाविन आत्म-
कृत्स्नकारितया मुक्ताधिकारस्वरूपा एतत्परिज्ञानादेवोपक्षीणकर्मोपभोगसंतानाः सन्त
आत्मकामाः प्रतिपद्यन्ते नेतरे । प्रधानादिविदो वेदानुगामिनैकदेशानीश्वरपुरुषप्रधानादीन-
नित्यान् भावविकारान् स्वमतिकल्पनाहेतुव्यवहितान् कृत्वा स्थिरीकृत्य यातो नित्यत्वेन
प्रतिपद्यन्ते भवनमात्राभिसंबन्धेन । तदेतस्मादात्मन उद्विजन्त आत्मप्रणाशकातर्या- 10
दिना कर्मोपभोगसंतानं शिवमिव मन्यमाना. केचिच्छक्तिहानादसंबोधनादेव । स एष

---

1. *a. d.* न हि भावभाव इति प्रसिद्धपूर्वं प्रयोग॰, *m* as text above, *b* नहि भावाभाव इति प्रसिद्ध. पूर्वं प्रयोग॰, *bi.* न हि अभावे भाव इति प्रसिद्ध॰ प्रयोग 2 *a. d* न च प्रयुज्यमानो भाव॰; *a. d.* भावशब्द एवो॰; *m* किञ्चित् for कश्चित्. 3 *bi.* भवते-रात्मभावेनेदं for भवतेरनन्तस्य भावोऽनन्तेनात्मभावेनेदं of *a. b d. m.* 5 *bi.* प्रहीन॰ for प्रहीण॰ of *a. b. d m.* 6. *b.* विश्रुतवेदान्तरहस्यसंविदो वेदविद परावरविदो मेधाविन, *a. d.* ॰श्रुतवेदान्तरहस्यसंपद परापरविदो मेधाविन., *m* ॰श्रुतवेदान्तरहस्यविदो वेदविदो मेधाविन, *bi.* ॰श्रुतवेदान्तरहस्यसंपद. परापरविदो मेधाविनः. 7 *a.* आत्मप्रधानकालयादीनां विशुद्धदर्शनप्रयोगा वेदविहितकर्मकृतस्तत्कारितया मुक्ताधिकार॰, *d.* आत्मप्रधानकालयादीना विशुद्धदर्शनप्रयोगा वेदविहितकर्मकृतस्तत्कारितया मुक्ताधिकार॰, *m.* आत्मकृत्स्नकारितया मुक्ताधिकार॰, *bi.* आत्मवेदविदो न कृत्स्नकारितया मुक्ताधिकार॰. 9. *m.* अनित्यभावविकारान्; *b bi.* मत्वा. *m.* मत्या, *a. d.* कृत्वा; *bi.* स्थिरीकृत्यानेन प्रति॰, *a. d.* स्थिरीकृत्य यातो नित्यत्वेन प्रति॰. 10. *a. b d.* as text, *m* आत्मप्रणाशकतया नाकमपि भोगमप्राप्य तत् सन्तान शिवमिव मन्यमाना, *bi.* आत्मप्रकाशकातर्यादिना पितृसंतानमिव मन्यमानाः. 11 *a. b. m. bi.* add च after केचित्, *bi.* असम्बोधनादेव.

---

9-11. The reading of the whole page, and especially of these lines, is not satisfactory. The text printed above is based upon the available material. The various readings of the Mss and the printed edition are *fully noted here.* *In line 9, either* कृत्वा *of a. d.*, or मत्या of *m.* makes sense.

10. Separate उद्विजन्ते आत्मप्रणाश &c., which makes some sense.

इह वेदाङ्गे वेदार्थनिर्वचनाभिनिवेशिनि शब्दानां सामान्यविशेषवृत्त्युपदेशप्रसङ्गे वर्तमाने भवतेः कृदन्तीभूतस्य भवनमात्रमेव वक्तुं सामर्थ्यं नेतरान् भावविकारान् विद्यमानानपीत्येतेन प्रसङ्गेनात्र सूचितः । वेदरहस्यब्राह्मणेऽस्तत्र तत्र विस्तरेणायं निर्णीयते ॥

**षड्भावविकारा भवन्तीति** । अपि च लक्षणविदो विगृह्णन्ति भावशब्दं भवतेः
5 स्वः पदार्थो भवनं भाव इति । "सन्मात्रं भावलिङ्गं स्यात्" इति च पठन्ति ।
तस्य विकारा **भावविकाराः** । **भवन्तीति** सामान्यादात्मनः प्रच्युता ■ सन्त. स्वेन स्वेन वैशेषिकेण भावविकारात्मलाभाय भवन्ति । इतिपरः प्रयुज्यमानः शब्दः शब्दपदार्थकः ।

क एवमाह षड्भावविकारा इति । उच्यते । **वार्ष्यायणिरिति** । तिकादिपाठात् फिन् ।
10 आचार्य इति वाक्यशेषः । निर्देशात उपलब्धाना पठित्यवधारणं सुखार्थम् । वक्ष्यामः 'अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ।'

आह । कतमे त इति । उच्यते । **जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति ।**

आह । एतेषां जन्यादीनां भावविकारशब्दानां कः कस्यां विकारावस्थायामवस्थितं
15 भावमाचष्टे कं वा विद्यमानमपि नाचष्टे कं वा न प्रतिषेधतीति । उच्यते । **जायत**

---

1 *b1* षडङ्गे, *a* वेदार्थे निर्व°, *b1* °निर्वचनाभिनिवेशशब्दानां सामान्य°, *b1*. प्रवर्तमाने. 2 *a d* add वा after कृदन्तीभूतस्य. 3 *a. d* अथ for अत्र, *b1*. सङ्घचित, *b1* वेदरहस्यो ब्राह्मणे, *b1* क्रियते for निर्णीयते of all our Mss, *b1*. om. one तत्र. 4 *a d* om षड्भावविकारा भवन्तीति, *b m*, instead of षड्भावविकारा भवन्तीति. read द्वयो[ क *m*.]र्द्विविधो भावः कारणरूपः कार्यरूपश्च । तत्र कारणे विकृतत्वाद[*m*. त्वाभि]त्र एवेत्यवगत[ *m* त ]इदानीं कार्यरूपस्यानेकविकृत[*b* वि]रूपत्वाद्दुर्वि[*m*. दुर्वि]ज्ञेयत्वेन निर्वक्तुमाह । षड्भावविकारा भवन्तीति वार्ष्यायणिः । भाव सत्तलक्षणो नित्य विकृतिकारणं तैर्विकारैर्विशिष्ट षट्प्रकारोऽभिधीयत उपचारत । यतो वि[*m* तोऽयं वि]द्यमानतामेव भवनशब्देनाभिधत्ते । तेन यो विद्यमानमात्रभवनात्मकः ■ षट् भिन्नोऽभिधीयते । 5 *b1*. स्वपदार्थे, *a b d* स्व. पदार्थो, *m* स्वपदार्थभवनं, *b1* om ■ after इति. 6. *m*. om भावविकाराः, *b* भावविकार 7. *b1* सन्तत्वेन for सन्तः स्वेन of *a. b. d m*. 8 *b1*. om शब्द, *m*. शब्दपदार्थ. 9 *m* om. क before एवं. 10. *a d* पठित्यवधारणार्थं, *b1* om वक्ष्याम. 11. *b1* भावविकारा for विकारा. 12. *b1*. कतमतदिति.

---

11. *Vide* next section.

**इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति ।** जनिः पूर्वो भावस्तस्य पूर्वभावस्य षण्णां भावविकाराणां यदि वान्यो यः पूर्वो भावविकारस्तस्य जायत इत्यनेन शब्देनादिमाचष्टे ।

आह । किमादिमेव । नेत्युच्यते । उत्तमुपक्रम्यप्रभृत्यवर्गमन्तमिति । स एव पूर्वापरीभूतो भावस्तावदेव जायत इत्युच्यते यावन्निष्ठाशब्दवाच्यः संवृत्तो जात इति । **नापरभावमाचष्टे न प्रतिषेधति ।** नेति प्रतिषेधे । न परो भावोऽपरभावः ।

आह । कस्मादपरः । पौर्वापर्यं हि देशकालकृतम् । उच्यते । जनिशब्दवाच्यो भावविकारः पूर्वः । तस्मादपरकालोऽस्तिशब्दवाच्यः । तत्रैवं सति जनिशब्दवाच्ये भावविकारेऽस्तेरस्यर्थोऽस्ति विद्यमानता । किं कारणम् । न ह्यविद्यमानो जायते । अपि च कारणात्मनि भावे सर्वे एते भावविकाराः सन्ति । सर्वार्थप्रसवशक्तित्वात्तस्य । यथा 10 पृथिव्यां घटादयो भावविकाराः । ते तु द्वारद्वारिभावेन विशेषान्तरमं प्रतिपद्यन्ते । तद्यथा । जनिद्वारेणास्तिः । अस्तिद्वारेण विपरिणमतिः । किं कारणम् । न ह्यजातोऽस्तीत्युच्यते । नाप्यविद्यमानो विपरिणमत इति । तत्रैवं सति जायत इत्येष शब्दो जन्मैव केवलं ब्रवीत्यविवक्षितेनापरभावविशेषम् । किं कारणम् । एकार्थवृत्तित्वाच्छब्दस्य । अस्तिशब्दवाच्यस्य भावविकारस्यासंपूर्णत्वात् । अनवधृतत्वं हि तस्यामवस्थायां तद्व- 15 स्थ्यनुमानगम्यं किमिति जायत इति । तस्माज्जायत इत्येष शब्दो जायमानावस्थायामस्तित्वं विद्यमानमपि नाचष्टे ।

आह । यदि नाचष्टेऽर्थापत्तितः भवति प्रतिषेधतीति । उच्यते **न प्रतिषेधति** इति । अस्तित्वस्य न प्रतिषेधं करोतीत्यर्थः । किं कारणम् । उच्यते । अस्तित्वात्मवानपि ह्यसौ जायते । एतस्मिन् प्रतिषिद्धेऽनात्मक एव स्यात् । कथमात्मन्यसौ जायते । तस्मान्न प्रतिषेधन्य- 20 स्तित्वम् । उपस्थितत्वाच्च । उपस्थित एव च प्रत्यासन्नत्वस्यावधारणार्थत्वाद् इत्यतश्च न प्रतिषेधति ।

एवमेव प्रत्यय उत्तरेष्वपि भावविकारेषु । समासतस्तु यत्र यद्वक्तव्यं तत्र तद्ब्रूमः ।

---

1. [illegible] reads the *pratika* upto आदिमाचष्टे; d. reads जायत इत्येष भावः पूर्वभावस्य?; m. adds इति after प्रतिषेधति; a. d. जनिः पूर्वो भावस्तस्य &c. 2. m. षण्णां भावविकाराणां for षण्णां भा. 5. m. यावन्निष्ठाशब्दवाच्यः. 6. a. d. नेति प्रतिषेधे न परो भावः आह &c., b. m. नेति प्रतिषेधे न परोऽभावः अपरभाव आह, h. नेति प्रतिषेधे न परोऽभावः अपरभाव आह. 7. d. देशकालकृतम् । उच्यते । 8. a. b. d. अपरकालेऽस्तिशब्दवाच्यः. 12. d. जनिद्वारेणास्ति । अस्तिद्वारेण &c. 15. m. तस्यामवस्थायां तदवस्थ्य° । 20. b. m. जायते तस्मिन्. 21. b. m. om. च after उपस्थित एव. 23. m. तत्र यद्वक्तव्यं तत्र ब्रूमः.

**अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम्** । अस्तीति जातस्य सत्त्वस्यावधारणमात्रं ब्रवीति न विपरिणाममाचष्टे अपूर्णत्वात् । न प्रतिषेधत्युपस्थितत्वात् ।

**विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम्** । विपरिणमत इत्येष शब्दोऽप्रच्यवमानस्य तत्त्वादप्रभ्रश्यमानस्य तत्त्वात्तद्भावाद्विकारम् । योऽस्य भावोऽस्तित्वं स्वरूपत्वं वा तस्माद्विकारं विक्रियामात्रं ब्रवीति न वृद्धेरर्थमाचष्टे । न प्रतिषेधति ।

**वर्धत इति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानाम्** । वर्धत इत्येष शब्दः स्वेषामङ्गानां शिरोग्रीवाबाहूदरादीनां सांयौगिकानां वा गोहिरण्यधान्यादीनामभ्युच्चयमाह । अभ्युच्चितता ब्रवीति ।

10 आह । कथं प्रयोगः । उच्यते । **वर्धते विजयेनेति वा वर्धते शरीरेणेति वा** । वर्धते विजयेनेति सांयौगिकेषूदाहरणम् । वर्धते शरीरेणेति स्वाङ्गाभ्युच्चये । अत्र वर्धत इति ध्रुवमापक्षी(क्षि)यतिमाचष्टे न प्रतिषेधति ।

*अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमम्* । यथैव हि स्वाङ्गैः सांयौगिकैर्वा द्रव्यैरपचीयते तथैवापक्षीयते । तत्रापि नाचष्टे न प्रतिषेधति ।

15 **विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति** । विनाश एवापरभावस्तस्यादिमाचष्टे । किमादिमेव । नेत्युच्यते । उपक्रमप्रभृत्यपवर्गपर्यन्तमित्युक्तं यावद्विनष्ट इति । स च विनाशं ध्रुवम् पूर्वभावमाचष्टेऽपक्षी(क्षि)यतेरर्थं विद्यमानमपि तस्मिन्विनाशे । कथं युगपदपक्षी(क्षि)यतेरर्थो विनाशेऽस्तीति । उच्यते । न ह्यनपक्षीयमाणो विनश्येत् ॥ ३ ॥

---

1. *a. d* om. अस्तीति before जातस्य. 4. *m.* तत्त्वादप्रच्यवमानस्य. 5. *m.* स्वरूप for स्वरूपत्व, *bi.* युग्मत्व; *bi* om. न before वृद्धे. 8. *a.* adds अर्थानां after वा, and reads हिरण्यधान्या° for गोहिरण्य°. 12. *m bi.* ध्रुवमपक्षीयति°. 13 *a d* इत्यनेनैव? 14. *a d* वर्धयते and अपक्षीयतेऽपि for अपचीयते and अपक्षीयते. 16. *a.* om. all from विनाश to माचष्टे; *b* विनाश एव परभाव, &c.; *d.* तस्यादिमाचष्टे. 17 *a. d* इतिलुक्; *bi.* om. न after ध्रुवम्. 18. *bi.* विनाशमपि for विद्यमानमपि, *d.* अपक्षीयते after युगपद्, *m* विनाशो for विनाशे.

---

14. It appears that the word विकार should be understood after न in तत्रापि नाचष्टे. *cf.* the above similar passages. Our Mss. *do* not read it.

अतोन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह ते यथावचनमभ्यूहितव्याः ॥

न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनो नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्त्युच्चावचाः पदार्था भवन्तीति गार्ग्यस्तद्य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम् ।

आ इत्यर्वागर्थे प्रपरेत्येतस्य प्रातिलोम्यमभीत्याभिमुख्यं प्रतीत्येतस्य प्रातिलोम्यमति सु इत्यभिपूजितार्थे निर्दुरित्येतयोः प्रातिलोम्यं न्यवेति विनिग्रहार्थीया उदित्येतयोः प्रातिलोम्यं समित्येकीभावं व्यपेत्येतस्य प्रातिलोम्यमन्विति सादृश्यापरभावमपीति संसर्गमुपेत्युपजनं परीति सर्वतोभावमधीत्युपरिभावमध्वैर्यं वैवमु-10 च्चावचानर्थान्प्राहुस्त उपेक्षितव्याः ॥ ३ ॥

आह । एतेभ्यो भावविकारेभ्यः किमन्येपि व्यतिरिक्ताः सन्ति भावविकारा न वेति । उच्यते । अतोन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह । अतो भावविकारषट्कादन्यत्वेन भावविकारा लक्ष्यन्ते न ते पृथक् पृथगत्यन्तभिन्नाः सन्ति । किं तर्हि । एतेषामेव विकारा भवन्ति । तद्यथा ।15 जनिशब्दवाच्यो भावविकारोनेकप्रभेदभिन्नोनेकपर्यायशब्दवचनो निष्पद्यतेभिव्यज्यत उत्तिष्ठतीत्येवमाद्युपेक्षितव्यम् । तथास्तिशब्दवाच्योनेकप्रभेदभिन्नोनेकपर्यायवचनश्च अस्ति विद्यते भवतीत्येवमादि । तथा विपरिणमतिशब्दवाच्यो विपरिणमते जीर्यति भावान्तरमापद्यत इत्येवमादि । तथा वर्धतिशब्दवाच्यो वर्धते पुष्यति उपचीयते आप्यायत इत्येवमादि । तथा अपक्षी(क्षि?)यतिशब्दवाच्यो ध्वस्यति भ्रश्यतीत्येवमादि ।20

5. A. Bi. complete Khanda 4 after °विकरणम्. 11. A. Bi. complete Khanda [illegible] after °उपेक्षितव्याः, and then read प्रथमाध्यायस्य प्रथमः पादः. 14. bi. om. न before ते, a. b. d. न ते पृथगेवात्यन्तभिन्नाः &c. 18. d. तथा विपरिणमतिशब्दवाच्योनेकप्रभे[दो] विपरिणमते ; m. जीर्यते for जीर्यति. 20, b. m. आप्यायत, a. d. आप्याय्यन, bi. अर्पायत; a. d. भ्रश्यति भ्रंश्यतीत्येवमादि, b. ध्वस्यति भ्रश्यतीत्येवमादि.

तथा विनश्यतिशब्दवाच्यो विनश्यति म्रियते विलीयत इत्येवमादि । इति ह स्माह । एवमाहाचार्यो वार्ष्यायणिरित्यनुवर्तते ।

**ते यथावचनमभ्यूहितव्याः ।** त एते जन्यादिशब्दवाच्या विकारा यथावचनं यो यस्मिन्वचने यथावचनमवस्थिताः सन्तः प्रकरणोपपत्तिभ्यां मन्त्रार्थावधारणं प्रत्यभ्यू-
5 हितव्या वितर्क्याः । प्रयुज्यमाना इति वाक्यशेषः । सर्व एव धातवो भाववचनास्तेषा-
मिहाध्ययने प्राप्ते शास्त्रातिगौरवभयादेतल्लक्षणमुक्तम् । इह शास्त्रे व्याख्याशैलीयं द्रष्टव्या ।
उद्देशो निर्देशः प्रतिनिर्देश इति । तत्रोद्देशः सूत्रस्थानीयः । तद्यथा । 'षड् भावविकारा'
इति । निर्देशो वृत्तिस्थानीयः । तद्यथा । 'जायतेऽस्ति विपरिणमत' इति । प्रतिनिर्देशो
वार्तिकस्थानीयः । तद्यथा । 'जायत इति पूर्वभावस्यादिमाचष्टे' इति । एवं सर्वत्र यथा-
10 संभवं योज्यम् ॥

सानुषङ्गमुक्तं नामाख्यातयोर्लक्षणं नाम्नस्तु किंचिदवशिष्यते तदवसरप्राप्तमपि तदधुना
नोच्यते पदचतुष्टलक्षणप्रतिज्ञाव्याघातभयात् । उक्त्वा पदचतुष्टलक्षणं चतुर्थेन पादेन
तद्वक्ष्यामः । प्रतिज्ञाप्रसक्तमेवाधुनोपसर्गलक्षणमुच्यते ।

आह । वक्ष्यति भवानुपसर्गलक्षणमिदमेव तावदुच्यताम् । किमिमे उपसर्गा नामा-
15 ख्यातवत् पदचतुष्टान्निष्कृष्य बद्धाः सन्तोऽर्थानाहुर्न वेति । उच्यते । **न निर्बद्धा उप-
सर्गा अर्थान्निराहुरिति शाकटायनः ।** नेति प्रतिषेधे । निष्कृष्य नामाख्यात-
मध्यात् पदवाक्यरूपेण विरचिताः सन्तः । के पुनस्ते । उपसर्गाः । आख्यातमुपसृज्यार्थ-
विशेषमिमे तस्यैव सृजन्तीत्युपसर्गाः । अर्थान्निराहुरिति शाकटायनः । निश्चयेन सतो-
ऽर्थानाहुः । साक्षान्न तेषामर्थाभिधानशक्तिरस्ति पृथग्विरचितानामित्यभिप्रायः ।
20 यथा वर्णानां पदादपगतानामर्थाभिधानशक्तिर्नास्ति एवमेतेषामपि नामाख्यातवियोगेऽर्था-
भिधानशक्तिर्नास्ति । क एवमाह । शाकटायनः शकटस्यापत्यं ( नडादिपाठात् फक् )
शाकटायनः ।

आह । कथं तेषामर्थवत्तेति । उच्यते । **नामाख्यातयोस्तु कर्मोपसंयोग-
द्योतका भवन्ति ।** तुशब्दोऽवधारणार्थः । नामाख्यातयोरेव योऽर्थः कर्म तत्रैव
25 विशेषं कंचिदुपसंयुज्य द्योतयन्ति । स एव नामाख्यातयोरेवार्थविशेष उपसर्गसंयोगे

1. m om विलीयते. 2 a. d. m क एवमाह for एवमाह of bi., b कथमाह instead. 6 a. d. व्याख्याशीली for व्याख्याशैली 8. b om. अस्ति after जायते. 11 a. b. d. नाम्नसु, m नामस्तु, bi. नाम्नस्तु. 12. m. °पदचतुष्टलक्षणा-व्याघातभयात् &c. 14. bi. उपसर्गनामा°. 15 a d. bi. नि कृष्य, b. निकृष्य, m. निष्कृष्य, bi. सनो for सन्तो, and न इत्युच्यते for नवेति। उच्यते of our Mss. 16. b. निकृष्य for निष्कृष्य. 20 bi. पदादपगतानां! 23 a d. om. उच्यते. 24. b. तत्र for तत्रैव 25. d किंचित् for कंचित्; m. स एव for स एष; a. उपसर्गे for उपसर्गसंयोगे.

शक्ति व्यज्यते । यथा प्रदीपसंयोगे द्रव्यस्य गुणविशेषोऽभिव्यज्यमानो द्रव्याश्रय एव
भवति न प्रदीपाश्रयः ।

आह । कोऽन्यथा भवीति येनैवमुच्यते शाकटायन एवमाहेति शृणु । **उच्चावचाः
पदार्था भवन्तीति गार्ग्यः** । उच्चाश्चावचाश्च उच्चावचा बहुप्रकारा इत्यर्थः ।
एवमुपसर्गवदनामर्थाः पदार्था भवन्ति वियुक्तानामपि नामाख्याताभ्यामिति गार्ग्यः । 5
आचार्यो मन्यत इति वाक्यशेषः । एकैकोऽप्येषां प्रादीनां नामाख्यातनियो-
गेऽप्यनेकार्थ इत्यभिप्रायः । तद्यथा । "प्रेत्यादिकर्मोद्दीर्णभृशार्थेषु ।" इत्यभिधाने
शक्तिरस्त्येवेत्येवमादुपलक्षितव्यं लक्षणशास्त्रे । यत्पुनरेतदुक्तं वर्णवदिति । अन-
भ्युपगमादयुक्तं न ह्यभ्युपगमनमस्माभिरेतदनर्थका वर्णा इति । सामान्या हि
वर्णेष्वभिधानशक्तिरस्त्येव । यथा मृदोऽवयवेषु सर्वेष्वसमाप्तारम्भशक्तिः । सा तु 10
पदत्वेन समुदितानामर्थविशेषेणावतिष्ठते । यथा मृदोऽवयवानां घटे घटारम्भशक्तिर-
भिव्यज्यत एवम् । तत्र यदुक्तं वर्णवदनर्थका उपसर्गा नामाख्यातवियोगादित्येतद-
युक्तम् । अपि च । वर्णैरनर्थकैरारभ्यमाणं पदमप्यनर्थकमेव स्यात् । न ह्यशुद्धैस्तन्तु-
भिरारभ्यमाणः पटः शुद्धो भवति । ततश्च पदैरनर्थकैरारभ्यमाणं वाक्यमनर्थकमेव
स्यात् । वाक्यैश्चानर्थकैरारब्धं शास्त्रमप्यनर्थकमेव स्यात् । ततश्चाभ्युदयनिःश्रेयसार्थो 15
योऽयमभ्युपगमः स्वप्रत्ययेन विदुषामयमनर्थक एव स्यात् । अनिष्टं चैतत् । तस्मादर्थ-
वन्तो वर्णा इत्युपगमम् । यत्पुनरेतदुक्तं प्रदीपवदनर्थका उपसर्गा इति । तत्रोच्यते ।
प्रदीपोऽपि स्वेनार्थेन प्रकाशात्मनार्थवानेव । सन्नपि चार्थवत्त्वे प्रकाशसमर्थमाधारभूतं प्रका-
शयन् स्वां प्रकाशनशक्तिमभिव्यनक्ति । एवमुपसर्गा अर्थवन्तोऽपि सन्तः स्वामभिधा-
नशक्तिमनेकप्रकारां विद्यमानामपि स्वार्थाभिधानशक्त्याधारभूते नामाख्याते प्राप्या- 20
भिव्यञ्जयेयुः । तत्र यदुक्तं प्रदीपवदनर्थका उपसर्गा इत्येतदयुक्तम् । नामाख्यातयो-
रेवायमर्थ उपसर्गसंयोगे समुपजायत इति । तत्र ब्रूमः । न हि लोके यो यत्र समर्थो

---

2. *b.* दीपाश्रयः, *b₁.* प्रदीपाश्रयः for प्रदीपाश्रयः. 5. *m.* युक्ता for वियुक्ता. 7. *b.* om. अपि; *a. d.* प्रेत्यादिकर्मोप(*d.* प)दीर्णभृशार्थेष्वित्यभिधाने, *b₁. m.* प्रेत्यादिकर्मोदीर्णौ भृशार्थे इत्यभिधाने. 8. *m.* शक्तिरस्त्येवमादुप°, 10. *a. d.* मृदवयवेषु; *a. b. d. m.* °[illegible]° for °[illegible]°. 11. *a. d.* मृदवयवानां. 12. *m.* om. तत्र. *a. d.* read यत्र for it; *a.* नामाख्यातवियोगा° for °ख्यातवियोगात्. 13. *d.* अपि च न च वर्णैरनर्थकैः°. 16. *b₁.* °भ्युपगमस्यप्रत्ययेन, *m.* अनर्थं for अनर्थक. 17. *a. d.* इत्येवमुपगमः; *a. d.* इति तदयुक्तं for इति तत्रोच्यते. 19. *b₁.* स्वं for स्वां. 21. *a.* [illegible] for तत्र; *b.* यदयुक्तं । यदप्युक्तं नामाख्यातयोः &c. 22. *a. d. m.* om. तत्र before ब्रूमः.

भवति स तत्रान्यमपेक्षते। नामाख्याते चार्थविशेषं प्रत्युपसर्गसंयोगमपेक्षेते। तस्मादुप-
पन्नमुपसर्गस्य क्रियाविशेषोर्थः क्रियासामान्यमात्रमाख्यातस्येति।

तत्र यदुक्तमनर्थकाः पृथगवस्थिता उपसर्गा इत्येतदयुक्तम्। कुतः। तद्य एषु
**पदार्थः प्राहुरिमे तम्।** तदेतदुपपन्नं भवति। य एषूपसर्गेषु स्वोनेकप्रकारोर्थ इति
5 प्राहुरेव तमिमे उपसर्गाः पदविशेषाः पृथगपि सन्तः। कः पुनरसाविति। उच्यते।
**नामाख्यातयोरर्थविकरणम्।** अर्थविक्रियामित्यर्थः। तस्मादर्थवन्त एवेति।

उच्यतां तर्हि क एषां कस्मिन्नर्थविशेषे वर्तते। उच्यते। अयं तावत्। **आ इत्यर्वा-
गर्थे।** तद्यथा। आ पर्वतादिति। अर्वागिति गम्यते। अनेकार्थत्वेपि सत्युपसर्गा-
णामेकैकोर्थ उदाहरणत्वेनोच्यतेर्थवत्त्वप्रकाशनार्थम्।

10 **प्रपरेत्येतस्य प्रातिलोम्यम्।** प्र परा इत्येतावुपसर्गावेतस्यैवार्वागर्थस्य प्राति-
लोम्यमाहतुः। प्रगतः परागतः।

**अभीत्याभिमुख्यमाह।** अभिगतः।

**प्रतीत्येतस्यैवाभेः प्रातिलोम्यमाह।** प्रतिगत इति।

**अति सु इत्यभिपूजितार्थे** वर्तेते। अतिधनः सुब्राह्मण इति।

15 **निर्दुरित्येतयोः प्रातिलोम्यम्।** निर्धनो दुर्ब्राह्मण इति।

**न्यवेति विनिग्रहार्थीयौ।** निगृह्णाति। अवगृह्णातीति।

**उदिति** अयमेक एव **एतयोर्द्वयोः प्रातिलोम्यमाह।** उद्गृह्णातीति।

**समित्येकीभावमर्थमाह।** संगृह्णातीति।

**व्यपेत्येतस्य प्रातिलोम्यमाहतुः।** विगृह्णाति अपगृह्णातीति।

20 **अन्विति सादृश्यापरभावमाह।** अनुरूपमस्येदमिति सादृश्यम्। अनु-
गच्छतीत्यपरभावः।

---

1. *bi.* अपेक्षते for अपेक्षेते. 4. *m.* om. स्वः before अनेकप्रकार°. 6. *d.*
25 °स्मादर्थवत्तमेवेति, *m.* adds उच्यते after एवेति. 7. *m.* om. उच्यतां. 9. *m.*
adds एव after °शनार्थम्. 13. *b m.* om. एव अभे°; and *m.* om. आह. 14. *bi.*
in. adds एतौ before अभिपूजितार्थे; *m.* om. वर्तेते and adds अति सु इत्येतावभिपूजितार्थे
जायर. *d.* अतिधनुः for अतिधनः. 17. *b m.* उदित्येतयोः प्रातिलोम्यमिति। उदित्यय-
व्याथात. द्वयो प्रातिलोम्यमाह. *d.* om. द्वयोः. 18. *m.* adds after the pratika
निरुह्य भावार्थमाह. 19. *m.* om. आहतुः; *bi* adds विगृह्णातीति विग्रहार्थीयः after
fo. all our Mss.: omit it. 20. *m.* om. [illegible] before इति. 21. *b.*
for तस्मै. or °भाव°

अपीति संसर्गमाह। सर्पिषोऽपि स्यात्। मधुनोऽपि स्यात्।

उपेत्युपजनम्। उपजनमाधिक्यम्। उपजायते।

परीति सर्वतोभावमाह। परिधावतीति।

अधीत्युपरिभावमाह। ऐश्वर्यं वा। अधितिष्ठति अधिपतिरिति।

आह। 'नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति' इत्युक्तम्। अत्र नाम्नः कर्मोपसंयोगद्योतका भवन्तीत्येवं न घटते। "उपसर्गाः क्रियायोगे" इति प्रसिद्धो ह्युपसर्गाणां क्रियापदेन योगो न नाम्ना। उपसर्गा हि क्रियाद्वारेणैव नामान्यास्कन्दन्तीति ॥ ३ ॥

अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्यप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणाः ॥ 10

तेषामेते चत्वार उपमार्थे भवन्ति। इवेति भाषायां चान्वध्यायं चाग्निरिवेन्द्र इवेति ॥ नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायं "नेन्द्रं देवममंसत" इति प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत् प्रतिषेधति। "दुर्मदासो न सुरायाम्" इत्युपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते ॥ चिदित्येषोऽनेककर्माचार्यश्चिदिदं ब्रूयादिति 15

2. *bi.* om. उपजनमाधिक्यम् of all our Mss., *a. d.* उपजायते for उपजन। 6. *b.* कर्मोपसंयोगद्योतकाः; *m.* सिद्धो for प्रसिद्धो. 11. R. reads इवेत्यग्नि। इवेति, we follow all our Mss. 15. A. Bi. conclude, Pā. 2. Kh. 1. here after उपमिमीते.

ot. see Lit. 3-4, P. 57.

quot. see Pāṇini I. iv. 59.

s the first Pāda of the first Adhyāya here. There is nce in reading the colophon. The Mss. generally treat this yāya, as they include the five adhyāyas of the Nighaṇṭu e *Nirukta* chapters in continuation. Besides all Mss. marking the pādas. Hence we omit the colophons e pādas altogether.

पूजायाम्। आचार्यः कस्मादाचार्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा । दधिचिदित्युपमार्थे । कुल्माषांश्चिदाहरेत्यवकुत्सिते । कुल्माषाः कुलेषु सीदन्ति ॥ नु इत्येषोनेककर्मेदं नु करिष्यतीति हेत्वपदेशो । कथं नु करिष्यतीत्यनुपृष्टे नन्वेतदकार्षीदिति च । अथाप्युपमार्थे भवति ।

"वृक्षस्य नु ते पुरुहूत वयाः ।"

वृक्षस्येव ते पुरुहूत शाखा वयाः शाखा वेतेर्वातायना भवन्ति शाखाः खशयाः शक्नोतेर्वा ॥

1. D. R. add आचार्यः कस्मात् before आचार्यः, B. adds कस्मात्, C. has lost a page, but agrees generally with B D , Bi om. this but notices it as the reading of some of its Mss 5 A. Bi. conclude P1. 2, Kh. 2 after भवति. 6. All Mss. accent the quotation from Rig-veda, but A. accents some other portions of the text also, generally at the end of a section or a sentence ; Bi. also marks accents similarly, though A. differs from them in some cases e. g. A reads संप्रयुक्तानि । अह च त्वं च वृत्रहन्नित्येतस्मिन्नर्थे &c , विचारणार्थे, समुच्चयार्थे भवति. As, however, these accents merely indicate the occasional rise and fall in intonation, and are not the natural accents of the words, we follow the practice of Mss other than A. in omitting them altogether.

---

1, 3. R puts the derivations of आचार्यः and कुल्माषाः here into brackets. These words are not found in the Nighantu, but are derived like many other words occasionally in the course of other explanations by Yāska The Mss. of the commentary take no note of them excepting m whose additions are noticed *loc. cit.*

4. Here, as also in LL. 6, 7 on P. 69, I would prefer to take ननु by separating it into न and नु, and not as a compound particle. If we remember that the point in question is the sense of the particle नु, my suggestion seems to be proper. Besides the commentary makes sense if we take them so, and not otherwise. I have, however, allowed them to stand together on the authority of R. and Bi.

6. The line is quoted from RS. VI. 24. 3.

अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात्स कर्मोपसंग्रहः। चेति समुच्चयार्थ उभाभ्यां संप्रयुज्यते

"अहं च त्वं च वृत्रहन्।"

इत्येतस्मिन्नेवार्थे

"देवेभ्यश्च पितृभ्य आ।" 5

इत्याकारो वेति विचारणार्थे

"हन्ताहं पृथिवीमिमां निदधानीह वेह वा।"

इत्ययापि समुच्चयार्थे भवति ॥ ४ ॥

अथ निपाताः। उक्तमुपसर्गलक्षणं सामान्यं 'नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति' इति। विशेषलक्षणमपि 'आ इत्यर्वागर्थे' इत्येवमादि। अल्पा इति 10 कृत्वा च ते प्रत्येकं समाम्नाताः। अधुना सामान्यलक्षणानुवृत्तं प्रतिज्ञाप्रसक्तमेव निपातलक्षणं वर्तयिष्यामः। तदधिकारोयमथशब्दः।

उच्चावचेष्वर्थेषु निपतन्ति। उच्चावचेष्वनेकप्रकारेष्वर्थेषु निपतन्तीति निपाताः।

आह। कतमे पुनस्ते। उच्यते। अप्युपमार्थेपि कर्मोपसंग्रहार्थेपि पदपूरणाः। उपमैवार्थ उपमार्थः। तस्मिन्नुपमार्थे। उपमा नाम कस्मिंश्चिदेवार्थे यः प्रसिद्धो गुण- 15 स्तस्यान्यस्मिन्नप्रसिद्धतद्गुणेर्थे शब्दमात्रेण यदुपसंयोज्य तद्गुणप्रकाशनं क्रियते सोपमा। कर्मोपसंग्रह एवार्थः कर्मोपसंग्रहार्थः। तस्मिन् कर्मोपसंग्रहार्थे। अर्थोपसंग्रहार्थे इत्यर्थः। कर्मशब्दो हि प्रायेणार्थपर्यायवचन एतस्मिञ्छास्त्रे। 'गतिकर्माण उत्तरे धातवः' गत्यर्था इति गम्यते। पदमेव पूरयितव्यं येषामर्थस्ते पदपूरणाः। तदेतत् त्रिधात्वमर्थभेदकृतं निपातानां समासेन ॥ 20

1. A. पृथक्त्वमहमिति विज्ञायते। 10. m. अल्प for अल्पा. 11. m. reads °मेव मतिज्ञा°. 12. bi. वर्णयिष्याम°; m. °त्रिकारार्थोयमथ°. 14. All our Mss. read कतमे पुनस्ते य एतेषामित्युच्यते, bi. as our text. 16. a. d. सोपमा कर्मोपसंग्रह एवार्थः. 17. a. d. अर्थोपसंग्रहार्थे। कर्मशब्दो हि &c. 19. a. b. d. भेदार्थं for त्रिधात्वं.

9. The लक्षण is given in the last section.

आह। किमविशेषेण सर्वे एतस्मिन्नर्थे निपतन्ति। नेत्युच्यते। **तेषामेते चत्वार उपमार्थे भवन्ति।** तेषां सर्वेषां मध्ये एत एव चत्वार इव न चित् नु च प्रायोवृत्त्योपमार्थे भवन्ति।

अधुनैवमुक्त्वा भाषाच्छन्दःप्रविभागेनोदाहरणमेकैकं दर्शयति। समासविस्तराभ्यां हि शास्त्राणि प्रतीयन्ते। तत्रायं तावत्। **इवेति भाषायां च** उपमार्थीयः। **अन्व-** 5
**ध्यायं च।** छन्दसि चेत्यर्थः। कश्चित् छन्दस्येव भवति न भाषायां कश्चिद्भाषायामेव न छन्दसि कश्चिदुभयत्र इत्यतो विभागेन प्रदर्श्यते।

आह। किमुदाहरणमिवेत्यस्योपमार्थीयस्य। का चोपमाशब्दस्य व्युत्पत्तिरिति। उच्यते। उपगम्यातयागुणैर्मीयत इत्युपमा। **अग्निरिवेन्द्र इवेति।**

10 "अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि।
हत्वाय शत्रून्वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व॥"

इत्येतदत्रोदाहरणम्। तपसः पुत्रो मन्युर्नाम तस्येयमार्षम्।

आह। ननु सर्वे एवायमृग्यजुःसामाथर्वात्मको ब्रह्मराशिरादित्यान्तःपुरुषस्य भगवतो हिरण्यगर्भस्य प्राणस्यार्षम्। ऐतरेयके रहस्यब्राह्मणे "शतर्चिनो माध्यमाः" इत्ये-
15 वमाद्यनुपरिक्रम्य पुनः पर्यावृत्य "एतमेव सन्तं शतर्चिन इत्याचक्षते" "एतमेव सन्तं गृत्समद इत्याचक्षते" इत्येवमादिना क्रमेण मन्त्रदृक्शब्दान् प्राणे

---

2 *a* इवनुचित्रच· प्रायोवृत्त्या &c, *b d* इवनचित्नर· प्रायोवृत्त्या &c. 4. *m* °समा; *d.* उदाहरणे for उदाहरणं; *m* adds च after दर्शयति; *m* omits all from समास° to व्युत्पत्तिरिति उच्यते l. 9 below. 6. *d.* om. च after अन्वध्याय. 8. *a. b. d.* °पमार्थीयत्वे for °पमार्थीयस्य of *bt.* 9 *a b. d. m.* read उपगम्यानयागुणैर्मीयते[ मीयित *m*. ]. 13 *a d* °र्ग्यजुःसामात्मको. 14. *m. bt.* हिरण्यगर्भप्राणस्य for हिरण्यगर्भस्य प्राणस्य of *a. b. d*; *bt.* मध्यमाः for माध्यमाः of *a. b. d. m.* 15. *a. d* पुनः पर्यावर्त्यैतमेव &c

---

9. The two examples are taken by Durga to be parts of two ṛiks one of which is explained in our Mss. here, and the other below. May it be that Yāska intended one of these as an illustration from the भाषा and the other from the Veda?

For quotation vide RS. X. 84. 2.

For quotation see Ait Ār. II. ii. 1. There the reading is शतर्चिन एतमेव सन्तम्, and there is also a similar inversion in the next

6. The

निगमयति। अपि चैता ऋचः शौनकेन संदृष्टा यस्यामार्षाणि चिन्त्यन्ते सा च स्मृतिः । श्रुतिस्मृत्योश्च विरोधे श्रुतिरेव गरीयसीति । न्यायविदः खल्वपि पठन्ति "विरोधे त्वनपेक्षं स्यात्" इति । तस्माद्विरोधाभिधानमनर्थकमेवेति । उच्यते । न ह्यकस्मादात्मनः परिशयमात्रशेषः सन् शौनकः कुर्यात् । पश्यतो ह्युभावपि । तेन क्षेत्रज्ञावुभावपि मन्त्राभिव्यक्तौ व्यापृतौ । बुद्धिदेवतात्वेन हिरण्यगर्भः क्षेत्रज्ञोवस्थितः सर्वभूतानां कर्म- 5
विपाकानुरूप्येण यमर्थं शब्दं वा दर्शयति तमितरो विशिष्टकर्मकारी क्षेत्रज्ञो बुद्धिस्थः पश्यति । तत्रैवं सति वसिष्ठादिर्मन्त्रदृक् क्षेत्रज्ञस्तेनैवोपदर्शितं मन्त्रं पश्यतीत्युभयमुपपद्यते । एवं सत्युभावपि याथात्म्यतस्तावदनुसंधेयौ मन्त्रप्रयोगकाले उभयोरर्थवत्त्वाय । यत् पुनरेतदुक्तं भवति श्रुतिस्मृत्योर्विरोधे स्मृतिरनपेक्षेति । न हि विरोधोस्त्युभयोरपि संधीयमानयोः । अपि च श्रुतिपूर्वकमेवेदं स्मरणं न स्वतन्त्रम् । ताण्डके हि रहस्यब्रा-10
ह्मणं दर्शयति "येन साम्ना स्तोष्यन् स्यात् तत्सामोपधावेत् । यस्यामृचि तामृचम् । यदार्षेयं तमृषिम्" इति । तत्र यदुक्तं स्मृतिरियमिति तदयुक्तम् । तस्माद्वक्तव्यमेव विशेषार्थमिति ।

---

1. *a. b. d. m.* अपि चैता ऋचः for अथापीदृशः of *bi*; *a. d.* संदृष्टा, *b.* सादृष्टा, *bi. m.* संदृष्टाः; *a. b. d.* चिन्त्यन्ते, *m. bi.* विद्यन्ते; *m.* तथा च for सा च. We read with *a. d.* as it makes sense, though the form संदृष्टा is ungrammatical. 3. *a. b. d. m.* न ह्यकस्मात् for नवैकस्मात् of *bi*. 4. All Mss. as well as *bi.* read परिशय°, but it makes no sense. Is it पुरिशय? The text is unintelligible yet retained as such for want of better help. 5, *a. d* व्याहृतौ for व्यापृतौ; *a. b. d. m.* क्षेत्रज्ञो व्यवस्थितः for क्षेत्रज्ञोऽवस्थितः of *bi*. 6. *a. b. d. m.* कर्मविपाकानुरूपेण for °रूप्येण of *bi.*; *m.* दर्शयते for दर्शयति; *a. d.* तमितरो for तदितरो of *bi*. 7. *d.* वसिष्ठादिमंत्रदृक्; *m.* om. from तत्रैवं सति to उभयमुपपद्यते; *a. d.* उभयमुत्पद्यते. 8. *a. d.* एव सत्युभावपि य[था *d.*]थात्म्यतस्तावन्नुसंध्येयो मन्त्रप्रयोगकाले उभयोरर्थवत्त्वाय, *b.* as the text, but has तौ for तावद्, *m.* यथात्मतस्तावदनुसंधेयः, and अर्थत्वाय; *m.* om. यत्. 9. *m.* om. पुनः and भवति; *bi.* °विरोधे श्रुतिरनपेक्ष्येति, *a. d.* स्मृतिरनपपेक्षेति, *b.* स्मृतिरनपेक्षेति (preferable), *m.* स्मृतिरपपेक्ष्यति। 10. *m.* काण्डके for ताण्डके. 11. *bi.* यत् साम्ना for येन साम्ना of all our Mss. 12. *bi.* यदार्षं for यदार्षेयं of all our Mss.; *a. d.* एतदुक्तं for तदयुक्तम् of *b. m. bi.*; *b.* यस्मात् for तस्मात्. 13. *bi.* विशिष्यार्थमिति, *m.* विशेषार्थमिति.

---

1. Grammar would require here संदृष्टाः for संदृष्टा. The स्मृति probably means the आर्षानुक्रमणी.

2. The quotation is from Jai. Sū. I. iii. 3.

त्रिष्टुबेषा मान्यवी श्येनादिषु निष्केवल्ये शस्यते । मन्युः पुनरिन्द्र एव माहाभाग्यात् कर्मपृथक्त्वाच्च । अथवा देवतान्तरं पृथगभिधानश्रुत्यभिसंबन्धात् ।

आह । ननु मान्यवो मन्त्रो माहेन्द्रग्रहयजिसंनिधौ निष्केवल्ये शस्यमानो महेन्द्रम-
भिहितिसंस्कारेणासमर्थ एव वक्तुम् । अथ किमर्थमयं निष्केवल्ये शस्यत इति । उच्यते ।
5 अन्यदेव हि स्तुत्यभिव्यङ्ग्यमपूर्वमारादुपकाराङ्गभूतं माहेन्द्रग्रहयजिव्यङ्ग्यस्यापूर्वस्य ।
" अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् " इति न्याय-
विदो याज्ञिकाः पठन्ति । वक्ष्यति चायमपि 'इतीमा देवता अनुक्रान्ताः सूक्तभाजो
हविर्भाज ऋग्भाजश्च भूयिष्ठाः' इति । ■ एष मन्युः स्तुतिभागेव । यथा " अभि
त्वा शूर " इति इन्द्र एव तस्मिन्निष्केवल्ये, यथा " आपो हि ष्ठा " इत्याप आभिमारुते ।
10 सूर्यादय आश्विने एवम् ।

हे मन्यो सहुरे–सहनशील एतस्मिन् शत्रूणामभिभवनकाले प्रत्युपस्थिते हूतः–
आहूतः सन् अस्माभिः सेनानीः–सेनाप्रणेता नः–अस्माकम् एधि–भव । ततश्च
अग्निरिव त्विषितः–दीप्तस्त्वं तेजसा भूत्वा सहस्व–अभिभव तानस्मच्छत्रून् । हत्वाथ–
हत्वैव यदेतेषामस्मच्छत्रूणां वेदः–धनं तत् त्वमादाय तेषामस्मद्योधानाम् ओजः–बलं
15 मिमानः–निर्माय यथावस्तु यथार्हं विभजस्व । येपि च केचिद्धतावशिष्टाः मृधः–

---

1. *d.* मान्यवे ; *a* निष्केवल्येषु 2 *a. b. d.* पृथगभिधानस्तुत्यभिधानसंबधत्वात *m.* °श्रुत्यभिसंबधात्, *bi.* °श्रुत्यभिधानसंबधात् 3 *m.* माहेन्द्र ग्रह°, *a d.* माहेन्द्रा ग्रहयजि° ; *m* माहेन्द्र for महेन्द्र. 4 *bi* अभिहितसंस्कारेण for °भिहितिस° of *a b d m.*, *m.* किमर्थमेय for °र्थमय. 5. *a b. d. m.* स्तुत्यभिव्यंग्य for स्तुत्यभि° of *bi* ; *m.* माहेन्द्र ग्रहयाजि°. 6 *b* अपि च for अपि वा ; *m* स्तुतिसंयोगात् ; *a d.* °शसतीति. *b. bi* °शसती. *m.* °शमति, *bi* विदधताम् for विदध्याताम् of all our Mss. 8. *a.* स्तुतिभागेन for °भागेव, *a. d.* add च after यथा. 9. *m* यथापोहिष्ठीये यथाभिमारुते. 11. *a. d* ■ सहनशीलि ; *m.* एतस्मिञ्छत्रूणां, ■ *b. d. m.* om हूत, *bi.* हूत:. 13 *bi.* om भूत्वा after तेजसा, *m.* om सहस्व and reads अभिभाव for अभिभव. 14. *a. d* add स्व before वेदः. 15. *b.* यद्यपि च केचिद्धतावशिष्टा मृधः &c

---

1 एषा i. e. RS. X 84. 2, given above fully. Jīvānanda's edn. cites RS. X 83. 2 in support of मन्यु पुनरिन्द्र एव.

6. For the quot see Jai Sū. II. 1. 24.

7. वक्ष्यति च i. e. in Nir. VII. 13.

8. For quot. see RS. VII. 32. 22.

9. The quot. is from RS. X. 9. 1.

मृधकारिणः अस्मद्विषः अस्मत्तः प्रत्याजिहीर्षन्त्येतद्धनं तेषामोजो मिमानः तुलयित्वा कियदवशिष्टबला होते न शक्ताः प्रत्याहर्तुमित्येव मिमानस्तावन्मात्रशेषबलान् कृत्वा त्वं वितुदस्व–एनान् दूरं प्रक्षिप अपुनरागमनाय ।

द्वितीयमुदाहरणमेतस्यैव

"इहैवैधि मापे च्योष्ठाः पर्वतइवाविचाचलिः।
इन्द्रइवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥" 5

अनया चानुष्टभा ध्रुव आङ्गिरसो राजानमभिषिषेच । इहैव–राष्ट्रे त्वम् एधि–भव । मा चातस्त्वम् अप च्योष्ठाः । पर्वत इव अविचाचलिः–अविचलनशीलः । इन्द्र इव च इह ध्रुवः–शाश्वतः तिष्ठ । स्थित्वा च इदं राष्ट्रम् इह उ–एव विभूतियोगेनावस्थितं धारय । इत्याशीः । 10

भाषायां प्रसिद्धमेवेति कृत्वा नोदाहरणं पठितम्। अथवा एते एव। अग्निरिव तीक्ष्णः। इन्द्र इव विक्रान्तः।

---

1. Between °न्त्येतद्धनम् and तेषां all our Mss. add:—तानपि वितुदस्व पुनः-पुनरागमनाय। अथवा ओज इत्यस्योत्तरेण वितुदस्वेत्यनेन क्रियापदेन योगः। कथं। हृत्वा यज्ञ्भाजयित्वा च तद्धनं ये केचिदवशिष्टा अस्मद्विषः प्रत्याजिहीर्षन्त्येतद्धनमस्मत्तः ( *v. l.* in this passage:—*m. b.* add भेरयस्व after वितुदस्व; *b.* यद्वा for अथवा; *m.* om. अनेन before क्रियापदेन; *b. m.* संबन्धः for योगः; *b.* om. च before तद्धनं; *b* हननावशिष्टाः after केचित्; *b.* अस्मद्विषन्. for द्विष; *b.* अस्मत् for अस्मत्तः. ); *b. m* तुलयित्वा for तूलयित्वा. 2. *a. d.* होते तेन शक्ताः; *m.* om. त्व. 3. *m.* om एनान्, प्रक्षिप, *a. b. d* om. प्रक्षिप. 4. *a.* एव तस्यैव for एतस्यैव. 7. *bi.* अभिषिषेच. 8. *a b. d m.* om. अविचाचलिः; *b.* om. च after इन्द्र इव. 9. *a. d.* om. च after स्थित्वा; *m.* reads राष्ट्रे for राष्ट्रं; *a b d. m.* om. इ; *a. d. m.* विभूतियोगे-ऽवस्थितं, *bi.*, °योगेन स्थितं. 11. *a. d.* पठन्ति, *b.* पठति, *m. bi.* पठितं.

---

1. The addition after °तद्धनं ( noticed in the *v. l.* given above ) is common to all our Mss. and would perhaps look natural. It also accounts for the repetition of ओजो मिमानः in construing the text as found in the reading of *bi.* which I have allowed to stand. The addition is not introduced in the body of the commentary as without it also a connected idea is somehow made out by the reading as it is printed. Yet I think it probable that the addition formed part of the original reading of the commentary.

5. The quot. is RS. X. 173. 2.

**नेति प्रतिषेधार्थीयो भाषायां** प्रसिद्धः । **उभयम**नरिन्द्र एव मन्यन्ताम् । "**नेन्द्रं देवममंसत**" इति । नेन्द्रं देवमात्मनो दीपयितारममन्यन्तार्यं । [illegible] । देवे अ ।

आह । किं पुनर्लक्षणमिति । उच्यते । **प्रतिषेधार्थीयः पु**र शस्यमानो ऽह्युपचारस्तस्य **यत् प्रतिषेधति । दुर्मदासो न सुरायामित्युपमार्थीय उ**ऽ इति । परिष्टादुपचा-
5 **रस्तस्य येनोपमिमीते** इति येनार्थेनोपमेयमर्थमुपमिमीते । तद्यथा

"हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम्
ऊधर्न नग्ना जरन्ते ॥"

काण्वो मेधातिथिराङ्गिरसश्च प्रियमेध ऐन्द्रं सूक्तं ददृशाते । तत्रैषा गायत्री । येषामपि विनियोगः क्वचिदन्यत्र नास्ति तेपि वाचःस्तोमे विनियुज्यन्ते । हृत्सु पीतासः-पीताः
10 सन्तो हृदयेष्ववस्थिताः सोमाः युध्यन्ते इव-संप्रहारमिव कुर्वन्ति अहं विशिष्ट इत्येवं स्पर्धमानाः । क इव । दुर्मदासो न । दुर्मदासः "आजसेरसुक्" । यथा कुत्सितमदाः केचित् पुरुषाः सुराया पीतायां सत्यां युध्येरन् एवम् । किं च तमेव यजमानं जरन्ते-स्तुवन्तीव आत्मलाभपरितुष्टाः । कथं जरन्ते । ऊधर्न-ऊधरिव-रात्रिमिव नग्नाः भूत्वा श्रियं संप्रयोक्ष्यामह इत्येवमभिप्राया इव केचिद्विशिष्टाः पुरुषाः ।

15 **चिदित्येषोनेककर्मा** । चिदित्येषोनेकार्थोपि सन्नुपमार्थीयसंयोगादत्रोदाहृतः । कथमयमनेकार्थ इति । उच्यते । **आचार्यश्चिदिदं ब्रूयादिति पूजायाम्** । आचार्य

---

2 m °मन्यत for ममन्यन्त, b. m इति शेष, d देवते शेष, bs om. it altogether. 3–5 a. d आह किं पुनर्लक्षणमिति । उपमार्थीय उपरि[वि d]ष्टादुपाचारस्तस्य येनार्थेनोपमेयमर्थमुपमिमीते, b आह किं पुनर्लक्षणमिति । दुर्मदासो न सुरायामिति उपमार्थीय उपरिष्टादुपाचारस्तस्य येनार्थेनोपमेयमर्थमुपमिमीयते, m om. इति after उपमिमीते. 9. a. d वाचास्तोमे for वाच स्तोमे. 10. bs. om. इव after युध्यन्ते 13. m स्तुवन्तीव for स्तुवन्तिव, b स्तुवन्ति च. 14. m समोक्ष्यामहे ?, Jivânanda's edn. adds after °मिप्राया इव –नग्ना स्तोतारः । ते च ऊधर्न पयसा पूर्णं गवादेरूध [illegible] सोमपूर्णं त्वां जरन्ते स्तुवन्ति इति सायण°, evidently a marginal note wrongly incorporated into the commentary. 15. a. d. उपमार्थी[d ये]यसङ्गेनोदाहृत. 16. m adds (between आचार्य. and एवं) कस्मादाचार्य आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा.

---

1. The quot. is from RS. X. 86. 1.
2. The reference is to Nir. XIII. 4. Paris'ishta.
6. The quot. is RS. VIII. 2. 12.
11. The quot. is Pāṇ. VII. i. 50.

[ कोन्य एवं वक्ष्यतीति । दधिचिदित्युपमार्थे दधिव ओदन इति ।
ांश्चिदाहरेत्यवकुत्सिते । भृशं कुत्सिते । कुल्माषानपि तावदाहरेति कि
ङ्करिष्यसि ॥

नु इत्येषोनेककर्मा । कथम् । इदं करिष्यतीति । कथं हि क्रियाया हेतु-
निमित्तमित्यर्थः । कथं नु करिष्यतीति पृष्ट्वा करिष्यतीत्युक्ते यत् पुनरनुपृच्छति कथं नु 5
करिष्यति तदनुज्ञानमेतस्मिन्ननुपृष्टे । नन्वेतदकार्षीदिति च । अनुपृष्ट एवायं
भवतीति । नन्वयमकार्षीदेतत् कथमयं ब्रवीति कथं करिष्यतीति । अथाप्युपमार्थे
भवति । तद्यथा

"अक्षो न चक्र्योः शूर बृहन्प्र ते मह्ना रिरिचे रोदस्योः ।
वृक्षस्य नु ते पुरुहूत वया व्यूतयो रुरुहुरिन्द्र पूर्वीः ॥" 10

भरद्वाजो बार्हस्पत्योस्यास्त्रिष्टुभः पूर्वेणार्धर्चेनेन्द्रं स्तुत्वोत्तरेणोपालब्धवान् । हे शूर
इन्द्र पुरुहूत महानक्ष इव चक्र्योः प्र रिरिचे-प्रकर्षेणातिरिच्यते तव मह्ना-महत्त्वेन
विभूतिः । कुतोतिरिच्यते । रोदस्योः-द्यावापृथिव्योः । तथापि नैवं विभूतियुक्तस्य
सतस्तव त्वद्भक्तानामेवास्माकं सतो वृक्षस्येव वयाः-शाखाः पूर्वीस्तयः-पूर्वैस्तावदागम-
नमार्गाः विरुरुहुः-शिलीभूतास्तवानागमनात् । अहो कष्टं मन्दभागधेयतास्माकं येन 15
नो धनं तदस्ति येन त्वा यजेमहि । किमत्र त्वो वक्ष्याम इति ।

---

1. *a. d.* ओदनमिति. 2. *m.* adds कुल्माषाः कुलेषु सीदन्ति । after भृशं कुत्सिते. 3. *d.* क्रिया° for क्रिया°; *b.* आहरिष्यसि for °सि. 4. *m.* adds हेत्वपदेशो after करिष्यतीति, *m.* क्रिया for क्रियाया, *d. m.* हेतुनिमित्त°. 5. *b.* om. नु after कथं; *m.* om. करिष्यतीति पृष्ट्वा; *m.* °मनुपृच्छति for °ति 6. *m.* °नुज्ञात° for °नुज्ञान°. 7. *a. b. d.* अथाप्यपमुपमार्थे भवति. 8. *a.* om. तद्यथा. 11. *b.* adds इति after पूर्वीः; *a. d.* बारिश्विनो after बार्हस्पत्यो. 12. *a. b. d.* चक्रयोः for चक्र्योः. 14 *m.* adds तेषु after वृक्षस्येव; *bi.* पूर्वीस्त° for पूर्वैस्त° of our Mss. 15. *bi.* तवागम° for तवानाग° of our Mss. 16. *bi.* adds न after धनं; *b. m.* वक्ष्याम for वक्ष्यामः.

---

4-6. All the Mss. of the commentary as well as the editions are unsatisfactory from इदं नु to अनुपृष्टे. May the text be इदं नु करिष्यतीति पृष्ट्वा करिष्यतीत्युक्ते यत्पुनरनुपृच्छति कथं नु करिष्यतीति तदनुज्ञानमस्मिन्ननुपृष्टे ? I allow the text to stand as the Mss. read it, but I cannot understand the passage as it is.

9. The ṛik quoted is RS. VI. 24 3.

वयाः-शाखा इति पर्यायवचनः । वेतेर्वया इति निगमप्रसक्तस्य निर्वचनम् । शाखा खशयाः इति पर्यायप्रसक्तस्य । व्याख्याता उपमार्थीयाः ॥

अथानन्तरं प्रतिज्ञाप्रसक्तानेव कर्मोपसंग्रहार्थान् वक्ष्यामः । **अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहेण पृथक्त्वात्स कर्मोपसंग्रहः।**
5 यस्यागमादध्याहारादश्रूयमाणस्यैव निपातस्य सरूपविरूपैकशेषादर्थतो वा पृथक्त्वमह पृथग्भाव एव विज्ञायते । तद्यथा देवदत्तयज्ञदत्तौ देवदत्तश्च यज्ञदत्तश्चेति ।

आह । द्वावप्यत्र देवदत्तयज्ञदत्तौ श्रूयेते न तु तयोरौद्देशिकमिव पृथक्त्वमिति यथा गाः अश्वान् पुरुषान् पशूनिति प्रत्येकमुद्दिश्यमानानाम् । इह तु विग्रहेण चशब्दागमादेतत् पृथक्त्वमुपजायते । नानाग्रहणं द्वयोर्बहूनामर्थानां विग्रहः । स एव पृथक्त्वाद्धेतोः
10 पृथक्त्वेन निमित्तेनोपलक्ष्यमाणो यस्माद् द्वावर्थौ बहून् वा गृहीत्वैकस्मिन् कर्मण्युपसमावेशयति तद्यथा देवदत्तयज्ञदत्तौ पचेते इत्येवम् । तस्मात् कर्मोपसंग्रह इत्येतन्नामैव तद्भवति । अथवा बृहस्पतिश्चेत्युक्ते प्रजापतिरनुक्तोऽपि द्वितीयो गम्यते प्रजापतिश्चेति ।

कतमः पुनरसाविति । उच्यते **चेति** कदाचिदयमेव **समुच्चयार्थः** उभाभ्यामपर्यायाभ्यां विगृहीताभ्यामेव संयुक्तः प्रयुज्यते । यथा

15 "अहं च त्वं च वृत्रहन्त्सं युज्याव सनिभ्य आ ।
अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः ॥"

घोरपुत्रः प्रगाथोनयेन्द्या पत्न्या इन्द्रस्य सख्यार्थी सन्नब्रवीत् । हे वृत्रहन्-इन्द्र ! अहं च-प्रगाथः त्वं च सं युज्याव एकस्मिन्नर्थे सति प्राप्तिलक्षणे युज्यावहै आ सनिभ्यः -आ प्राप्तेः । अरातीवा इत्येकं पदम् । अथैवमावां संयुक्तौ दृष्ट्वा हे अद्रिवः । अद्रिवज्रस्त-

5 *a. b d.* °विरूपैकशेषादर्थपृथक्त्वमह, but *b.* om अह. 7. *m* नतु for न तु. 8 *d* प्रत्येकिमु° ?, *d* om. च after विग्रहेण. 9 *a. d* तेनाग्रहण for नानाग्रहणं, *b.* नानात्वेन ग्रहण, *a. d* स एव for स एव. 10. *a.* एतस्मिन् for एकस्मिन्. 11. *m.* इत्येवं नामैव for इत्येतन्नामैव. 13 *d.* कदाचिदयमेव. 14. *b. m.* सम्प्रयुक्तः for संयुक्तः. 17. *a. d.* om पत्न्या; *m.* सख्यार्थी। 18. *d. m.* प्रगाथस्त्वं, *bt.* प्रगाथ त्वं १; *b.* युज्यावहे for युज्यावहै, *a. d.* आ सनि प्राप्तेः.

1 Should it not be पर्यायवचनम्? We read, however, with all our Mss. and *bt*.

15. The quotation is RS. VIII. 62. 11.

दन् । हे शूर विक्रान्तेन्द्र अरातीवा चित् । अदानशीलोपि दानशीलतामुपेत्यानुमंस्यत एवावयोर्दानम् । मद्राः–मन्दनीयाः इन्द्रस्य रातयः–दानानीत्येवं मन्यमानः । को हि नाम त्वत्संयुक्तानामस्माकं न दद्यादित्यभिप्रायः ॥

अथाप्याकारः । एतस्मिन्नेवार्थे–समुच्चयार्थे देवेभ्यश्च पितृभ्य एत्याकारः । अयमस्मिन्मन्त्र आकारः 5

"यो अग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः ।
प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥"

अनुष्टुप् याम्नी पितृयज्ञे विनियुक्ता । योग्निः कव्यस्य वोढा यस्यायमधिकारः कव्यानि वोढव्यानीति स इहास्माकं पितृयज्ञे होतृत्वेन स्थितः पितॄन् आहूय यक्षत् –पूजयन्नित्यर्थः । किंलक्षणान् ऋतावृधः–सत्यवृधो वा यज्ञवृधो वा । किंच । प्रेदु हव्यानि 10 वोचति–वोचतु च प्रब्रवीत्वेतानि हवींष्यस्मत्प्रदत्तानि । कस्मै । देवेभ्यश्च पितृभ्यश्च इति ॥

वेति अर्थं विचारणार्थे । समुच्चयार्थीयप्रसङ्गेनोदाह्रियते
"हन्ताहं पृथिवीमिमां निदधानीह वेह वा । कुवित्सोमस्यापामिति ॥"

ऐन्द्री लवस्तस्येयमार्षं गायत्री । हन्त इदानीमेव अहम् इमां पृथिवीं इह वा 15 अन्तरिक्षलोके । इह वा–द्युलोके । अथवा इह–दक्षिणे स्कन्धे इह वा–सव्ये निदधानि–अवस्थापयामि अतः स्थानादुद्धृत्य । अथ किमर्थं ब्रूषे कुवित्सोमस्य–बहुदं सोमं अपा–पीतवानिति । अस्य मे सोमपानस्यानुरूपमेव वीर्यमस्तीत्यभिप्रायः ।

अथापि वेत्ययं समुच्चयार्थे भवति ॥ ४ ॥

---

1. *a. d.* om. अरातीवा चित्; *a. d. bi.* om. after ( अद्रिव ) अद्रिर्वंप्रस्तवन् हे शूर विक्रान्तेन्द्र; *a.* अनुमंसत, *m.* अनुमंतस्यत? 4. *a* आकार, *d* अथाप्याकारः; *a. d.* एतस्मिन्समुच्चयार्थे, *b.* अथाकार एतस्मिन्समुच्चयार्थे. 5. *d.* अयमेतस्मिन् 6. *a. b d.* कव्यवाहन. ? 8. *bi.* याम्नी for याम्नी of *a. b. d. m.*; *a. d.* कव्यवोढा, *b.* कव्यस्य वोढा. 9. *a. d.* होतृत्वेन व्यवस्थित; *bi.* om. आहूय after पितॄन्. 11. *a.* वोचतु वा, *a. b. d. m.* read °प्रत्तानि for °प्रदत्तानि of *bi.* 15. *b.* ऐन्द्रो for ऐन्द्री, *b.* तस्येदमार्षं, *m.* लवस्येयमार्ष? 16. *m.* अथ for अथवा, and दक्षिणस्कन्धे for दक्षिणे स्कन्धे. 17. *bi.* ब्रूते for ब्रूषे of our Mss. 18. *a. d.* वीर्यमप्यस्तीत्यभिप्रायः. 19. *m.* om. वेत्ययं.

---

6. RS. X. 16. 11.
14. RS. X. 119. 9.

-वायुर्वा त्वा मनुर्वा त्वेति ॥ अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण संप्रयुज्येते। [अयमहेदं करोत्वयमिदमिदं ह करिष्यतीदं न करिष्यतीत्यथाप्युकार एतस्मिन्नेवार्थ उत्तरेण मृषेमे वदन्ति सत्यमु ते वदन्तीत्यथापि पदपूरण इदमु तदु। हीत्येषोऽनेककर्मेदं हि करिष्यतीति हेत्वपदेशे। कथं हि करिष्यतीत्यनुपृष्टे। कथं हि व्याकरिष्यतीत्यसूयायाम्। किलेति विद्याप्रकर्ष एवं किलेत्यथापि न ननु इत्येताभ्यां संप्रयुज्यतेऽनुपृष्टे न किलैवं ननु किलैवम्। मेति प्रतिषेधे। मा कार्षीर्मा हार्षीरिति च। खल्विति च खलु कृत्वा खलु कृतमथापि पदपूरण एवं खलु तद्बभूवेति। शश्वदिति विचिकित्सार्थीयो भाषायां शश्वदेवमित्यनुपृष्ट एवं शश्वदित्यस्वयं पृष्टे। नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायं विचिकित्सार्थीयश्च पदपूरणश्चागस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः संप्रदित्सांचकार। स इन्द्र एत्य परिदेवयांचक्रे ॥५॥

वायुर्वा त्वा मनुर्वा त्वेति।

"वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः।
ते अग्रेऽश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः ॥"

---

1. A. Bı. conclude Pâ. 2. Kh. 3. here after त्वेति. 2. R. करोत्वयमिदं ह all others as text; A C नु for म 7. B. C. R. ननु किलैवं मेति प्रतिषेधे, A D. Bı. किलैव मेति. 11. A. अगस्त्य. 12. A. Bi. conclude Pâ 2. Kh. 4. here after परिदेवयांचक्रे. B. concludes also the second पाद. Some Mss. of the commentary conclude the *2nd* pâda at the end of the next section A concludes the *2nd* pâda at the end of the *3rd* pâda of Bi. 13. *a. d.* मनुर्वो त्वा। अस्मिन्मन्त्रे। अनुष्टुबेषा &c 15. *b.* अश्वमायुञ्जन्.

---

4. Durga regards इदमु and तदु as the initial words of two ṛiks, for which see commentary These may, however, be alike the other examples in this sect.

14. VS. IX. 7. is very similar to this in sense and reading. It reads वातो वा मनो वा गन्धर्वाः &c.

स्वनुष्ठेया । वाजपेयेऽश्वयोजने विनियुक्ता । हे अश्व वायुश्च त्वा मनुश्च त्वा गन्धर्वाश्च एते सप्तविंशतिर्युञ्जन्ति त्वामस्मिन् रथे । ते हि विदुर्यथा त्वं योक्तव्यः । त एव च पूर्वमप्यश्वं युक्तवन्तो देवानामृषीणां च । त एव च तस्मिन्नश्वे जवमादधुरपि हितवन्तो यस्मात्ततो ब्रवीमि ममापि चाश्वं तमश्वं त एव युञ्जन्तु जवं चास्मिन्नादधत्विति ।

अह इति च उ इति च द्वावप्येतौ विनिग्रहार्थीयौ । तयोः पुनरेतयोरेतत् प्रयोगस्वाभाव्यम् । द्वयोरर्थयोरेककाले प्रकृतयोः पूर्वेण पूर्ववाक्यगतेनार्थेन संयुक्तौ प्रयुज्येते । तद्यथा । अयमहेदं करोत्वयमिदम् । अयमह यज्ञदत्तो गाः पाययतु अयं देवदत्तो मुद्गानिति ।

हकारस्योदाहरणम् । इदं ह करिष्यति । यज्ञदत्त इदं ह करिष्यति । इदं न करिष्यतीति । ओदनं न पक्ष्यतीति ।

अथाप्युकार एतस्मिन्नेवार्थ उत्तरेण । विनिग्रहार्थे भवति । स पुनरुत्तरेण द्वितीयवाक्यगतेनार्थेन संयुक्तः प्रयुज्यते । तद्यथा । मृषेमे कुत्सा वदन्ति । सत्यमु ते ब्राह्मणा वदन्तीति । विनिग्रहो नाम विभागेनावस्थितयोर्यज्ञदत्तदेवदत्तयोरेकस्मिन् यज्ञदत्तेऽभिमतरसगोपायनस्य नियमेन ग्रहणं यत् स विनिग्रहः । तदर्थो विनिग्रहार्थः । विनिग्रहार्थ एव विनिग्रहार्थीयः ।

अथापि उकारः पदपूरणः भवति ।

"इदमु त्यत् पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥"

---

2. *b. m.* अस्मिन्नर्थे for चास्मिन् रथे; *bi.* एव च for त एव च of *a. b. d. m.* 3. *m.* युक्तः for युक्तवन्तः; *b. m.* अस्मिन् for तस्मिन्; *m.* om. ते before एव च. 4. *bi.* चाश्वे for चाश्वं. 5. *b. m.* विनिग्रहार्थीयौ पूर्वेण सम्प्रयुज्येते. 6. *m.* प्रयोगस्वाभाव्यम्; *b. d. m.* om. पूर्वेण ; *b.* संयुक्तो for संयुक्तौ. 8. *m.* मुद्गे for मुद्गान्? 9. *a. d.* °स्योदाहरणम् । इदं ह करिष्यति यज्ञदत्त इदं न करिष्यति ओदनं न पक्ष्यतीति । *b.* °स्योदाहरणम् । इदं ह करिष्यति इदं न करिष्यतीति । यज्ञदत्त इदं ह करिष्यति ओदनं न पक्ष्यतीति । 10. *m.* om. इति after करिष्यति. 11. *a. d.* अथाप्युकार एतस्मिन्नेव विनिग्रहार्थे भवति. 12. *bi.* संयुक्ते for संयुक्तः of *a. b. d. m.*; *m.* reads the *pratika* मृषेमे वदन्ति सत्यमु ते वदन्तीति and then adds कुत्सा वदन्तीति ब्राह्मणा वदन्तीति. 14. *m.* अभिमतगोपायनस्य ? 16. *a. d.* अथाप्यपदपूरकार; *m.* पदपूरणे for °पूरणः.

---

17. RS. IV. 51. 1.

वामदेवो गौतमोऽनया त्रिष्टुभोपसं तुष्टाव। प्रातरनुवाकाश्विनयोः शस्यते। इदं तत् ज्योतिः यत् जनाः कथयन्ति। उकारः पदपूरणः। एतत् पुरुतमं बहुतमम्। कुतः पुरुतमम्। तमसः। यदभिभूय शार्वरं तमः स्वमात्मानमभिव्यनक्ति। अत एव तद् बहुतमम्। पुरस्तात् प्राच्यां दिशि ज्योतिः वयुनवत्–प्रज्ञानवदुत्तिष्ठति। नूनं निश्चयेन
5 एता उषसः दिवो दुहितरः। रूपसामान्यात् दुहितृत्वम्। विभातीः–विभासमानाः गातुं गमनमपि कृतार्थं जनाना कृणवन् कुर्वन्त्य आगच्छन्ति यथेयमनुरज्यते प्राची दिक् विध्वंसते च तमः। एकस्या एव पूजनार्थे बहुवचनम्।

"तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः।
उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्य१श्चतस्रः॥"

10 द्वितीयमुदाहरणमस्यैव। गौतमो नोधा अनया त्रिष्टुभेन्द्रमस्तौत्। प्रवर्ग्ये विनियुक्ता। तत् प्रकर्षेण यक्षतमं–पूज्यतमम्। उ इति पदपूरण एव। अस्य–इन्द्रस्य दस्मस्य–दासयितुर्दर्शनीयस्य वा चारुतमं–शोभनतमम्। अन्यदपि तस्य अस्ति दंसः–कर्म किमपि बहुप्रकारं तत्रार्थेन पूज्यमेव। इदमेव तस्य चारुतमं च पूज्यतमं च। तत् किम्। उपह्वरे यत् उपराः अपिन्वत्। उपह्वानमर्हन्ति यस्मिन् देशेऽवस्थिताः
15 सहायाः स उपह्वरो देशः–जनैरनाकीर्णो यस्मिन्नेकाकी यत् उपराः–मेघपूरिताः मध्वर्णसः–मधूदकाः चतस्रः नद्यः–नदीः अपिन्वत्–अपातयत् अक्षारयत्। वर्षद्वारेण यज्ञादि प्रावर्तयत् इत्यतः एतदेवास्य चारुतमं पूज्यतमं चेत्यभिप्रायः।

---

2. *m.* यजना for मजानाः; *b.* पदपूरणार्थः for पदपूरणः. 5. *bi.* दुहितृत्वात् for दुहितृत्वम् of all our Mss. 6 *bi* कृणवत् for कृणवन् of all others. 7. *bi.* विध्वस्यते for °ध्वंस° of all our Mss; *b.* एकस्यां for एकस्या. 10. *a. d.* नोधानया, *b.* नोधा अनया, *bi* नोधाश्चानया, *m.* om. these. 11. *b.* पदपूरण for °पूरण. 13. *b.* तत्रार्थ पूज्यमेव, *m* तत्रार्थेष्वेव?, *m* पूज्यतमे for पूज्यतमं. 14. *a. d. m.* यत् for तत् before किं. 15. *a. d* om. स and read जनैराकीर्णे for जनैरनाकीर्णो; *b.* तस्मिन् for यस्मिन्; *a b d. m.* om. मध्वर्णस and नदीः. 16. *a. d. m.* अप आनयत् for अपातयत्; *a d.* om अक्षारयत्; 17. *a. d. m* यज्ञादि वर्षद्वारेण प्रावर्तयत इत्येत एतदेवास्य चारुतमे पूज्यतमं [om *m.*] चेत्यभिप्राय, *b* यज्ञादि वर्षद्वारेण and चारुतमं पूज्यतमं चेत्यभिप्राय., *bi.* चारुतमत्वं पूज्यतमत्वं च°.

---

8. RS. I. 62. 6.

**हीत्येषोऽनेककर्मा ।** तद्यथा । **इदं हि करिष्यतीति हेत्वपदेशे । कथं हि करिष्यतीत्यनुपृष्टे । कथं हि व्याकरिष्यतीत्यसूयायाम् ।** कथमयं व्याकरिष्यतीत्यकृतप्रयत्नोऽर्थमित्यभिप्रायः । असमर्थस्यासाच्छन्दपूर्वकोऽभिप्रायः परिवादोऽसूयेत्युच्यते । परगुणानभ्यनुज्ञेत्यर्थः ।

**किलेति विद्याप्रकर्षे**-विज्ञानातिशय इत्यर्थः । अन्यत उपश्रुत्यातिशयेनावधार्यान्यस्मा आचष्टे कश्चिन् एवं किल एतदासीद्युद्धमिति । 5

**अथापि न ननु इत्येताभ्यां संयुक्तः** किलेत्ययं **प्रयुज्यते अनुपृष्टे** अर्थे । अन्यत उपश्रुत्य कंचिदर्थं नायमेवमिति ततस्तमेवार्थमन्यमनुपृच्छति । अथेतरमश्रद्दधानस्य **न किलैवम्** इति । **ननु किलैवम्** इति ।

**मेति** अयं **प्रतिषेधे ।** तद्यथा । **मा कार्षीर्मा हार्षीरिति च** अयं च प्रतिषेधार्थीय एव । 10

**खल्विति च ।** तद्यथा । **खलु कृत्वा ।** अकृत्वेत्यर्थः । देशभाषाव्यवस्थयैवंजातीयानामुपक्षिन्प्यः क्वचिन् प्रयोगः । **अथापि** खल्वित्ययं **पदपूरणो** भवति । तद्यथा । **एवं खलु तद्बभूवेति ।** अन्वीक्ष्यः प्रयोगः कवितादवृत्तेषु ।

**शश्वदिति विचिकित्सार्थीयो भाषायाम् ।** छन्दसि पुनरन्येष्वप्यर्थेषु भवति । 15 यथासंभवं द्रष्टव्यः । इयं चास्य शैल्यर्थमपेक्ष्य । एवंशब्दस्य पुरस्तात्प्रयोगो वा भवत्युपरिष्टाद्वा । तद्यथा । **शश्वदेवमित्यनुपृष्टे एवं शश्वदित्यस्वयंपृष्टे ।** अयं इति वाक्यशेषः ।

**नूनमिति विचिकित्सार्थीयो भाषायाम् ।** विचिकित्सा नाम विवेकपूर्वकोऽवधारणाभिप्रायः । तत्रायं भाषायां भवति । **उभयमन्वध्यायम् ।** छन्दसि पुनरयमर्थद्वये भवति । **विचिकित्सार्थीयश्च पदपूरणश्च ।** 20

---

1. *m.* adds ऽ before हीत्येषो°. 3. *b.* om. इति after व्याकरिष्यति. 4. *bi.* परगुणानभिज्ञेत्यर्थः, we read with our Mss. 5. *bi.* adds after इत्यर्थः-अन्यत उपश्रुत्यातिशय इत्यर्थः. 6. *m.* एवं किलेति. 8. *m.* अर्थान्तर° for अथेतरम°. 10. *m* om. अयं after मेति, *m.* om. च after अयं, *b.* खल्विति चायं प्रतिषेधार्थीय एव । तद्यथा &c. for अयं च प्रतिषेधार्थीय एव । खल्विति च । तद्यथा &c. 12. *a. b. d.* add वा after तद्यथा; *a. d.* देशभाषाव्यवस्थितयैवं &c. 14. *m.* अन्विष्य for अन्वीक्ष्यः. 15. *a. d.* अन्येष्वर्थे भवति. 16. *a. d.* शैली for शैल्यी, *b.* अपेक्ष्य for अपेक्ष्य. 19. *a. d.* om. अयं, and read अन्वध्यायं पुनरयमर्थद्वये &c., *b.* उभयमन्वध्यायं छन्दसि पुन° &c., *bi.* om. छन्दसि.

उदाहरणमत्र निर्विवक्षुर्निदानमेवाह। अगस्त्य इन्द्राय इत्यादि। निदानवतां मन्त्राणां निदानमेव पूर्वं वक्तव्यम्। तेन ह्यतिनरामर्थ उच्यमानः प्रकाशते। ततः पदानि। ततोर्थः। ततः प्रत्येकं विग्रहेण निर्वचनम्। एष हि व्याख्याक्रमः। अगः कुम्भस्तत्र स्त्यानः संहत इत्यगस्त्यः। स इन्द्राय हविर्निरुप्य मरुद्भ्यः संप्र-
5 दित्सांचकार। संप्रदातुमैच्छदित्यर्थः। स इन्द्र एत्य परिदेवयांचक्रे। परि-देवना नाम मन्युपूर्वको विलापः ॥ ५ ॥

"न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम्।
अन्यस्य चित्तमभिसंचरेण्यमुताधीतं वि नश्यति ॥"

न नूनमस्त्यद्यतनं नो एव श्वस्तनमद्यास्मिन् द्यवि। द्युरित्यह्नो नाम-
10 धेयं द्योतत इति सतः। श्व उपाशंसनीयः कालो ह्यो हीनः कालः। कस्त-द्वेद यदद्भुतम्। कस्तद्वेद यदभूतमिदमपीतरदद्भुतमभूतमिवान्यस्य चित्तमभिसंचरेण्यमभिसंचार्यन्यो नानेयश्चित्तं चेततेरुताधीतं विनश्य-तीत्यप्याध्यातं विनश्यत्याध्यातमभिप्रेतमथापि पदपूरणः ॥ ६ ॥

न नूनमस्ति इति। विचार्यमेतन्मन्त्रमेनत्तावत्। अद्यतनं हविर्मम नास्तीति। नकारं
15 ह्यद्यतनशब्दोध्याहृत आचार्येण। प्रतिषेधे हि सति प्रतिषेध्येनाप्यवश्यं भवितव्यमिति। एते च मन्त्रैकदेशा एव सन्तोध्याहाराः पदातिरेकादध्ययनकाले नाधीयन्ते। ते त्वर्थ-

---

1. m reads विविक्षु for निर्विवक्षु; b. m. om. इत्यादि. 2. bi. अर्थेऽनुच्यमान°. 3 b. शब्दनिर्वचनम् for निर्वचनम्; a. d. एष हि व्याख्याक्रमः. 4. a. b. d. m. इन्द्राय for इन्द्राय; bi निरूप्य. 5 m प्रदातुं for संप्रदातुं, a. d m. उपेत्य for एत्य. 6 After विलाप bi. concludes sect. 4. and adds the colophon इति निरुक्तवृत्तौ षष्ठाध्यायस्य द्वितीयः पादः, a. concludes section as ॥ १० ॥ but does not conclude the pāda, b. c. d. conclude sect. 5 but do not mark the pāda. 11. A. B. °भूतमिति वा° for °भूतमिव°. 12, 13. B. C. D. R. as above, A. Bi. उताधीतं विनश्यतीत्याध्यातमभि°; Bi. concludes sect. 1 of the 3rd pāda after पदपूरणः; A. however concludes sect 5 of the 2nd pāda. 15. m. ह्यध्याहृयते for ह्यध्याहृत, a. om. सति; a. d. om. अपि; m. प्रतिषेधेन for प्रतिषेध्येन. 16. b. पद for पद; m. °रेकाध्यय° for °रेकादध्यय°.

---

7. RS. I 170. 1,

निर्वचनकाले प्रकाशयितव्याः । अथापि स्यात् श्वस्तनं भविष्यतीति । **नो श्वः** । इदं तावदस्मदर्थमेव निरुप्तं सदस्मत्तो व्यापन्नमद्य श्वस्तने का प्रत्याशा । किं कारणम् । **कस्तद्वेद यदद्भुतम्** । को हि नाम तद्वेद-जानाति यदद्भुतमनुत्पन्नं कस्य भविष्यतीति मम वा अन्यस्य वेति । कस्मात् पुनर्न विज्ञायत इति । अतो यस्मात् **अन्यस्य चित्त-मभिसंचरेण्यं**-संचरणशीलमनवस्थितमित्यभिप्रायः । उत अपि अथेति छन्दसि 5 समानार्थाः । एतदद्यतनं हविः **आधीतम्**-आध्यातमभिप्रेतं सत् मया ममेदमित्येवं तथापि **विनश्यति** एवान्यस्मै प्रदीयते । तत्रैवं सति श्वस्तनमस्माकं भविष्यतीति कुत एतदिति समस्तार्थः ।

अथैकपदनिरुक्तम् । **अद्य अस्मिन् द्यवि** । **द्युरित्यह्नो नामधेयम्** । **द्योतत इति सतः** । द्योततेर्द्युरिति । द्योतन इति कर्तृकारकम् । द्यविति यत्र भूया- 10 सश्चोपचरित एव कारकनियमो द्रष्टव्यः । अन्यत्र यथेष्टं योज्यम् । **श्व उपाशंसनीयः** उपगम्य सचेतसा आशास्यो भवत्यनागतत्वात् । **ह्यो हीनः कालः** । अतिक्रान्तो हि स भवति । श्वःसंबन्धात् ह्यःशब्दोविद्यमानोऽपि निरुक्तः । **अद्भुतम्-अभूतम्** । **इदमपीतरदद्भुतम्** शोणितवर्षादि अभूतमिव कादाचित्कत्वात् । शब्दसारूप्य-प्रयत्नेनेदं निरुक्तम् । **अन्यो नानेयः** नानात्वेन व्यवस्थितस्यापत्यमपरकुलजस्येत्यर्थः । 15 अथवा न सनामानेयः । **चित्तं चेततेः** । चेतत्यनेनार्थानिति चित्तम् । **उताधीतं विनश्यतीति** । **आध्यातम्-अभिप्रेतम्** इति पर्यायवचनम् । एवमयमस्मिन्मन्त्रे विचिकित्सार्थीयः ॥ ६ ॥

---

2. *b*₁. सदस्मत्तो for सदस्मत्तो of all our Mss.; *b*₁. व्याप नूनमद्य for व्यापन्नमद्य of *b*. *m*., *a*. *d*. व्यापन्नमद्य. 3. *m*. अद्भुतमुत्पन्न । 4 *m*. विज्ञायेति । 6. *b*. *d*. सत for सत्. 7. *b*. *d* तत्र for तत्र. 9. *b*₁. om अद्य. 10. *a*. *b*. *d*. *m*. द्योतते तदिति द्युरिति कर्तृकारकम् 11. *a*. *d*. तत्र तत्र for तत्र ; *d*. श्व इति उपाशंसनीयः; *b*. adds कालः after उपाशंसनीयः. 12. *b*. सचेतसा, *b*₁. सचेतसा, *a*. *d*. चेतसा ; *m*. adds कालो before ह्यो as also before अतिक्रान्तो. 13. *m*. reads संबन्धात् for श्वःसंबन्धात् ; *b*₁. "विमानो" for विद्यमानो" of all our Mss. । 14. *a*. *b*. *d*. कदाचित्कत्वात्. 17. *m*. om. इति after विनश्यति ; *b*₁. om. एवम-यमस्मिन्मन्त्रे विचिकित्सार्थीयः । of all our Mss.

अथापि सन्नन्यस्मिन्नर्थे पदपूरणो भवति।

"नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः॥"

सा ते प्रति दुग्धां वरं जरित्रे। वरो वरयितव्यो भवति। जरिता
5 गरिता। दक्षिणा मघोनी मघवती। मघमिति धननामधेयं मंहतेर्दा-
नकर्मणो दक्षिणा दक्षतेः समर्धयतिकर्मणो व्यृद्धं समर्धयतीत्यपि वा
प्रदक्षिणागमनाद्दिशमभिप्रेत्य दिग्घस्तप्रकृतिर्दक्षिणो हस्तो दक्षतेरु-
त्साहकर्मणो दाशतेर्वा स्याद्दानकर्मणो हस्तो हन्तेः प्राशुर्हनने। देहि
स्तोतृभ्यः कामान्मास्मानतिदंहीर्मास्मानतिहाय दा भगो नोऽस्तु।
10 बृहद्वदेम स्वे वेदने। भगो भजतेर्बृहदिति महतो नामधेयं परिवृढं भवति।
वीरवन्तः कल्याणवीरा वा वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गति-
कर्मणो वीरयतेर्वा॥ सीमिति परिग्रहार्थीयो वा पदपूरणो वा। "प्र
सीमादित्यो असृजत्"। प्रासृजदिति वा प्रासृजत्सर्वत इति वा।

"वि सीमतः सुरुचो वेन आवः"

15 इति च। व्यवृणोत्सर्वत आदित्यः सुरुच आदित्यरश्मयः सुरोचनात्।
अपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणं सीम्नः
सीमतः सीमातो मर्यादातः। सीमा मर्यादा विषीव्यति देशाविति॥
त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तमर्धनामेत्येके॥ ७॥

---

1. Bi. कस्मिन् for अन्यस्मिन्; after भवति a. A. add इति निरुक्ते प्रथमाध्यायस्य द्वितीयः पादः. 5. A. मंहते for मंहते. 9. C. R. नोऽस्तु. Bi. नो अस्तु. 10. C. D. R. परिवृढं. Bi. परिवृढं 17. A. व्यर्थीव्यति. Bi. विसीव्यति. B. C. D. R. विषीव्यति 18. A. concludes sect. 6 of the 2nd pâda, and Bi. sect. 2 of the 3rd pâda after इत्येके.

---

2. RS. II. 11. 21.

12. The quotation is from RS. II. 28. 4.

14. The quotation is from VS. XIII. 3, or SS. (Chh. âr.) IV. i. 3. 9.

**नूनं सा ते** इति । गृत्समदस्येयमार्षम् । पृष्ठ्यस्य चतुर्थेऽहनि मरुत्वतीये शस्यते ।
**नूनम्** इति पदपूरण एव । **सा दक्षिणा ते**–तव या पुत्रभावके कर्मणि । सा किं
करोतु । **प्रति दुग्धाम्** । किम् । **वरम्** । कर्मणो दक्षिणागुणकात् फलप्राप्तिस्तथापि हि
दक्षिणायामुपचर्यते । कस्मै । **जरित्रे**–स्तुवते यजमानाय । किंलक्षणा । **मघोनी**–
**मघवती**–हिरण्यधान्यादिधनेन संयुक्ता तद्वतीत्यर्थः । किंच **शिक्ष**–**देहि** । कस्मै । 5
**स्तोतृभ्यः**–ऋत्विग्भ्योनुकामान् । किंच **माति धक्**–**मास्मानतिधाय**–अती-
त्यान्येभ्यो देहीति मा दा इत्यर्थः अस्मभ्यं तावद्देहि ततोन्येभ्योपि दास्यसि चेत्यभि-
प्रायः । किं च **भगो नः**–धनं नोस्तु । येन किं कुर्याम । **बृहद्वदेम**–महदर्जितं वदेम
दीयतां भुज्यतामिति । क । **विदथे**–यज्ञे । अथवा स्वे गृहे । किं च युष्मदनुग्रहात्
**सुवीराः**–वीरवन्तो भवेम पुत्रवन्तो यद्यपुत्राः । एवमयं मत्वर्थीयः सुः । अथ पुनः 10
पुत्रवन्त एव ततः कल्याणवीरा इति समस्तार्थः ।

अथैकपदनिरुक्तम् । **वरो वरयितव्यो भवति** । व्रियते ह्यसौ । **जरिता**
**गरिता** गिरतेः स्तुत्यर्थस्य । **मघं मंहतेर्दानकर्मणः** । दीयते हि तत् । **दक्षिणा**
**दक्षतेः** समर्धयत्यर्थस्य यज्ञे हि यत् किंचिद्विगतर्धिकं भवति तदियं समर्धयति विशिष्टं
यज्ञस्य साधनमेतदिति । **अपि वा प्रदक्षिणागमनात्** दक्षिणा । **दक्षिणा दिश-** 15
**मभिप्रेत्य** । सा हि दक्षिणस्यां वेदिश्रोणावग्रेण गार्हपत्यं जघनेन सदो दक्षि-
णेनाग्नीध्रं गत्वा अन्तर्वेदि स्थित्वान्तरेण चात्वालमाग्नीध्रं चोत्सृज्यमाना गच्छति । **दिक्**
पुनर्दक्षिणा **हस्तप्रकृतिः** । प्राङ्मुखस्य प्रजापतेर्यतो दक्षिणो हस्तो बभूव सा दक्षिणा
दिगभवत् । अथ **दक्षिणो हस्तः** कस्माद्दक्षिण इति । **दक्षतेः** उत्साहार्थस्य । सः

---

1. *b.* षष्ठ्यस्य for पृष्ठ्यस्य. 2. *a. m.* पदपूरणमेव for °पूरण एव; *b.* पुत्रभाविके for °भावके. 3. *b.* तथापितुर्दक्षिणायां॥ 4. *b. m.* om. जरित्रे; *d.* कस्मै ते यजमानाय. 5. *bi.* शिक्षा for शिक्ष of our Mss.; *b. m.* add हे इन्द्र before शिक्ष. 7. *b m.* दास्यसि चेद्देहीत्यभिप्राय.. 8. *b.* वदेम मदीयतां॥ 10. *b* पुत्रवन्त यद्य-पुत्रा एव । अयं &c. 11. *bi.* एवं for एव; *d.* यतः for ततः. 13. *bi.* om. गिरते; *b m. bi.* add इति after गरिता; *bi.* adds इति after मघं; *a d.* दानार्थस्य for दानकर्मणः. 14. *a. d.* add यत् before भवति; *b.* adds स्पृद्ध समर्धयतीति before यज्ञे हि. 15. *a* adds हि before यज्ञस्य. 17. *bi.* °नाग्नीध्रं; *bi.* अन्तर्वेदिं; *bi.* अन्तरेण चात्वालोत्करौ तमाग्नीध्रं चोत्सृज्यमाना गच्छन्तीति॥ we read with *a. d*; *b. m.* add ताम् after °त्करौ; *b.* adds दिग्घस्तप्रकृतिः before दिक्पुन°. 18. *bi.* om. यतो after प्रजापतेः. 19. *b.* adds दक्षिणो हस्तो दक्षतेरुत्साहकर्मण इति before अथ.

ह्युत्साहवान् भवति कर्मसु न तथा सव्यः । **दाशतेर्वा स्यात्** दानार्थस्य । तेनैव हि प्रायेण दीयते । अथ **हस्तः** कस्मात् । **हन्तेः** । तेन हि हन्यते । नन्वन्येनापि केनचिद्देन हन्यते । एवम् । यो हन्तव्यो भवति तस्य हनने अयमेव तु **प्राशुः**–शीघ्रः इत्यर्थः । **पृहदिति महतो नामधेयं परिवृढं भवति** इति । **वीरो वीरयत्यमित्रान्**
5 नानाप्रकारमीरयतीत्यर्थः । **वेतेर्वा स्याद्गतिकर्मणः**–गत्यर्थे वर्तमानस्य । गच्छत्येषासावभिमुखः शत्रून् । **वीरयतेर्वा** विक्रमार्थस्य । विक्रान्तो ह्यसौ भवति ॥

**सीमिति अयं परिग्रहार्थीयो वा पदपूरणो वा ।**

अस्यामेव तावदुभयमपि प्रदर्शयति । ततः परिग्रहार्थीयत्वे द्वितीयमुदाहरणं वक्ष्यति । गृत्समदस्य तत्पुत्रस्य वा कूर्मस्येयमार्षम् ।

10 "प्र सीमादित्यो असृजद्विधर्ता ऋतं सिन्धवो वरुणस्य यन्ति ।
न श्राम्यन्ति न वि मुचन्त्येते वयो न पप्तू रघुया परिज्मन् ॥"

त्रिष्टुप् सौरी । सूर्यः पुनरस्यां वरुणनाम्ना स्तूयते । **प्रासृजत्सूर्यो** रश्मीन् । सीमिति पदपूरण एव । कुतोऽपीत्यविवक्षितमेवैतत्पदपूरणपक्षे । अथ परिग्रहार्थीयम् । सर्वमेव परिगृह्णाति । **प्रासृजत् सर्वत इति वा** । विधर्ता–विधारयिता रसानां रश्मीनां वा । स्व-
15 रश्मिजालान्तर्गतस्य वा धर्ता सर्वस्य जगतः । ऋतम्–उदकमादाय पृथिवीलोकादन्तरिक्षलोकाच्च । सिन्धवः स्यन्दनाः सूर्यरश्मयः । ते [illegible] आदित्यमण्डलान्न्यञ्चो वर्तमानाः स्यन्दन्ते वर्षकाले सूर्येण प्रसृष्टा उदकमादाय सार्वलौकिकं वरुणस्य–सूर्यस्य स्थानं मण्डलं यन्ति । तदेवमप्यनिशमुत्सर्गादानलक्षणं स्वकर्म कुर्वाणा न श्राम्यन्ति । न वा श्रान्ता अपि सन्तो विरागादप्येतत्कर्म विमुञ्चन्त्येते । कथं पुनः पतन्तो न श्राम्यन्ति ।

---

2. *a b. d.* add हस्तो before हन्ते, *bi* न for ननु. 3. *a. b d.* पर for पद of *bi. m*, *a d* सत्य हन्यते for तस्य हनने, *b.* तस्य प्राशुर्हनने हननेऽयमेव &c, *m.* तस्य हनते for तस्य हनने. ( The reading of *a. d* is better here ). 4. *a d.* परिवृढ हि परिवृढ तद्भवतीति । 5. *bi* °प्रकार मारयती?. 6. *bi.* °भिमुख for °भिमुखः. 8. *b* परिग्रहार्थीयत्वेन. 9. *m* कूर्मस्येवार्षं 13. *a b d m* read पादपूरणपक्षे for पदपूरणपक्षे. 14. *a d.* om. वा after इति; *b m.* om. रश्मीनां ( perhaps better. ) 16. *a.* स्पन्दनात्, [illegible] स्यन्दनात् for स्यन्दना-, but *b. m.* स्यन्दमाना; *m bi* प्राञ्चो for न्यञ्चो. 17. *m.* स्पन्दन्ते; *d.* वर्षाकाले for वर्षकाले; *d* सर्वलौकिक; *m* सृष्टा for प्रसृष्टा; *m.* स्थानमण्डल for स्थानं मण्डलं. 18. *b* यान्ति for यन्ति, *a. d.* कर्म for स्वकर्म, *bi.* कुर्वाण. for कुर्वाणा of *d. m.* 19. *a. d.* add न before अपि; *a. m. d.* मुञ्चन्त्येते for विमु°.

---

10. RS. II. 28. 4.

किं शनकैः । न । वयो न–वय इव–पक्षिण इव शीघ्रं पप्तुः–पतन्तः रघुया–लघुया–लघ्व्या–शीघ्रिकयापि गत्या परिज्मन्–परिजमन्तः–परिगच्छन्तः सर्वमप्येतज्जगन्न श्राम्यन्ति न विमुञ्चन्त्येतत् कर्म । एतद्गुणयुक्तानामप्येतेषां सूर्य एव प्रविसर्गे संयमे च ईश्वर इत्येवं सूर्यस्य स्तुतिरेषा ।

"ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । • 5

स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥

इदं द्वितीयमुदाहरणम् । वामदेवपुत्रो नकुलोऽनया त्रिष्टुभादित्यं तुष्टाव । प्रवर्ग्ये विनियुक्ता रुक्मोपधाने चाभिचयने । ब्रह्म–आदित्याख्यं जज्ञानं–जायमानम् । प्रथमं–अनुत्पन्नेष्वन्येष्वदितेः पुरस्तात्–प्राच्यां दिशि तदुदयोपलक्षितमेव प्राच्याः प्राचीत्वम् । वि आवः–व्यवृणोत्–विवृतानकरोत् । सुरुचः–प्रशस्तरोचनान्–रश्मीन् । सीमतः 10 –सर्वतः । किं च स वेनः–मेधावी बुध्न्याः–बुध्नमन्तरिक्षं तदवयवभूता दिशः उपमाः –उपनिर्माण्यः तासु ह्येतत्प्रतिष्ठितं सर्वमुपनिर्मीयते जगदित्येतस्मात्ता एवोपनिर्माण्य उच्यन्ते । विष्ठाः–विस्थाः । तासु ह्येतज्जगद्विभिन्नं तिष्ठतीति ता एव विष्ठाः । सतश्च–अभिव्यक्तस्य–स्थूलस्य असतश्च–अनभिव्यक्तस्य–सूक्ष्मस्य योनिं विवः–व्यवृणोदित्यर्थः । तदुदये ह्येवंगुणयुक्ता दिशोऽभिव्यज्यन्त इत्यभिप्रायः । अथवा बुध्न्या आप आन्त- 15 रिक्षास्ता उपमा इत्येवमादि सर्वं योज्यम् ।

**अपि वा सीमेत्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणम् । सीम्नः सीमतः सीमातो मर्यादातः सीमा मर्यादा विषीव्यति देशाविति ।**

विगतसंतानो देशौ करोतीति ॥

---

1. *m.* om. लघुया. 2. *bi.* गत्यापि for अपि गत्या. 3. *b₁.* प्रतिसर्गे for प्रविसर्गे of *a. d.* 4. *m.* सूर्यस्तुति for सूर्यस्य स्तुति. 7. *b.* om. ब्रह्म जज्ञानमिति read by all others after उदाहरणम्, *m.* reads ब्रह्म जज्ञानं प्रथममिति ऋक्, *bi.* quotes the verse before वामदेवपुत्रो &c.; *m.* इति for इदं; *b₁.* प्रवर्ग्यविनि°. 8. *a. d.* रुक्माधाने. 9. *d.* मन्त्रेषु for अन्येषु, *bi.* om. अन्येषु; *b₁. a. b.* आदितः for अदितेः; *m.* अनुत्पन्ने अन्येषु अदितेः पुरस्तात् etc.; *bi.* तदुद्भवोप°; *a. d.* °लक्षितेनैव for °लक्षितमेव. 10. *a. b. d.* व्यावः for वि आवः. 11. *bi.* °पदभूतास्ता; *m.* om. दिशः. 12. *bi.* एतत् तस्मात् for एतस्मात् of our Mss.; *m.* adds उपमा उपनिर्माण्य after विस्थाः. 14. *a. d.* सूक्ष्मयोनिः स्थानं विवः, *b. m.* सूक्ष्मस्यास्य जगतः योनिं स्थानं &c.; *m* अवृणोत् for व्यवृ°. 15. *bi.* आदित्योदये for तदुदये of all our Mss ; *b.* आन्तरिक्ष्याः for °रिक्षाः. 18. *bi.* विषीव्यति.

---

5. VS. XIII. 3, or SS. (Chh. Âr.) IV. i. 3. 9.

त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम्। निपातत्वेनैतदपि संदिह्यते। वक्ष्यति हि 'निपात इत्येके' इति। अतस्त्व इति ह्येवं निपातकाण्ड उदाहियते संशयपरिशोधनाय। त्व इत्येतद्विनिग्रहार्थीयमिति व्याख्यातम्। किं तत्। सर्वनाम। विप्रतिपन्नस्वरत्वात्स्वरमप्यवधारयन्नस्य अनुदात्तं इत्याह। कथं पुनर्विप्रतिपन्नस्वरमे-
5 तदिति। उच्यते। प्रातिपदिकस्यान्त उदात्त इत्यौत्सर्गिकं लक्षणमन्यत्रापवादात्। लक्षणविदोऽपि चास्यापवादं पठन्ति "त्वत्त्वनेमसमसिमेत्यनुच्चानि" इति। अर्धनामे-त्येके। अर्धस्यैतन्नामेत्येवमेके आचार्या मन्यन्ते। वक्ष्यति चायमपि 'त्वो नेम इत्यर्धस्य' इति। तदेतत् प्रकरणोपपदाभ्यामध्यवसेयं अर्धनाम क सर्वनामेति ॥ ७ ॥

"ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्करीषु।
10 ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥"

इत्यृत्विक्कर्मणां विनियोगमाचष्ट ऋचामेकः पोषमास्ते पुपुष्वान्होतर्ग-र्चनी। गायत्रमेको गायति शक्करीषूद्गाता। गायत्रं गायतेः स्तुति-कर्मणः शक्कर्य ऋचः शक्नोतेस्तत्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्करीणां शक्करीत्वमिति विज्ञायते। ब्रह्मैको जातेजाते विद्यां वदति ब्रह्मा सर्व-
15 विद्यः सर्वं वेदितुमर्हति। ब्रह्मा परिवृढः श्रुततो ब्रह्म परिवृढं सर्वतो यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युरध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य

2 *m* [illegible] for हि; *d* इति हैव for इति ह्येव; *m* अतस्त्व for अतस्त्व. 3 *bs* किम् तत् for किं तत् of *b m*, *a d* सर्वनामाविप्रति°; 4. *m* स्वरमप्यवधारयन्? *b a. b d* om उदात्त, *bs* adds च after अन्यत्र. 6 *a b m d* add अतोन after पठन्ति; *a d* त्वनेमसमसिमेत्यनुच्चानि, *b* त्वात्वत् नेमसमसिमे त्यनुच्चानीति, *m* त्वत्व नेमसमसिमेत्यनुच्चानीति 8. *b* om क सर्वनाम. 15. C. D. read परिवृढो and परिवृढं. B1. परिवृह्णो and परिवृढं.

2 For the quot. see p. 83. l. 2.

5. फिषोऽन्त उदात्त ( Phitsûtra I 1 ) is the sûtra here referred to

6. Phitsûtra IV. 9. The readings of this sûtra in all the Mss. do not agree with one another, nor with Sidd Kân in स्वरप्रक्रिया where the sûtra is read as त्वत्वसमसिमेत्यनुच्चानि.

7. For the quot. vide Nir. III. 20.

9. RS. X. 71. 11.

नेताध्वरं कामयतं इति वापि वाधीयाने युरुपबन्धोध्वर इति यज्ञनाम ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधो निपात इत्येके । तत्कथमनुदात्तप्रकृति नाम स्याद्दृष्टव्ययं तु भवति ।

"उत त्वं सख्ये स्थिरपीतमाहुः ।"

इति द्वितीयायाम् । 5

"उतो त्वस्मै तन्वं विसस्रे ।"

इति चतुर्थ्यामथापि प्रथमाबहुवचने ॥ ८ ॥

यथात्र सर्वनाम तथेयमृगुदाहियते ऋचां त्वः इति । बृहस्पतेरार्षम् । ऋत्विकर्मणां विनियोगमनयर्चाचष्टे । ऋचां त्वः पोषमिति । य एते चत्वारो महर्त्विज एतेषां त्वः-एक इत्यर्थः । किमेकः करोति । ऋचां पोषं-पुष्टिं 10 पुपुष्वान्-पुनः पुनर्भूतं वा देवतायाथात्म्यानुसंचिन्तनसंतानगर्भः स्थानकरणानुप्रदानवनीर्यथाकालमृचोधीयानः आस्ते । स हि तासां पोषः । कतम एक एतत्कर्म कुर्वन्नास्त इति । होता । एतत्तावदृगध्ययनकर्म तस्मिन् होतरि विनियुक्तम् । उक्तं च "यदृचैव होत्रं क्रियते" इति । गायत्रं त्वः गायत्रमेको

3. B. C. D. read दृष्टव्ययन्तु । This is the traditional way of recitation also, but makes no sense. The Nirnayasâgar edition reads दृष्टव्यं तु instead, which makes sense, but the wording is rather unexpected, as on similar occasions we are familiar with तदेतेनोपेक्षितव्यं rather than दृष्टव्यं. 7. A. concludes sec. 7 of the 2nd *pâda*, but Bi. marks sect. [illegible] of the 3rd pâda after °बहुवचने. 9. *a. d.* read ऋत्विक्कर्मविनियोगमनयर्चाचष्टे. 10. *m* च for त्वः । 11. *d.* om. one पुनः ; *a. b. d.* देवतायाथात्म्यानुसंचिन्तनसन्तानगर्भस्थान°, *m.* देवता यथाहत्म्यनुसंचिन्तनसन्तानगर्भः स्थान°, *bi.* देवतायाथात्म्यानुचिन्तनसन्तानगर्भ°. 12. *b.* ऋचाधीयानः. 13. *b. m.* एतस्मिन् for तस्मिन्. 14. *bi.* होत्रं for होत्र of our Mss.; *b.* om इति; *d.* om. एव after ऋचा; *a. d.* om. गायत्रं before एकः.

4. The quot. is from RS. X. 71. 5. The entire verse is quoted and explained in Nir. I. 20.

6. The quot. is from RS. X. 71. 4. For the entire verse quoted and explained, see Nir. I. 19.

14. The quot. is from Ait. Br. XXV. 8.

**गायति शक्करीषु**-ऋक्षु । कतमः । उद्गाता । तस्मिन्नप्येतत्सामगानकर्म विनियुक्तम् । उक्तं च "साम्नोद्गीथम्" इति । **ब्रह्मा त्वः**-ब्रह्मा नाम एक ऋत्विक् **जाते**-प्रायश्चित्ते **विद्यां वदति** विद्यात्रयहेतुत्वादात्मनो विद्या-विज्ञानं वदतीतरेभ्य ऋत्विग्भ्य इदमत्र कुरुतेति । तत्रापि ह्येतत् कर्म विनियुक्तम् । स पुनरेष **सर्वविद्यः**-सर्ववि-

5 ज्ञानस्तथाविधो ह्यसावधिकारी त्रयीविद्यासंयुक्तो येनासौ **सर्वमेव वेदितुमर्हति** । न ह्यसर्ववित् तमधिकारं शक्नुयादभिवर्तयितुम् । उक्तं च "अथ केन ब्रह्मत्वं क्रियत इति । त्रय्या विद्यया" इति । *यज्ञस्य मात्रां विमिमीत उ त्वः*-एक इति । मीयत इति मानं कर्म तन्मात्रेत्युच्यते । या काचिदितिकर्तव्यता यज्ञस्य तां विमिमीतेऽध्वर्यु-र्नानाप्रकारं करोतीत्यर्थः ।

10 अथैकपदनिरुक्तम् । **गायत्रं गायतेः** स्तुत्यर्थस्य स्तूयते ह्यनेन । **शक्वर्य ऋचः शक्नोतेः** इत्युक्त्वा ब्राह्मणेनापि शक्नोतेः शक्वरीशब्दे श्रुतिं दर्शयति । **तद्यदाभिर्वृत्रमशकद्धन्तुं तत् एतत् शक्वरीणां शक्वरीत्वम्** । यद्यस्मादाभिरभिष्टुत इन्द्रो वृत्रमशकद्धन्तुं तच्छक्वरीत्वम् **इति विज्ञायते** । ऋचां शक्वरीत्वमित्येवं ब्राह्मणेऽपि शक्नोतेरेव शक्वर्य इति विज्ञायते । लिङ्गतोऽपि हि दर्शितं भवति आख्यातजानि नामानीति ।

15 **ब्रह्मा परिवृढः श्रुततः** स हि त्रयीं विद्यां वेद । शब्दसारूप्यप्रसक्तमुच्यते **ब्रह्म परिवृढं सर्वतः** । ऋगादि परं चोभयमपि तत्परिवृढं सर्वासु दिक्षु । **अध्वर्युः अध्वरयुः** एवमपि ह्युच्यत इति । पुनरप्याह । **अध्वरं युनक्ति**अध्वरस्य **नेता**-प्रापयितेत्यर्थः । स ह्यन्तं प्रापयत्यध्वरमेव । **अथवा अध्वरं कामयते** **कर्तुम् इति**

2 *a d* पकपक for एक. 3 *m* वदतीतरेतरऋत्विग्भ्य । 4. ■ *b*. repeat इदमत्र कुरुत once more 5. *a*. त्रयीविद्या संयुक्तो । 6. *a*. *b*. *d*. *m*. read अथ केन ब्रह्मत्वमित्यनया त्रय्या[सं । *m* ]विद्ययेति, *bı*. अथ केन ब्रह्मत्वं क्रियत इति । त्रय्या विद्यया इति. 7. *a d*. add विमिमीते before एक इति. 8. *a*. *d*. समानं for मानं of *m* *bı*. 8. *a*. *d* read नानाप्रकारां for °प्रकारं. 10 *a*. *b*. *d*. *m* om. अथैकपदनिरुक्तम् । 11 *bı* om ब्राह्मणेनापि शक्नोते. 12. *bı*. एव for एतत् of all our Mss ; *a d*. *m*. om. शक्वरीणां, *bı*. adds तत् before यद्यस्मा°. ' *b* ' dd तदेनच्छक्वरीणां before ऋचां, *b*. इत्येव for इत्येवं. 14. *b*. om ..किपोऽ *bı* मन्यूयते for ग्रुच्यते of all Mss. 15 *a*. *b*. *d*. °त्यध्वरम् ।
6. Phitsı
do not agree ■ better ).
the sūtra is ..

7. For the q Ait. B XXV. 8.
9. RS. X. 71 ... XXV. 8.

अध्वर्युः । एतस्मिन्निर्वचने युः वन्नत्र इति यथा । अथवा अधीयाने तमध्वरम् । कस्मिंश्चिद् ब्राह्मणे अध्वर इत्ययमेव संज्ञा भवति मन्त्रक्षेत्रवत् । एतस्मिंश्च निर्वचने युः अयम् उपबन्धः नामकरणः अध्वरमधीते यः सोऽध्वर्युः । विग्रहप्रसक्तस्याध्वरशब्दस्य तत्त्वमाचष्टे अध्वर इति यज्ञनाम । अध्वर इत्यधुना निर्वक्तव्यः । ध्वरतिर्हिंसाकर्मा । 'ध्वरति धूर्वति' इति हिंसार्थेषु पठितौ । तत्प्रतिषेधः अध्वरः 5
अहिंस इत्यर्थः ।

आह । नन्वत्र हन्यन्ते पशवश्छिद्यन्ते तृणवनस्पतयः । तत्कथमहिंसः । उच्यते । अभ्युदय एव हि सः । एवं हि श्रूयते "न वा उ एतन्म्रियसे" इति । तथा च

"कुशलमिच्छन्ति तृणानि राजन्"

इति । तस्मादभ्युदययोगादहिंस इत्युपपद्यते । 10

निपातः अयम् इत्येके मन्यन्ते ।

एवमेकीयपक्षे निपातत्वमस्योक्त्वाधुना चोदकपक्षे स्थित्वा परपक्षमाक्षिपन्नाह । तत्कथमनुदात्तप्रकृति नाम स्यात् इति । तदेतच्छन्दस्यनुदात्तस्वभावं सत् कथं नाम स्यात् । ननु भवतैवोक्तम् 'उत्सर्गेणैवान्तोदात्तानि प्रातिपदिकानि' इति

---

1. *b.* adds अपि वाधीयाने युरुपबन्धः before अथवा. 2. *bi.* मन्त्रक्षे° for मन्त्रक्षे°. 3. *bi.* नामकरणम् for °करणः; *b.* अधीयते for अधीते । 4. *b. m. bi.* ध्वर for अध्वर after यज्ञनाम. 7. *m.* om. तृण°; *a. d.* अथ for तत्. 8. *bi.* एतन्म्रियसे, *b.* reads the whole verse given in the footnote. 10. *m.* om. इति after अहिंस. 12. *m.* °क्त्वाऽधुना &c.; *a. d.* add अनुदात्तं after शब्दरूपं. 13. *a.* om. इति after स्यात्.

---

2. The interpretation of अधीयाने etc., as printed by *bi.* seems to be inaccurate. Durga seems thereby to say that the word अध्वर signifies by लक्षणा the person studying the sacrificial ritual. In this case the affix यु has no meaning, and hence the letter of the text, अधीयाने युरुपबन्धो, seems to be contradicted. We believe the proper idea should be that the word अध्वर, i. e. sacrifice, signifies by लक्षणा the ritualistic treatise or a ब्राह्मण, which expounds the ritual of the sacrifice ( अध्वर ). The affix यु then signifies अधीयानः e. g. अध्वरमधीते सः अध्वर्युः. We have, therefore, added punctuations to yeild this meaning.

5. Vide Nigh. II. 19. 3-4.

8. VS. XXIII. 16.

न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः ।
यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥

14. तत्त्व-see p. 82, l. 5.

मनोजवेष्वसमा बभूवुरास्यदघ्ना अपर उपकक्षदघ्ना अपर आस्यमस्यते-रास्यन्दत एनदन्नमिति वा दघ्नं दघ्यतेः स्रवतिकर्मणो दस्यतेर्वा स्याद्विदस्ततरं भवति । प्रस्नेया ह्रदा इवैके प्रस्नेया दद्दृशिरे स्नानार्हा ह्रदो ह्रदतेः शब्दकर्मणो ह्लादतेर्वा स्याच्छीतीभावकर्मणोथापि समुच्चयार्थे भवति पर्याया इव त्वदाश्विनमाश्विनं च पर्यायाश्चेति ॥ अथ ये प्रवृत्तेर्थेमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति ॥ ९ ॥

अक्षण्वन्तः कर्णवन्तः इत्येतस्यामृचि । बृहस्पतेरार्षं विद्यासूक्तं नाम । अक्षण्वन्तः–अक्षिसंयुक्ताः । कर्णवन्तः–कर्णसंयुक्ताः । एवमपि समानेन्द्रियाः समानपृष्ठोदरपाणिपादाः सन्तः । अपि च सखायः–समानख्यानाः सर्वे मनुष्याख्याः । अथवा समानेषु शास्त्रेषु कृतश्रमाः । वैयाकरणा वैयाकरणानामेव समानख्याना नैरुक्ता एव नैरुक्तानाम् । मनोजवेषु–मनोगम्येष्वर्थेषु असमा बभूवुः । केचिदूहापोहनधारणसमर्थत्वधर्मयोः केचिदमेधसः । कथमसाम्यमिति । यतो दृष्टान्तेन प्रतिपादयति । आदघ्नास उपकक्षास उ त्वे ह्रदा इव । आदघ्ना एव आदघ्नासः—आस्यदघ्नह्रदपरिमाणाः केचिद् प्रज्ञया । उपकक्षासः–कक्षसन्निकृष्टदेशतुल्योदका इव ह्रदाः एके प्रज्ञया ह्रदाः स्नात्वा–स्नानार्हा–अक्षोभ्या अपरिमेयप्रज्ञानाः । ददृश्रे–ददृशिरे–दृश्यन्त इति समस्तार्थः ।

अथैकपदनिरुक्तम् । अक्षि चष्टेः पश्यत्यर्थस्य । दृश्यते ह्यनेन । अनक्तेः व्यक्त्यर्थस्य इत्याग्रायणः मन्यते । ब्राह्मणमपि चैतस्मिन्निर्वचने भवति । तस्मा-

1. A. B. C. अपर आस्य°, Bi. अपरे आस्य°.　　3. A. ददर्शिरे for ददृशिरे　4. Bi. R. ह्रदते: for ह्रादते· of A. B. C. D.　　5. After समुच्चयार्थे भवति A. concludes sect. 8. of the 2*nd* Pâda, and Bi. sect. 4 of the 3*rd* Pâda.　8. *d.* adds सखायः after कर्णवन्त·; *a. d.* read अस्यां for एतस्यां; *m.* एतत् for नाम; *d.* adds ( after नाम ) तत्रेयमृक्.　　9. *bi.* om. कर्णवन्तः कर्णसंयुक्ता· before एवमपि.　　10. *m.* om सन्तः; *a. b̄ d. m.* om. सखाय ; *m.* समानाख्यानाः; *a. b. d.* मनुष्याख्याः, *bi. m.* मनुष्या·.　　11. *m.* om. वैयाकरणा·.　　12. *m.* क्वचित् for केचित् ; *b. m.* °पोहकरण° for पोहनधारण°.　　13. *b m.* कथमसाम्यमिति, *a. d.* कथमसामान्यमिति, *bi.* कथमशायान्यमिति; *a. d.* दृष्टान्तं ■ दर्शयति for दृष्टान्तेन प्रतिपादयति.　　14. *m.* om. pratîka आदघ्नासः etc.; *d.* आस्यदघ्नह्रदपरिमाणा केचित्.　15. *m.* om. एके·　　16. *a. b d.* om. स्नात्वा; *bi.* om. स्नानार्हाः·　　18. *bi.* अथैकपदनिरुक्तम् ; *a.* adds इति after अनेन.　　19. *a.* आग्रयणः for आग्रायण·; *bi.* ब्राह्मपि for ब्राह्मणमपि.

देते व्यक्ततरे इव भवत इति ह विज्ञायते यस्मादिदं नामेति । किमिति प्रकृत-
मेतस्य । अथवा यस्मादेते द्वेऽप्यवयवभूते तस्मात्कारणादिन्द्रं यच्छब्दमन्वाहृत्य
विद्यमानमविद्यमानं चोत्थाय तस्माच्छब्दस्य सामर्थ्यमुत्पाद्यते । तथाहि स निराकाङ्क्षो
भवति । सर्वत्र साकाङ्क्षेषु शब्देष्वेवं व्याख्यायमो द्रष्टव्यः । एते अहिंसी इन्द्र-
5 स्योर्हन्यो व्यक्ततरे-स्फुटतरे-प्रकाशतरे भवतः अन्ययोरपि इति प्रकाशेन मर्त्यचय-
र्शानां न तथेतराण्यहानि एवं अहन्यपि अनचेरेवाक्षिणी इति ह विज्ञायते ।

---

1. *bi* om. ह विज्ञायते after इति. 2. *m.* om. कारणात्. 3. *bl.* यस्मद for तस्माद; *b m.* शब्दमानस्यांदयमुत्पाद्यते for शब्दस्य सामर्थ्यमुत्पाद्यते. 4. *bh.* adds च before साकाङ्क्षेषु; *a b.* व्याख्यातव्यौ for व्याख्यानवर्मो of *bi.*, *d.* व्याख्यावर्मो द्रष्टव्याः. 5. *m.* om प्रकाशतरे; *bi* प्रकाशेनैव for प्रकाशेन, *b.* प्रकाशेनैते. 6. *a. d.* om. ह after इति; *b. m.* च for ह.

कर्णः कृन्ततेर्निकृत्तद्वारो भवति। ऋच्छतेरित्याग्रायणो मन्यते। ब्राह्मणमपि चैनस्मिन्निर्वचने भवति ऋच्छन्तीव खे उदगन्तामिति ■ विज्ञायते इति। ऋच्छन्तीवैतौ कर्णौ येऽभिव्यक्ताः सन्तः शब्दाः। एतावपि च उदगन्तां प्रत्युद्गच्छन्त इव शब्दग्रहणाय। विचार्यमाणे ज्ञायते ये कर्णाविति। आस्यमस्यतेः क्षेपार्थस्य क्षिप्यते ह्येतदाभिमुख्येनान्नम्। स्यन्दतेर्वा स्यादाङ्पूर्वस्यैव स्रवणार्थस्य। शुष्केऽपि ह्येतदन्ने आगते स्रवत्येव श्लेष्माणं येन तदार्द्रीभूतं ग्रसितुं शक्यते। दध्नं दध्यतेः स्रवत्यर्थस्य। द्रुततरमिव तद्भवति पूर्वतरात्परिमाणात्। दस्यतेर्वा स्यात् क्षयार्थस्य। विदस्ततरं शुष्कक्षीणतरं तद् भवति उत्तरस्मात्परिमाणात्। प्रस्नेयाः प्रकर्षेण स्नातुं येषु योग्यमगाधत्वात्ते प्रस्नेयाः स्नानार्हा इत्यर्थः। ह्रदो ह्रादतेः शब्दार्थस्य। शब्दं ह्यसावभिहन्यमानः करोति। ह्रादतेर्वा स्यात् शीतीभावार्थस्य ग्रीष्मेऽपि ह्यसौ शीतल एव भवति।

अथापि अयमपरो निपातः समुच्चयार्थे भवति। कतमः स्वन् इति। किमुदाहरणम्। पर्याया इव त्वदाश्विनम् इति। आह। किमुक्तं भवति। उच्यते। आश्विनं च पर्यायाश्चेति। एवं समुच्चयार्थे भवति॥

अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति। व्याख्याताः कर्मोपसंग्राहीयाः। तत्प्रसङ्गेन हीलेखमादयो अन्यार्था अप्युक्ताः। प्रतिज्ञाप्रसक्तानेवाधुना पदपूरणान् वक्ष्यामः। तेषां सामान्यमेव तावल्लक्षणमुच्यते। तत्राधिकारार्थोऽयमथशब्दः। अथ ये प्रवृत्ते परिसमाप्ते अर्थे अन्यैरेव वाक्यगतैः पदैरमिताक्षरेषु गद्यग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणार्थास्त एव मिताक्षरेषु पादबन्धेषु भवन्ति। उभयत्रापि तु तेनर्थका

---

2. *a. d.* ऋच्छन्ती इव. 3. *a d* उदगन्तामित्युद्गच्छन इव. *b.* प्रत्युद्गच्छन इव। 4. *b. m.* शब्दग्रहणाय, *bi.* ग्रहणाय. 5. *a d.* क्षिप्यते ह्येतदाभिमुख्येनान्नम्, *d.* क्षिप्येते for क्षिप्यते, *m.* °ह्येतदपि° for °ह्येतदाभि°. 6. *a. d.* om. अन्ने; *a. d* तदार्द्रभूतं, *bi.* तदार्द्रीभूतं for तदार्द्रीभूतं of *b. m.* 7 *bi.* द्रुततरात् for पूर्वतरात्. 9. *m.* तेन for ते. 10. *m* अभिमन्यमान. for अभिहन्यमानः 12 *bi* एकतमः for कतम. of our MSS 14 *a. d.* पर्यायश्चेति च समुच्चयार्थे. 16. *bi.* क आपि संग्रहा° for कर्मोपसंग्रहा°. 19. *a* ■ परिप्राप्तिते for परिसमाप्ते. *b.* ■ प्राप्तिते परिसमाप्ते for it ; *b* अन्यैरेवाक्यगतैः पादैः; *d.* om. गद्यग्रन्थेषु, *m* वाक्यग्रन्थेषु for it. 20. *m.* पदपूरणास्त एव, *bi.* om. पादबन्धेषु before भवन्ति.

अनर्थान्तरवाचकाः प्रकृतादर्थान् न किंचिदर्थान्तरं द्योतयन्ति । पदमेव वाक्यमेव वा पूरयितव्यमित्ययमेव हि तेषामर्थो नान्यदर्थान्तरम् । उक्तं च

" क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।

सत्त्वाभिधायकं नाम निपातः पादपूरणः ॥"

5 इति । कतमे पुनस्ते । **कमीमिद्विति** । एते चत्वारः कम् ईम् इत् उ इति ।

आह । ननु ये प्रकृतेर्थ इति यदेतदुपदिष्टं लक्षणमत एव विज्ञास्यामो येमिताक्षरेषु वाक्येषु पठितास्ते मिताक्षरेषु पदपूरणा भविष्यन्तीति । अथ किमर्थमेते विशेषतः कमीमिदवो निर्दिश्यन्त इति । उच्यते । एते हि प्रायेण पदपूरणा एव । अन्ये पुनः इवनचिन्वादयो अर्थवन्तोप्यर्थासंभवे सति पदपूरणा भवन्ति । लक्षणं हि तानपि व्याप्नोति ।

10 एते पुनः प्रायेणानर्थका एवेति विशेषतो निर्दिश्यन्ते । अथवा ते प्रायेणार्थवन्तः कदाचिदनर्थका एते पुनः प्रायेणानर्थकाः कदाचिदर्थवन्त इत्यतो विशेषतो निर्दिश्यन्ते ।

आह । एवमपि च उकारो न निर्देष्टव्यः । किं कारणम् । स हि पुरस्तान्निर्दिष्ट एव 'अथापि पदपूरण इदमु तदु' इति । उच्यते सत्यं निर्दिष्टः । प्रासङ्गिकस्तु स तस्य निर्देशोयमेवात्रोकारस्य पदपूरणत्वे मुख्यो निर्देशः स्वप्रकरणत्वात् । आह तत्र तर्हि

15 किंचित्करः इति । उच्यते । नाकिंचित्करः । किं कारणम् । शृणु । यदि ह्ययमुकारस्तत्र पदपूरणत्वेन नोच्येत इहैवोच्येत ततः पूर्वोक्तस्य विनिग्रहार्थीयत्वस्यायमपवाद इति गम्येत । अथापि तत्रैव केवलमस्य पदपूरणत्वमुच्येत नेह तथापि पदपूरणेषु परिसंख्यायमानेषु नायमुक्त इति परिसंख्यया पदपूरणत्वमस्य बाध्येत । अनिष्टं चैतत् । तस्मादुभयत्राप्यधीत इति ।

---

1. *bi.* प्राकृतान् for प्रकृतान्. 3. *bi* विशेषवत् for °कृत्. ▮ *a. b. d.* add इत्युच्यते after पुनस्ते. 6. *bi.* पदे तदुप° for यदेतदुप°, *m.* प्रकृत्यर्थे for प्रकृतेर्थे. 8. *a. d.* om इति. 11. *bi.* om एते पुन प्रायेणानर्थका कदाचिदर्थवन्त. 13. *m* त्वदिति for तदु इति, *m* om सः 14. *m.* °मेवार्थोत्रो° for °मेवात्रो°, *bi.* om. आह before तत्र. 15. *bi.* om उच्यते after इति. 16. *bi.* पूरणत्वेन for पदपूरणत्वेन, and नोच्यते for नोच्येत; *a d* इहैवोच्यते ! 17. *a d.* विज्ञायते for गम्येत; *bi* उच्यते for उच्येत, and पादपूरणेषु for पदपू°; *b.* पद-संख्याय-eyes L 18. *bi* पदसंख्यया for परिसंख्यया. 19. *a. d* read अधीयत for अधीत

2ndly a—
second is ... rātis'ākhya XII. 8.
II. 4.) But t... : i. e. on p. 72, l. 4. above.
is given a name
quality, and not ...

नामलक्षणं तदनूपसर्गलक्षणं तदनु निपातलक्षणम् । तस्मादादावपि निपातः सन्मध्ये वान्त एव द्रष्टव्यः । लोकेऽपि हि दत्तानुयोगानां ब्राह्मणानामवस्थानक्रमोऽविकल्प एव भवति । मध्येन्ते वावस्थितो यः प्रधानः सोऽग्र इत्युच्यते । तस्मात् सम्यगेवोक्तं ये प्रवृत्तेर्थे इति ।

5 व्यत्ययं चाधिकृत्य श्लोकमप्युदाहरन्ति

"आदिमध्यान्तलुमानि प्रच्छन्नापिहितानि च ।
ब्रह्मणः परिगृह्यर्थं वेदे व्यवहितानि च ॥"

इति ॥ ९ ॥

"निष्ट्वक्त्रासश्चिदिन्नरो भूरितोका वृकादिव ।
10 बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम् ॥"

शिशिरं जीवनाय । शिशिरं शृणातेः शम्नातेर्वा ।

"एमेनं सृजता सुते ।"

आसृजतैनं सुते ।

"तमिद्वर्धन्तु नो गिरः ।"

15 तं वर्धयन्तु नो गिरः स्तुतयो गिरो गृणातेः ।

"अयमु ते समतसि ।"

अयं ते समतसि । इवोऽपि दृश्यते । सु विदुरिव सु विज्ञायेते इव । अथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये ॥ १० ॥

अधुनैवमेतानुदाहृतान् कर्मोपसंयुक्तान् समासतः प्रत्येकमुदाहरणैर्दर्शयति । शिशिरं 20 जीवनाय कम् इत्यत्र कमित्येष पदपूरणः । शिशिरं जीवनाय जीवनार्थमित्यर्थः ।

1. *bi.* om. तदनूपसर्गलक्षणं तदनु निपातलक्षणम्; *bi.* सन्मध्ये वा अन्त एव for सन्मध्ये वान्त एव of all our Mss, *m* om. वा 3. *a b. d.* मध्ये वा°; *a. b d. m* प्रधान; *a d.* add भवति after प्रधानः, 6. *m* प्रच्छिन्ना°, 7. *m.* वेदव्य°. 17. After दृश्यते A. concludes sect. 9 of the 2nd pâda, and B₁. sect. 5 of the 3rd pâda. 20. *b.* शिशिरे for शिशिरं.

तत्र हि प्रायेण प्रचुराणि शस्यान्यानि भवन्ति । कमिति पदपूरण एव । शाखान्तरेऽ शेषो द्रष्टव्यः । केचिदेवं कृतमेवमन्त्राधीयते

" निद्रुक्त्रासश्चिद्‍विरो भूरिंतोका वृकादिव ।
बिभ्यस्यन्तोववाशिरे शिशिरं जीवनाय कम् ॥"

इति । निद्रुक्त्रा एव निद्रुक्त्रास । निर्वभूना इत्यर्थः । अपि च भूरितोकाः— 5
बहुसत्या इत्यर्थः । के पुनस्ते । दरिद्राः केचिज्जना—मनुष्या इत्यर्थः । किं तेषामिति । वृका-
दिव बिभ्यस्यन्तः—पुनः पुनर्भृशं वा बिभ्यतो वृकादिव हिमात् ववाशिरे पुनः
पुनर्भृशं वावाश्यन्ते । किमिति ववाशिरे । शिशिरमस्माकं जीवनाय जीवनार्थमागच्छति
इत्येवं हेमन्ते ववाशिरे । अल्पतरशीतं हि शिशिरं मुक्त्वा तत्र जीविष्याम इत्यभिप्रायः ।

निगमप्रसक्तस्य शिशिरशब्दस्य निर्वचनम् । शिशिरं शृणातेः हिंसार्थस्य 10
शम्नातेर्वा—हिंसार्थस्यैव । नार्थकृतो विशेषः । हिनस्ति तस्मिन् कालेऽप्रतिबध्यमानो-
तिशयेन दावाग्निः शुष्कानोषधिवनस्पतीन् ।

---

1. *m.* reads शस्यान्यानि? After पदपूरण एव, Jivânanda's edition adds " युञ्जानि त्वा हविषा जीवनाय कम् " इति (ऋ स ८. ८. १९. १) अत्र सायणः । किमर्थम् । " जीवनाय कम् " जीवनार्थम् । इह लोके चिरकालावस्थानार्थमित्यर्थः । कमिति पूरक ' । इति I. *b₁.* reads this in a foot-note, none of our Mss. have it. 5. *a. b. d.* add निद्रुक्त्रासः before निद्रुक्त्रा; *m.* adds it and the pratîka upto परिमये before इति. 7. *m.* हिमान् for हिमात्; *a.* om. one पुनः. 8. *a. d.* add ववाशिरे after वावाश्यंते, *a. d. m.* read वावाश्यते. *b₁.* वा वश्यंते. 11. *d. m.* add हि after हिनस्ति.

---

3. No trace can be found of this verse any where. *m.* does not accent it; all other Mss. as well as B₁, however, do so. The remark शाखान्तरेषु शेषो द्रष्टव्य॰, shows, that the commentator does not believe this to be the right quotation, or, at any rate, has not got the stanza, निद्रुक्त्रासः in full in the text he is explaining. The only part that occurs in his text is the last quarter. J. quotes and B₁. gives in a foot-note a part of RS., X. 161. 1. with Sayana's commentary on it as an example from the Rig-Veda. This is not supported by any of our Mss. ( This quotation is noticed in the readings loc. cit. ) Besides a quotation from सायण in Durga's commentary is an anachronism. Nor does it appear to be the quotation intended by Yâska, as the word शिशिरं is not to be found in it.

ईमित्यस्योदाहरणम्

" एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने ।
चक्रिं विश्वानि चक्रये ॥"

ऐन्द्रेया गायत्री। मधुच्छन्दस आर्षम्। पृष्ठ्याभिप्लवयोः सोमस्तो प्रातःसवने ब्राह्मणा-
5 च्छंसिनः शस्त्रे महाव्रते च तृचाशीतिषु विनियुक्ता। आ सृजतैनम्-आभिमुख्येन
सृजत। ईम् इति पदपूरण एव। दत्त उक्थपात्रेण चमसेन च सोमं हे अध्वर्यवः।
किमासृजत। योऽयमिन्द्रस्य सुते-अभिषुते-सोमे स्वांशः-उक्थपात्रचमसस्थ एवमा-
सृजत। मन्दिम्-मन्दयितारम्। मन्दिने इन्द्राय हर्षवते। चक्रिं-चक्रवन्तं-कर्मण-
वन्तं वा। अपि वा हविर्धानशकटचक्राभ्यां चक्रवन्तम्। अपि च चक्रदिति कर्मनाम।
10 प्रतिविशिष्टवीर्यजनकैः संस्कारकर्मभिर्मदन्तं विश्वानि-सर्वाणि भूतानि कर्माणि वा
चक्रये-कृतवते इन्द्राय। सोमोऽत्र प्रत्यक्षो दातारश्च। परोक्षा त्विन्द्रस्य स्तुतिः। 'अथापि
प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि' इति हि वक्ष्यति।

तमिद्वर्धन्तु नो गिरः इति इदित्यस्योदाहरणम्।

" तमिद्वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव ।
15 य इन्द्रस्य हृदंसनिः ॥"

---

3. *m* adds इत्यृक् after चक्रये 4. *m*. om. एषा after ऐन्द्री; *b₁* °मिप्लव-स्तोम°. 6 *b* reads सृजत twice before ईम्; *m*. reads पूरण एव for पदपूरण एव; *a d* add आसृजत before दत्त. 7. *d*. क for किं; *d* अभिषुते for अभिसुते 8 *b m* मादयितारम् for मन्दयितारम्; *a d* add चरणवन्तं before कर्मणवन्तं. 9. *b₁* °शकटचक्राभ्यां चक्रवन्तमपि। चक्रदिति &c. 10. *b₁* अतिविशिष्ट° for प्रति-विशिष्ट° of all Mss; *b₁*. om. कर्माणि after भूतानि. 11. *b₁* om. अत्र after सोम 12. *b₁*. om. हि after इति. 13 *a* om. the *pratika* तमिद्वर्धन्तु नो गिर इति। 15 *m* adds इत्यृक् after सनि.

---

2. The quot. is RS. I. 9. 2.
9. चक्रत्-Nigh. II. i. 16.
12. वक्ष्यति i. e. in. Nir. VII. 2.
14. The quot. is RS. IX. 61. 14.

अमहीयोराङ्गिरसस्येयमार्षम् । गायत्री सौमी । प्रावस्तुतौ विनियुक्ता । तं वर्धयन्तु नः । तं–सोमम् । इत्–इति पदपूरणः । वर्धयन्तूपजातवीर्यं कुर्वन्तु देवतृप्तये । नः एता अस्मद्गिरः–स्तुतयः । कथं पुनर्वर्धयन्तु । वत्सं संशिश्वरीरिव–वत्समिवैकशिशुका बह्वयो गावस्ता यथा पर्यायेण वत्समेकं मृतवत्साः स्वैः स्वैः पयोभिर्वहनादिसमर्थं कुर्युरेवमेवास्मद्गिर एतं सोममुपजातवीर्यं देवतर्पणाय कुर्वन्तु–वर्धयन्तु । कतमः । यः इन्द्रस्य हृदंसनिः–हृदयसंभक्ता तमेनं वर्धयन्त्वित्यभिप्रायः । 5

आह कस्मात् पुनरत्र केचिदुदाहरणमन्त्रा अशेषाः पठ्यन्ते निरुच्यन्ते च केषांचिदेकदेशा इति । उच्यते । ये तावदशेषाः पठ्यन्ते निरुच्यन्ते च ते व्याख्याधर्मोपदेशनार्थम् । यदि पुनः सर्व एव पठ्येरन् निरुच्येरंश्च अतिगुरु शास्त्रं संपद्येत । अथापि सर्वेषामेवोदाहरणमन्त्राणामेकदेशः पठ्येत निरुच्येत च तथापि व्याख्याधर्मो न प्रदर्शितः स्यात् । तस्माद् व्याख्याधर्मोपदर्शनार्थं केचिदशेषाः पठ्यन्ते निरुच्यन्ते च केषांचिदेकदेशाः शास्त्रातिगौरवभयात् । इति प्रतिमन्त्रमपि सकलार्धर्चपादाध्ययने शक्यते प्रयोजनमन्वेष्टुं तदेतत्समासेन ब्रूमः। यस्मिन् यस्मिन्मन्त्रे यद्यत्पदमेकार्थमनेकार्थमनवगतसंस्कारं वा निर्ब्रवीति किंचिद्वान्यच्छन्दरूपमध्याहरति अन्यद्वापोहति अन्यथा वा कस्यचिद्विपरिणामं करोति संदिग्धं वा निर्णयति तदर्थमेव तं सकलमधीते। यस्मिन्वार्धर्चे पादे वा तत्पदं भवति यदभिमतं निर्वक्तुं तावन्मात्रमेवाधीते तदभिविवक्षया । तदेतदेवं निपुणमन्वेष्यं सर्वत्र । 10 15

उकारस्योदाहरणम्

> “ अय मु ते सर्मतसि कपोत इव गर्भधिम् ।
> वचस्तच्चिन्न ओहसे ॥” 20

---

1. *a.* अमहीयोगिरस्येयमार्षं, *m.* आमहीय आंगिरस्येयमार्षं । 2-3. m देवे तृप्तयोः for देवतृप्तये. 4. *m.* बह्वो for बह्वयो 5 *bi.* एवमेवास्मद्गिरः एतं ?; *d.* एनं for एतं; *d.* देव तर्पणाय, *a* देवतर्पणाय for देवतर्पणाय 6. *d m* यः कतमः य इन्द्रस्य, *b.* reads य कतमः स इन्द्रस्य; *m.* हृदयस्य संभक्ता. 7. *bi.* om. च after निरुच्यन्ते. 10 *bi* सर्वेषामप्युदाहरण° for सर्वेषामेवोदाहरण° of our Mss.; *a d* om च after निरुच्येत. 11. *a. d* व्याख्योपप्रदर्शनार्थं, *b m* व्याख्योपदर्शनार्थं. 14. *b. m.* om वा after किंचित्; *m* अन्यदापोहं करोति. 15 *bi.* कश्चित् for कस्यचित्. 16 *bi* तावत् पद for वा तत्पदं 17. *bi.* अन्वेष्टव्यं for अन्वेष्यं. 18. *m.* adds कक् after उदाहरणं.

---

19. The quot. is RS. IX. 30. 4.

शुनःशेपो यूपे नियुक्तमात्मानं मोचयितुमिच्छन्नया गायत्र्येन्द्रं तुष्टाव । अयम् इति वर्तमान एव कर्मणि निदर्शयन्नाह । ते–तव त्वदर्थं सोमः यं प्रति नित्यकालमेव **समतसि**–संपतसि । त्वं तासु तासु क्रियास्वाहूयमानः समनसि संपतसि । कथं पुनः संप्रति समतसि । कपोत इव । कत्पतनः कपोतः कुत्सितपतनः स यथा **गर्भधि**– गर्भधानीं कपोतिकाम् अण्डाश्रयं वा नीडं प्रति पुनः पुनः पतति एवं यं प्रति नित्यकालमेव संपतसि त्वं ■ एवायमभिषुतः सोम एभिर्ऋत्विग्भिः । अथ किमस्माभिः करिष्यसि । मोचयास्मान् । किं वा वच एवेदं नः स्तुतिलक्षणं नोहसे–न वितर्कयसि रोरूयमाणानां केनाप्यभिप्रायेण । वयमेव ब्रूमः केवलं युष्मद्गुणैर्न युक्तमेतदिति यतो न मोचयस्यस्मानतो यूपात् । श्रुत्वैतदस्मदुद्धार्थमार्ततामस्माकमवधार्य कारुण्यान्मोचयास्मान् । किं तैरस्माभिः । अयमेव तेऽस्मत्तः प्रतिविशिष्टतरः सोमोऽभिषुत इत्यभिप्रायः ।

इवोऽपि दृश्यते । कदाचिदनर्थकः इति वाक्यशेषः । किमुदाहरणम् । **सु विदुरिव सु विज्ञायेते इव** इत्येते उदाहरणे । सुष्ठु विदुर्यज्ञं ब्राह्मणा इति । इ[व] नर्थक एव वाक्यपूरणः । सुष्ठु विज्ञायेते यज्ञनक्षत्रे ब्राह्मणैरिति अत्रापीवोऽनर्थक [...]

व्याख्याताः पदपूरणाः । निपातसमाहारमधुना दर्शयति तदधिकारा[...] शब्दः । अपीति संभावने । अथायमेव इदिति केवलः प्रयुज्यमानः पदपूर[णः] अपि चायमेव न इत्येतेन संप्रयुक्तः **प्रयुज्यते परिभये अर्थे** । ■ परिभयम् ॥ १० ॥

[...]मिश्रप- [...]दपूरण [...]त्तुने

---

1 *bi.* शुनःशेफो नियुक्त आत्मानं, and पतया for अनया. 2. *bi.* वर्तमानः [...] कर्मणि निर्दिशन्नाह ; *bi.* युष्मदर्थं for त्वदर्थं 3. *bi.* om. संपतसि, and one तासु. 4 *bi.* पुनर्यं प्रति for पुन संप्रति, and कंपतनः for कत्पतन of our Mss ; *d.* om. गर्भधि. 6. *m.* एवमयं for एवायं 8. *bi.* रोरूयमाणानां ; *b m* वयमेवं for वयमेतत् of *bi.* 9 *b. m.* अर्थमार्ततां for अर्थमार्ततां of others 12 यज्ञब्राह्मणा for यज्ञं ब्राह्मणा 13. *b. m* यज्ञनक्षत्रे, *d.* यज्ञेन । क्षत्रं ?, *bi* यज्ञो नक्षत्रं 14. *m* तदप्यविकाराणां. 15 *a. d.* om अथ before अयमेव, *b. m.* अपि for अथ here; *a.* पादपूरणः for पदपूरणः 16. *a. d.* अनेन for एतेन ; *bi.* संयुक्तः for संप्रयुक्तः.

"हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ।
शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम ॥ "

इति । नरकं न्यरकं नीचैर्गमनं नास्मिन्रमणं स्थानमल्पमप्यस्तीति वाथापि न चेत्येष इदित्येतेन संप्रयुज्यतेऽनुपरिष्टे न चेत्सुरां पिबन्तीति । सुरा सुनोतेः । एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः ॥ ११ ॥ 5

कथं प्रयोगः । नेज्जिह्मायन्त्यो नरकं पतामेति । मृग्यः शेषः । केचिदेनं कृत्स्नमेवाधीयते

" हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ।
शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम "

इति । 10

नारदेन किल विप्रलभ्यमाना असुरपत्न्यो भर्तॄन्प्रति तमनेन मन्त्रेण प्रत्यूचुः । एके तावत् इतः लोकात् हविर्भिः–पुरोडाशादिभिर्निमित्तभूतैः स्वः सचन्ते–स्वर्गं लोकं प्राप्नुवन्ति स्म । अथ एके सवनेषु–यज्ञेषु सोमान् सुन्वन्तः–अभिषुण्वन्तस्तेन कर्मणेत्यर्थः । शचीर्मदन्तः–अन्ये शच्या वाचा स्तुतिभिरेके देवान् मादयन्तः–वि॰

5. Bi. concludes here sect. 6, and concludes the Pâda as इति प्रथमाध्यायस्य तृतीयः पाद', A. om. त, and after उपेक्षितव्याः concludes sect. 10. and also the pâda as इति प्रथमाध्यायस्य द्वितीयः पाद' ॥ 7. *bi.* अधीयन्ते. 11. *m.* adds हविर्भिरेक इति before नारदेन, *a.* विप्रलभ्यमानाश्च सुरपत्न्यो । 12 *d.* लोकान् for लोकात्, and पुरोडाशादिभिः for पुरोडाशादिभि'; *m.* निमित्तभूतैः for निमित्तभूतै'; *d.* सचेते for सचन्ते, *a. d.* om. लोकं. 13. *a. d.* प्राप्नुवन्ति स्म अन्येके, *a. b. m.* om. सुन्वन्तः, *d.* reads सोमानमभिषुण्वन्तः । 14. *b.* m. om. एके.

1. This verse is not traceable in the ऋग्वेद. The remark of the commentator मृग्यः शेषः &c. seems to question the occurence of the stanza in full in the text relied upon by him as authentic, though he too is conscious that it was found in some Mss. All the Mss, consulted by us, contain it as an accented text, and it is also preserved by traditional recitation in these parts of India. Hence we believe that the whole stanza did exist in the current text of the Nirukta from very old times.

संतर्पयन्त इत्यर्थः। अप्यन्ये दक्षिणाभिः स्वः सचन्ते इत्येतदेवानुवर्तते। तत्रैवं सति तेन तेनाभ्युद्यतेषु प्राणिषु श्रेयः प्रति यदि वयमेतानपि भर्तॄन् सम्यक् परिचरेमान्येषां जपहोमादीनां कर्मणामसंभवे सति नेत् वयमेतेषामप्युपरि जिह्मायन्तो-जिह्ममाचरन्त्यो भगवन् नरकं पताम न ह्यन्यो भर्तृपरिचर्यातः स्त्रियाः कश्चन धर्मोऽस्तीत्यभिप्रायः।

नरकशब्दं निर्ब्रवीति। नीचैरस्मिन्नर्यते गम्यत इति नरकमथवा नास्त्यस्मिन् रमणं रतिकरं स्थानमल्पमप्यस्तीति नरकम्।

अथाप्ययमपरो निपातसमाहारो नचेत्येष इदित्येतेनैव संप्रयुक्तः प्रयुज्यते। केनचिदनुपृष्टे सति प्रतिवचनं भवति। तद्यथा कश्चित् कंचित् पृच्छति तिष्ठन्ति
10 वृषला इति। ततः प्रत्याचष्टे तिष्ठन्तीति। ततो यदि तिष्ठन्ति किमर्थं नागच्छन्तीति पुनरनुपृष्टे ब्रवीति न चेत् सुरां पिबन्त्यागमिष्यन्ति इति। यदि सुरां न पिबन्तीत्यर्थः।

अथ सुरा कस्मात्। सुनोतेः। सा ह्यभिषूयतेऽनेकैर्द्रव्यैः पिष्टादिभिः।

एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः। एवमनेन प्रकारेणोच्चावचे-
15 ष्वर्थेषु बहुप्रकारेषु समाहृताश्चान्येऽप्येवं बहुप्रकारा निपतन्ति प्रयुज्यमानास्ते लक्षणशास्त्रमेतच्चार्थनिर्वचनशास्त्रमुपेत्योपगम्यानुप्रविश्य ईक्षितव्याः कः कस्मिन्नर्थे वर्तत इत्येवं द्रष्टव्याः परीक्ष्या इत्यर्थः॥ ११॥

---

1 *d.* स्व सचन्तेत्येतदेवा°. 2. *b d.* भर्तॄन् सम्यक्, *m bi.* भर्तॄन्सम्यक्. 3. *a.* कर्मणानसम्भवे; *bi* उप for उपरि of all our Mss. 4. *m.* ह्यन्यो for ह्यन्यो. 8. — *b* °स्मिन्नयते for °स्मिन्नर्यते; *a* नास्मिन् for नास्त्यस्मिन् (perhaps better).
1. *bi* सुरां न पिबन्तीत्यर्थः probably a mistake. 13. *a. b. d. m* अथ
16. *a b d* read अनुप्रविश्य, *bi* °प्रवेश्य. 17. *a. b.* con-
कर्मणि निर्विश्य [illegible]ion and the pāda after निगमनार्थः below, *b* concludes sect.
4 *bi* [illegible]āda after °परिसमाप्त्यर्थं below, *bi. m.* conclude Khaṇḍa
*d.* om [illegible] [illegible]ter इत्यर्थः.

---

वयमेवं for वयमेतत् [illegible]eaking यदि seems to be superfluous and the reading
12 [illegible] for [illegible]referable. In that case the sentence makes sense
नरक. 14. *m.* तद्यथा If यदि be there the reading of *b. d.* adopted here is
अपि for अथ here, *a* पाद[illegible]ng some sense, but then नेत् after सति seems to be
संयुक्तः for संप्रयुक्तः. [illegible]ost should have its place after वयं. We have,
[illegible] and नेत् as no Ms. omits any of them. Hence
[illegible] a less faulty than the other one.

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च । तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च । न सर्वाणीति गार्ग्यो वैयाकरणानां चैके । तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि यथा गौरश्वः पुरुषो हस्तीत्यथ चेत् सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्त्वं तथाचक्षीरन् यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्याद्यत् किंचित्तृन्द्यात्तृणं तदथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात्तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् ॥ १२ ॥

इतिकरणोधिकारपरिसमाप्त्यर्थः । इमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च इति । प्रतिज्ञाभ्यासो निगमनार्थः इतीमानि चत्वारि पदजातानीति व्याख्यानम् । अनुक्रान्तान्यानुपूर्व्येण पूर्वमाख्यातं ततो नामानि तत उपसर्गास्ततो निपाता इत्येवमानुपूर्व्येण क्रान्तानि—वर्णितानि व्याख्ययेति वाक्यशेषः । कतमानि पुनस्तानि । नामाख्याते चोपसर्गनिपाताश्चेति । तदपि व्याख्यातमेव । यच्च तदुक्तं नाम्नः किंचिद्वाचिष्यते तच्चतुर्थेन पादेन वर्णयिष्याम इति तदिदमवसरप्राप्तं पदचतुष्टयलक्षणानन्तरमारभ्यते । **तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ।** तत्र तस्मिन्नेव पदचतुष्टये यानि नामानि तानि सर्वाण्येवा

4. Bi. remarks, in the foot-note, that संविज्ञातानि is a variant here acknowledged by *Durga*. 7. One Ms of Bi. यत्किंच तृन्द्यात्. 9. A. and three Mss. of Bi. read दर्शया, one Ms. सञ्जनी, R's variant is दर्शया वा सञ्जनी; after स्यात् A. Bi. conclude sect. I. of the *4th* pâda. 10. *m.* adds before इतिकरणः the pratîka up to स्युरिति; *a. b. d.* add इति before इमानि. 11. *bi.* प्रतिज्ञाभ्यासो निगम इत्यर्थः. 12. *a. b. d. m.* पदजातानीति व्याख्यानं । अनुक्रान्तान्यानुपूर्व्येण पूर्वमाख्यातं &c., *bi.* पदजातानीति व्याख्याय अनुक्रान्तानि पूर्वमाख्यातं etc. 13. *m.* व्याख्याय for व्याख्यया. 14. *m.* om. पुनस्तानि after कतमानि. 15. *bi.* adds पर after तदिदं. 16. *m.* तेनात्र for तत्र. 17. *bi.* पादचतुष्टये; *a.* repeats तानि once more.

15. तदुक्त i. e. on p. 58 *l.* 11 *supra.*

विशेषेणाख्यातजानीत्येवं शाकटायन आचार्यो ब्रवीतीति वाक्यशेषः । नैरुक्तानां चेव
समयः—सिद्धान्तः सर्वेषामविशेषेण गार्ग्यवर्जम् । आह । कः पुनरन्यथा ब्रवीति येनैव-
मुच्यते शाकटायनो ब्रवीतीति । उच्यते । **न सर्वाणीति गार्ग्यो** ब्रवीति । किं
गार्ग्य एव ब्रवीति । नेत्युच्यते । **वैयाकरणानां चैके** । व्याकरणमधीयते ये ते वैया-
5 करणाः । तेषां चैके न सर्वाण्याख्यातजानि नामानीत्येवं ब्रुवत इति वाक्यशेषः ।

**तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संवि-
ज्ञातानि तानि** इति । तदेतदारभ्यते गार्ग्यपक्षेण । यान्याख्यातजानि नामानि यानि
चान्यानि एवं प्रयुयुक्षन्नच्छन्दः । इह त्रिविधा व्यवस्था नाम्नाम् । तद्यथा । प्रत्यक्ष-
क्रियाणि प्रकल्प्यक्रियाण्यविद्यमानक्रियाणीति । तत्र प्रत्यक्षक्रियाणि । तद्यथा कारको हारक
10 इति । प्रकल्प्यक्रियाणि । तद्यथा गौरश्व इति । अविद्यमानक्रियाणि । तद्यथा डित्थो डवित्थो-
ऽरविन्दोऽर्वाङ् चन्द्र इति । तत्रैवं सति यत्र—येष्वित्यर्थः । केषु । नामसु । स्वरसंस्कारौ—
स्वरश्चोदात्तादिः संस्कारश्च प्रकृतिप्रत्ययादिस्तौ स्वरसंस्कारौ समर्थौ । समर्थता नामोप-
पत्तिरुच्यते । संगतार्थौ—लक्षणशास्त्रविहितयोपपत्त्या युक्तावित्यर्थः । यथैव लक्षणाविप्र-
तिपत्त्या स्वरोऽवस्थित एवं संस्कारोऽपि । येष्वपि च प्रादेशिकेन प्रदिश्यते द्रव्यमनयेति
15 प्रदेशः क्रिया या तस्मिन् द्रव्ये व्यवस्थिता यद्धेतुकस्तस्य नामधेयप्रतिलम्भोऽभिप्रेत-
स्तस्याः प्रदेशाख्यायाः क्रियाया अभिधायको धातुः स गुण इत्युच्यते । अन्यत्र हि गुण-
शब्दोऽप्रधाने वर्तते । शेषः अङ्गं गुणः इति समानार्थाः । प्रधानं तु तत्र क्रिया प्रदे-
शाख्या । तदभिधायको धातुर्गुणाख्यः । स प्रदेशवाचकत्वात् प्रादेशिको गुण इत्युच्यते ।
तेन धातुरूपेणान्वितावनुगतौ स्वरसंस्कारौ स्यातां भवेतां येषाम् । आह । किं तेषा-

---

2. *bi* गार्ग्यवर्ज्यं   3 *a. d.* add एव after शाकटायन°, *b. m.* om. येनैवमुच्यते शाकटायनो ब्रवीतीति ; *a d* om. इति after सर्वाणि; *a d.* om. ब्रवीति.   4. *bi.* मधीयन्ते, *d* एते for ये ते, *m* om. ये ते.   7. *b. m.* यानि चान्यानि, *bi.* यानि यान्ति, *a d* यानि यानीति   8. *m.* तच्छन्द:, *bi* त्रिधा   9. *bi* प्रकल्प्यक्रियाणि ;; *bi.* om इति before तत्र, and तद्यथा before कारको.   10 *bi.* प्रकल्प्यक्रियाणि ; *b.* om. तद्यथा before डित्थो.   11 *a. m* अरविन्दो वार्विद इति, *b.* अरविन्दोर्वाविद इति, *d.* डित्थो डविंय अरविन्दोवोर्विद इति This is all unintelligible, neither is the reading of *bi* the more likely though it is retained above.   12. *a. b. d. m* पतौ for स्तौ, *a. d.* प्रकृतिप्रत्ययादिभि. for °त्ययादि ; *a* °संस्कारसमर्थौ, *d.* °संस्कारौ सर्वौ ?   14 *b* एवं संस्कारोऽपि येषु । अपि च etc ; *b. m.* om द्रव्य.
15. *m.* क्रियायाः for क्रिया या ; *a b. d. m.* व्यवस्थिता for अवस्थिता of *bi.*   16. *b. m.* add यो before धातुः.   19. *b. m* धातुगुणेन for धातुरूपेण.

मिति उच्यते। **संविज्ञातानि तानि**। समं विज्ञातानि ऐकमत्येन विज्ञातानीत्यर्थः। तेषु तावदविप्रतिपत्तिरेवास्माकमाख्यातजानि नामानीति। तद्यथा कर्ता कारकः पक्ता पाचक इति। न पुनर्यथा गौरश्वः पुरुषो हस्तीति। किं कारणम्। एतेषु प्रकल्प्यन्ते क्रिया न साक्षादुपलभ्यन्ते। अपि चैतेषु कल्पयितुमपि तावच्छक्यन्ते न डित्थादिषु पुनः प्रकल्पयितुमपि शक्यन्ते। तस्मान्न सर्वाण्याख्यातजानि नामानीति। तत्र यदुक्तं 5
**सर्वाण्याख्यातजानि नामानीति** तद्युक्तम्। रूढिशब्देषु च क्रियाः केवलं शब्दव्युत्पत्तिकर्मण्युपलक्षणभूता निमित्तभावेनोपादीयन्ते न वस्तुनोऽर्थक्रियास्वनुसहायभावं प्रति। तत्र शब्दस्याप्रत्युत्पन्नानुपलक्षितेषु प्रवृत्तेरभिधाने निवृत्तायां क्रियायामुपरतसाधनव्यापारं निरूप्य क्रियायामभिधानं वस्तुमात्रस्य प्रतिनिर्देशकं रूढिरित्यभिधीयते।

अपरो व्याख्यामार्गः। **तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेना-** 10
**न्वितौ स्याताम्**। यत्र यस्मिन्नाम्नि स्वरसंस्कारौ समर्थौ अष्टाध्यायीलक्षणोपपन्नस्यायुक्तौ प्रदेशाभिधायिना च धात्वाख्येन प्रादेशिकेन गुणेनान्वितावनुगतौ स्यातां न्यायवत्कार्मनामिकसंयुक्तेन संस्कारेण। तद्यथा कर्ता कारकः पक्ता पाचक इत्येवमादि। तदाख्यातजं गुणकृतमिति प्रतीम इति वाक्यशेषः। येषु पुनरष्टाध्यायीलक्षणपराङ्मुखौ स्वरसंस्कारावननुगतौ न च न्याय्यकार्मनामिकसंस्कारयुक्तेन प्रदेशाख्येन धातुरू- 15

---

1. *m.* समविज्ञातानि; *a. d.* एकमत्येन. 2. *m.* om नामानि; *a. b. d.* read तानि instead of नामानि. 3. *bi.* प्रकल्पन्ते for प्रकल्प्यन्ते. 4. *bi.* तदित्थादिषु or न डित्थादिषु, *d.* दित्थादिषु for डित्था°. 5. *a. bi.* कल्पयितु° for प्रकल्प°; *m.* तत् for तत्र 6. *b. d.* एतत् for तत्; *bi.* रूढिशब्दे for °शब्देषु; *m.* क्रियाया° for क्रियाः. 7. *b.* शब्दस्य व्युत्पत्ति°; *m.* °सहायाभावं; 8. *b. m.* शब्दस्याप्रत्युत्पन्नो उपलक्षिते, *a. d.* शब्दस्य प्रत्युत्पन्नो उपलक्षिते, *bi.* शब्दस्य प्रत्युत्पन्नानुपलक्षिते, *b. bi.* निर्वृतायां for निवृत्तायां of all our Mss.; *a. d.* om क्रियायां before °उपरत°; *a.* °साधनाख्यापार, *d.* °साधनाव्यापारं, *b. m. bi.* °साधनव्यापारं. 9. *m.* निरूप्य for निरूप्य of *bi. a. d*; *m.* reads वस्तु तस्य for वस्तुमात्रस्य of *a. b. d. bi.* 10. *m. b.* om. तत् before यत्र 12. *a. d.* प्रदेशाभिधायिना, *bi. m.* प्रादेशाभिधायिना, *b* प्रदेशाभिधानं विना च. 13. *d.* °कर्मनामिक° for °कार्म°. 14. *a.* गुणीकृतं for गुणकृतं of *b. d. m. bi.* 15. *b. m.* om न्याय्य° before °कार्मनामिक°.

---

8. The sentence beginning with तत्र शब्दस्य hardly makes any sense nor are the variants useful in this case. We select a reading which is the nearer to make any sense.

भिधानं द्वयोर्धात्वोः संचस्कार सत्यमिति । अथ कोर्थः । सन्तमर्थमाययति प्रत्याययति गमयतीति सत्यम् । कारितं च यकारादि च शुद्धं च सकारादि चेति इतरस्माच्चेतरस्माच्चेतरं चेतरं चार्थमिति समुच्चयार्थाश्चकाराः । एवं पदेभ्यः पदेतरार्धान् संचस्कार शाकटायनः । तदेतदन्याय्यं कृतवान् । को हि नाम पदं विभज्यानेकधातुजं कुर्यात् । तदेतदकृतपूर्वमन्यैर्विद्वद्भिः शाकटायनोतिपाण्डित्याभिमानादकरोयदभिनत्पदानि । अपि 5 चोपजायते नः शङ्का । यथासौ प्रवृत्तो नासौ पदेषु स्थास्यति । अवश्यमसौ वर्णानपि भेत्स्यति । अनेकार्थांश्च कल्पयिष्यति । यो हि पदान्यभिनत्तस्य वर्णभेदे विशेषहेतुः को भविष्यति । तस्मादतिप्रसङ्गदोषोपपत्त्या नानेकधातुजानि नामानि नापि सर्वाण्याख्यातजानि नामानीति ।

अथापि अयमपरो दोषः प्रसज्येत । कतमः । **सत्त्वपूर्वो भाव इत्याहुः** 10 अभियुक्तास्तद्विदः । सत्त्वं पूर्वमस्मात्सोयं सत्त्वपूर्वः । किं कारणम् । सत्त्वाश्रय एव ह्यसौ । तत्रैवं सति **अपरस्माद्भावात्**—अपरकालीनेन भावेन—क्रियया **पूर्वस्य**—पूर्वोत्पन्नस्य सत्त्वस्य **प्रदेशः**—प्रदेशनं—संज्ञाप्रतिलम्भो **नोपपद्यते** । किं कारणम् । उत्पत्तिसहभूता हि सा । स्वेनाभिधानेन क्रियानिरपेक्षेणाभिसंबद्धमेव द्रव्यमुत्पद्यते । नित्यसंबद्धौ हि शब्दार्थौ । **इति तदेतत्** सर्वथा सर्वाण्याख्यातजानि नामानीति शाकटायन- 15 मतं **नोपपद्यते** । तदनुपपत्तावस्मत्पक्षसिद्धिः कानिचिदाख्यातजानि नामानि कानिचिन्नाख्यातजानीति । अथ शक्यते प्रत्यवस्थातुं प्रत्यवस्थीयतामिति । परिसमाप्तो पूर्वपक्षः ॥ १३ ॥

1. *bi.* adds भवति after सत्यमिति; *a. d. b. m.* सन्तमर्थमापयति प्रत्यापयति गमयतीति सत्य. *bi.* सन्तमर्थमानयति प्रत्यापयति गमयन्तीति सत्य. 2. *b. m.* add यतः before कारितं, *m.* om. च after कारितं; *b m.* add अन्तःकरणमस्ते after यकारादि च; *a. d.* इतरस्माच्चेतर चार्थमिति, *b. m.* इतरस्माच्चेतरस्माच्चेतरं चेतरं चार्थमिति, *bi.* इतरस्य चेतरं चार्थमिति. 5. *m.* शाकटायन इति पाण्डित्या°. 6. *d.* पुष्टो, *a.* प्रुष्टो, *m.* प्रवृत्तो, *b. bi.* प्रवृत्तो; *a. b. d. m.* अवश्यमसौ, *bi.* अपि चासौ. 7. *b m.* वर्णाभेदे, *bi. a. d.* वर्णभेदे. 8. *m.* अतिप्रसंगेन दोषोप°; *m.* om. after नानेकधातु° all from °जानि to कतमः in *l.* 10. 9. *a. d.* आख्यातजानीति, by omitting नामानि. 10. *b.* reads प्रसज्येत. 12. *a. b. d. m.* om. अपरस्माद्भावात्; and also पूर्वस्य. 13. *bi.* om. सत्त्वस्य before प्रदेशः. 14. *a.* सा हि t; *m* निरपेक्षमाणा° for निरपेक्षेणा°. 15. *m.* शब्दार्थाविति । तदेतत् &c.

14. I suggest that the reading here should be उत्पत्त्यसहभूता हि सा. This will give a consistent meaning. But no Ms. or edition comes to support the change. I have therefore allowed the reading of the Mss. to stand, though, I fear, it hardly makes any sense.

शाकटायनपक्षेणेदानीमेतान्दोषान्प्रतिसमाधास्यामस्तदर्थमिदमारभ्यते ।

यथो हि नु वा एतत्तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेना-
न्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति । यथ
एतद्यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्त्वं तथाचक्षीरन्निति पश्यामः सम
5 नकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजक
जीवनो भूमिज इत्येतेनैवोत्तरः प्रत्युक्तः । यथो एतद्यथा चापि प्रती
तार्थानि स्युस्तथैनान्याचक्षीरन्निति सन्त्यल्पप्रयोगाः कृतोऽप्यैक
दिका यथा व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति
यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति भवति हि निष्पन्ने
10 ऽभिव्याहारे योगपरीष्टिः । प्रथनात्पृथिवीत्याहुः क एनामप्रथयिष्य
त्किमाधारश्चेत्यथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैरथाप्येवं सर्व ए
दृष्टप्रवादा उपालभ्यन्ते । यथो एतत्पदेभ्यः पदेतरार्धान्संचस्कार
योनन्वितेऽर्थे संचस्कार स तेन गर्ह्यः सैषा पुरुषगर्हा न शास्त्रग
इति । यथो एतदपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति पश्याम
15 पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैके
यथा बिल्वादो लम्बचूडक इति । बिल्वं भरणाद्वा भेदनाद्वा ॥ १४ ॥

---

3. R's variant सत्यनुपालम्भ॰ 7. A. कृतोऽप्येकपदिका. 8 A. व्रत्तो for व्रतति । 11. A. Bi. conclude sect 3 of the fourth pāda after चे प्यन्यैः 13. B C. D. गर्ह्या, Bi गर्हे, B1 om न शास्त्रगर्हा read by all other 14. C. प्रादेशो for प्रदेशो 16. Three Mss of B1. लम्बचूलक; Bi. conclud sect. 4 after भेदनाद्वा and then concludes pāda as प्रथमाध्यायस्य चतुर्थ. पादः A. concludes sect. 4, but does not conclude its pāda here and goes marking the sections of the next pāda serially.

**यथो हि नु वा एतदिति** । यथेति वाक्योपादाने । यथा येन प्रकारेण । उकारो-
ऽवधारणार्थः । व्याख्यातमेतत् 'अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण' इति । येनैव
प्रकारेण प्रसिद्धमाचार्येणाख्यातजत्वं प्रतिषिद्धं नाम्नामनेनैव प्रकारेण प्रत्यनुभाष्य समीक-
रिष्यामीति । हि इत्यनूकर्षणम् । कथं हि व्याकरिष्यतीति । नु इत्येष हेत्वपदेशे । वै
इत्ययं यथोक्तपूर्वसंक्षेपोपदेशार्थः । येनैव प्रकारेणासमर्था हेतव उक्तास्तेनैव प्रकारेण 5
प्रत्यनुभाष्य प्रतिवक्तृधर्मेण समीकरिष्यामः ।

यथैतदुक्तम् । किमिति । **तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेना-
न्वितौ स्यातामिति** । आह । तत्र किमिति । उच्यते । तदेतत्प्रत्युच्यत इत्युपयुक्तस्तच्छब्दः ।

आह । केन पुनः प्रकारेण प्रत्युच्यत इति । उच्यते । **सर्वं प्रादेशिकमित्येवं
सत्यनुपालम्भ एष भवति** । सर्वमेव प्रादेशिकं सर्वमेव क्रियार्थं नाम । आह । ततः 10
किमिति । **एवं सत्यनुपालम्भ एष भवति** । आह । कथम् । शृणु । प्रदेशवाचिन
आख्यातानुपलभ्य तदाश्रयौ स्वरसंस्कारौ यावद्वक्तुमनुविधेयौ । विभ्वी हि लक्षणगति-
र्नैव शब्दापराधो नाप्यस्माकम् । भवत एवायमपराधो मन्दशिक्षितत्वाद्येनानुविधातुं
स्वरसंस्कारौ विद्यमानावपि प्रदेशवाचिनि धातौ न शक्नोषि । स त्वं तावत् पुनः पुनः
शिक्षस्वान्यद्व्याकरणं यावच्छक्तिमत्त्वादनुविधातुमिति । व्याकरणेष्वप्यन्यथा भिन्ने लक्षणे- 15
रेकदेशो विक्षिप्तः । कश्चिल्लोपो विधिः कश्चिदुपच्छन्दसकदेशावच्छन्दानिरिक्ताध्याहारयोग-
विभागादिगम्यः । तद्यथा । मन्त्रान्तरेष्वप्यभिप्रेतेषु कश्चित्क्वचिद्विधिरुच्यते । ते च सर्वे
एव प्रयोगमिच्छता प्रयोगकाल उपसंहर्तव्याः । एवमिहापि सर्वाण्येव लक्षणशास्त्राण्य-
पेक्ष्याण्यखिलस्वरसंस्कारसिद्धये इति स त्वं तावच्छिक्षस्वानिर्विण्णो यावदखिलशब्दानां
स्वरसंस्कारावनुविधातुमुपयातुं सामर्थ्यमिति । 20

---

1. *m.* वाक्योपादानेन. 2 *b.* इतरेण for उत्तरेणेति of all our Mss. 3. *b.* प्रत्यनुभाष्यामि for प्रत्यनुभाष्य समीकरिष्यामीति. *m* प्रत्यनुभाष्ये । 7 *a. d* यथैतदुक्तं ; *m* कमिति ।. *d* om. तत् before यत्र. 9. *a. d* om. पुनः after केन. 10. *m.* नाह for नाम । आह. 12 *m.* विश्वी for विभ्वी ? 13 *b.* भवत इत्यत &c ; *m.* adds तु after भवत. 14 *a b.* om. one पुनः. 15. *a d.* तावानुविधातुं for तावदनु°, *b.* लक्षणैरेकदेशो विक्षिप्त , *a d* लक्षणैकदेशो विक्षिप्तः, *b* लक्षणैकैकदेशो विक्षिप्तः, *m.* लक्षणं एकैकदेशो विक्षिप्तः 16 *a. d.* read विधि for यातु of *b. m* ; *a d.* °रिक्ता ध्याहार°; *b.* ° हारविभागा° for हारयोगविभागा° of all our Mss. 17. *m* गम्यमाह for गम्य ।. *b* om च, *m.* om च सर्वे after ते 19 *a. d.* अखिलस्वरसंस्कारसिद्धये स्वरसंस्कारं च इति ।?, *b.* अनिर्विण्ण for अनिर्विण्णो . 20. *a. d.* उपयाते for उपयातुं.

---

2. व्याख्यातम्—*Vide* p. 72, l. 8 *supra*.

क्रियाकारितो नामधेयप्रतिलम्भस्तथा तक्षा परिव्राजक इत्येतान्येवोदाहरणानि । तक्षा ह्यन्यान्यपि कर्माणि करोति । न पुनस्तस्य तत्कृतो नामधेयप्रतिलम्भोऽस्ति । तत्र यदुक्तमेकस्यानेकक्रियायोगादनेकनामता प्रसज्येतेति एतदयुक्तम् । न हि प्रसज्येत । यच्चोक्तमनेकेषामेकनामतैकस्य चानेकनामता प्राप्नोति ततश्च व्यवहाराप्रसिद्धिरिति न हि तदुभयमस्ति । अनेकेषामेकक्रियायोगेऽपि हि सत्येकस्य चानेकक्रियायोगेऽपि हि सति 5 व्यवस्थित एव शब्दनियमः स्वभावत एव लोके। तस्मान्न व्यवहाराप्रसिद्धिदोषोऽस्ति । तत्र यदुक्तं व्यवहाराप्रसिद्धिदोषप्रसङ्गान्न सर्वाण्याख्यातजानि नामानीत्येतदयुक्तम् ।

**यथो एतत्**-यत् पुनरेतदुक्तं **यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति** । अत्र ब्रूमः शब्दस्वाभाव्यमेतदत्र तथा सर्वाण्याख्यायन्ते यथा प्रतीतार्थानि भवन्ति । न तत्राहमपराध्ये भवन्तो नापि शास्त्रम् । यथावस्थितानां 10 हि शब्दानामन्वाख्यानमात्रमेव क्रियते। नाहं शब्दानां कर्ता। य एषां प्रयोक्तारस्तानेवोपालभस्व निराकुरु वा यदि शक्नोषि ।

आह। कस्मात्पुनः कानिचिदाख्यायन्ते लोके । उच्यते । तदभिधानस्वाभाव्यमेव कानिचित् प्रतीतार्थानि कानिचिदप्रतीतार्थानि । तान्यपि शास्त्रेण प्रतीतार्थान्येव कर्तव्यानि । एतदेव शास्त्रस्य शास्त्रत्वं यदप्रतीतार्थान्यपि प्रकृत्यादिना प्रतीतार्थानि स्युस्तथै- 15 नान्याचक्षीरन्निति । आख्यायन्त एव कानिचित् । कानिचिच्छास्त्रेण प्रतीतार्थानि क्रियन्ते । रूढ्यनुविधायित्वाल्लक्षणशास्त्रस्य गुणतस्तेषु लक्षणम् । अपि च । **सन्त्येवाल्पप्रयोगाः** प्रतीतार्थक्रिया अपि केचित् **कृतः**-कृत्प्रत्ययान्ताः शब्दा **अपि ऐकपदिका**-एकप्रकरणान्तर्वर्तिनस्तद्धर्माणः । तद्यथा **व्रततिर्दमूना जाट्य**

---

1. *bi.* adds भवति after °प्रतिलम्भः. 3. *b.* प्रसज्येतेति, *d.* प्रसज्येते तदयुक्तम्; *b.* प्रसज्येत. 4. *bi.* यदि चोक्तं for यच्चोक्त of *b. m.* 5. *bi.* om अपि after °क्रियायोगे read by all our Mss ; *b.* एकस्या चानेक°, *m.* एकस्य चानेक°. 7. *a. d.* add इति after अयुक्तं. 8. *b* यत्पुनरुक्त. 9. *bi.* om. न after यत् and before तथा. 10. *m.* प्रतीर्थानि 12. *a. d.* om. एव, *bi.* उपालम्भस्व. 13. *bi.* om. उच्यते read by *b. m.* after लोके; *bi.* अभिधाने स्वाभाव्यमेव, we read with all our Mss. 15. *a. d.* शास्त्रार्थत्वं for शास्त्रत्वं; *b. m.* प्रकृत्यादीनि for °त्यादिना of *bi. a. d.* 16. *m.* om. one कानिचित्; *a. d.* प्रतीतानि for प्रतीतार्थानि but *b.* om. it. 17. *bi.* लक्षणस्य for लक्षणशास्त्रस्य of our Mss ; *b* omits एव after सन्ति. 18. *d.* प्रतीतार्थं क्रिया; *bi.* om. अपि before केचित् read by all our Mss.; *a. b. d. m.* om. कृतः; *m.* reads कृदन्तप्रत्यया: for कृत्प्र°. 19. *a. b. d. m.* om. अपि and read ऐकपदिकाः for एकपदिकाः of *bi.*

**आटणारो जागरूको दर्विहोमीति** । व्रततिर्वृणातेः वल्ली । दमूना दममना इत्येवमादि अग्निरतिथिर्वा । जाट्यः–जटावान् । आटणारो–अटनशीलः । जागरूको–जागरणशीलः । दर्विहोमीति–दर्व्या जुहोतीत्येव प्रतीतार्थान्यपि इति शाकटायनाभिप्रायः । तत्र यदुक्तं न सर्वाण्याख्यातजानि नामानीत्येतदयुक्तम् ।

॥ **यथो एतत्**–यत् पुनरेतदुक्तं **निष्पन्नेभिर्व्याहारेभिर्विचारयन्तीति** अत्र ब्रूमः । युक्तं ते कुर्वन्ति **भवति हि निष्पन्नेभिर्व्याहारे योगपरीष्टिः** योगपरीष्टिर्नाम योगस्य परीक्षणम् । कथं नामानुपपन्नः मन्त्राभिधानयोगः परीक्ष्येत । त यदुक्तं **प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत्किमाधारश्चेति** । वयमेवं ब्रूमः प्रथितेयं केनचिदतः पृथिवीयमिति । आह । कथमियमप्रथिता स

10 पृथिवीत्वमापेति । उच्यते । **अथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः** । दृश्‍ माना दीर्घ पृथिवी । तस्मादप्यप्रथिता कैश्चिदन्यैस्तथापीयं पृथुदर्शनयोगात् पृथिव्येव तत्र यदुक्तं **क एनामप्रथयिष्यत्किमाधारश्च** एतदयुक्तम् अन्यथापि । धात्वर्थं उपपद्यत एव । तत्रैवं सति यथा न विरोत्स्यते तथा निर्वक्ष्यामः । तस्मा विरुद्धः शाकटायनाभिप्रायः ।

---

1. *a b d m* श्रीणाते for वृणाते of *bi.* 3. *m.* om. अपि, *bi* om इ before शाकटायन' read by *b m*, *m* reads शाकटायन. 4. *bi* नामानीति त युक्तम्. 6. *a. d* om युक्तं ते कुर्वन्ति. 7 *a. d m. b.* कथं ना° for कथं ना *a. d. m.* परीक्षेत. 8 *bi m* om न before वयं read by *a b. d* 11. *m. d.* read पृथुदर्शनक्रियायोगात्, *m.* in mistake 'क्रियायोगायोगात् 12. *a. d.* add इति after किमाधारश्च, *bi.* एतद् युक्तम् for एतदयुक्तम् of all Mss. 13. *b* अन्यथा हि धात्वर्थो नोपपद्यत एव *t*; *m.* निरोत्स्यते for विरोत्स्यते.

---

1. *cf.* Nir. VI. 28. *infra* for the der. of व्रततिः. For the der. of दमूनस् ( Nigh. IV. i. 5 ) *vide*. Nir. IV 4. *infra.*

2. For जाट्यः *vide* Pân. V. ii. 120 and the Vârtika on it. Hence simply means "*possessed of matted hair*". For जागरूक *vide* Pâṇi III. ii. 105.

4. यदुक्तं *vide* Nir. I. 12 *supra*

अथापि च यदि दृष्टेप्यस्याः पृथुत्वे वयमुपालभ्यामहे । नन्वेवं सति सर्व एव
टप्रवादा उपालभ्यन्ते न केवलमहमेव । यो यद्दृष्ट्वा ब्रवीति स तत्र दोष एव ।
था सति दृष्टानं प्रसज्येत । अनिष्टं चैतत् । तस्मात् पृथुदर्शनात् पृथिवीत्युच्यते ।

यथो एतत्–यत्पुनरेतदुक्तं पदेभ्यः पदेतरार्धान्त्संचस्कारेत्यत्र ब्रूमः ।
ोनन्विते शब्देनानभिधेये अर्थे अननुगतमसंबद्धं संचस्कार स तेनासम- 5
सेनासंबद्धेन संस्कारेण गर्ह्यः–गर्हणीयः । न पुनराचार्यो योऽनुगमय्य धातुभिर-
र्थैरेकाभिधानगतानर्थांस्ततः संचस्कार नैव मौढ्येन । सैषा तदभिप्रायापरिज्ञानात्
रुषगर्हा । पुरुषो ह कश्चिदशिक्षितत्वादेकधातुजमपि न जानाति किमुत बहुधातुजम् ।
पि च सन्ति लोके तादृशाः पुरुषा ये कारकहारकादीन्यपि प्रकटक्रियाणि सन्ति
तमेभ्यो धातुभ्य एतान्यभिनिष्पद्यन्त इति न जानते । एष पुरुषदोषो न शास्त्रदोषः 10
ऽनुगमयितुं धातुशब्दैरर्थो न शक्यते । तत्र यदुक्तमनन्वितेऽर्थेऽप्रादेशिके विकारे
देभ्यः पदेतरार्धान्त्संचस्कार शाकटायन इति तदयुक्तम् । अनुगत एवार्थे संचस्कार
ाकटायनः । सन्तमेव ह्यर्थमाययति गमयतीति सत्यम् । तस्मादुपपन्नत एव शाकटा-
नमतम् ।

अपि च रूढिशब्दव्युत्पत्तिर्मन्त्रेष्वपि दृश्यते । यथा लक्ष्यं तथा लक्षणं प्रवर्तितु-15
र्हति । इतरथा हि कस्य तल्लक्षणं स्यात् । यदसर्पत् तत्सर्पिरिति मन्त्रो यत्रवमेतम-

---

1. *a. b. d. m.* om. अथ read by *bi.*, we read अथ according to the text; . adds न before यदि ; *bi.* उपलभ्यामहे । 2. *d.* दृष्ट प्रवादाः for दृष्टप्रवादा; *d.* उपलभ्यन्ते, *bi.* योयं दृष्ट्वा for यो यद्दृष्ट्वा of all our Mss. 3. *b.* प्रसज्येत, *a.* पृथुत्वदर्शनात्, *m.* पृथुना for पृथुदर्शनात् of *bi.*; *a. d.* उपपद्यते for उच्यते. 4. *b.* om. एतत् after पुनः. 5. *d.* शब्देनाभिधेयेऽर्थे, *bi.* तेन सबद्धेन for तेनासमन्वि-तसंबद्धेन of *a. b. d. m.* 6. *bi.* गर्ह्यः for गर्ह्यः of all our Mss ; *bi.* omits before पुनः read by all our Mss., *a. b. d. m.* योऽनुगमय्य धातुभि° for ानुगतधातुभि° of *bi.* 10. *b. m.* अभिनिष्पद्यन्ते, *bi.* अभिनिष्पाद्यन्ते 11. *bi.* दैः for धातुशब्दैः; *m.* अनुगम इति for अनुगमयितुं; *a. d.* om. अनन्वितेऽर्थे to युक्तम् 12. *bi.* अननुगत for अनुगत of all others. 15. *a.* व्युत्पि° for °; *b.* व्युत्पत्ति for व्युत्पत्ति. *bi.* यथा लक्षणं तथा लक्ष्यं प्रवर्तितुमर्हति ; *d.* adds after यथा; *a. d.* add च after तथा 16. *bi.* यत्रवनीतमभवदिति, we ad as above with *a. d. m.*

---

16. The reading adopted does not make good sense. Perhaps it ght to be यत्रवमेतत्र° Pand. Sivadatta's edition reads यत्रवमेव नीतं तत्र-ोममभवदिति मन्त्रः. This makes sense but is not available in any Mss. have consulted.

वनीतमभवदिति मन्त्रः। अपि च ब्राह्मणेनाप्यनेकधातुजान्येव कृत्वा निरुच्यन्ते तत्र मन्त्राभिधानानि तत्परिज्ञाने च फलमुपदर्श्यते। आह "तदेतत् त्र्यक्षरं हृदयमिति। हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद। द इत्येकमक्षरं ददन्त्यस्मै स्वाश्चान्ये च य एवं वेद। यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद इति।" एवं हरते-5 र्ददातेरेतेर्हृदयशब्दस्तदर्थफलोपदर्शनार्थं ब्राह्मणेनैव निरुक्तः। तच्च नः परं प्रमाणम्। तस्माच्छाकटायनस्तदनुहृत्य सम्यगेव कृतवान् यदनेकैर्धातुभिरेकमभिधानं निरुक्तवानिति।

**यथो एतत्**—यत् पुनरेतदुक्तं **अपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति** अत्र ब्रूमः। **पूर्वोत्पन्नानां सत्त्वानां** नामधेयप्रतिलम्भः अपरस्मादपि सतो **भावात्** केषाञ्चित्तद्यथा **बिल्वादो लम्बचूडक इति**। पश्चात्कालीनयापि चूडालम्बन-10 क्रियया भविष्यता योगेन बिल्वादनक्रियया च पूर्वोत्पन्नस्य सत्त्वस्य नामधेयप्रतिलम्भ उपपद्यमानो दृष्टः। क्व चान्यत्र नोपपद्यते। तत्र यदुक्तमपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इत्येतदनैकान्तिकत्वादयुक्तम्। उपपद्यत एव हि केषाञ्चिदिति।

**बिल्वं भरणाद्वा भेदनाद्वा**। भृतं हि तद्भवति बीजानां बिभर्ति वा दुर्भिक्षादौ भक्ष्यमाणं जनम्। भेदनाद्वा भिद्यते हि तदवश्यं भक्षणायेति।

15 आह किमिदमतिविह्वलं किमपि पूर्वोत्तरमसंबद्धं नामाख्यातजत्वमधिकृत्योक्तमिति। उच्यते। शिष्यबुद्धिवृद्ध्यर्थमेतदुक्तम्। कथं नाम व्युत्पन्नबुद्धिः शिष्योऽप्रतिबध्यमानः सर्वतोमुखज्ञानेन लौकिकवैदिकाञ्छन्दानभिब्रूयादिति। सर्वाण्येव हि व्याकरणानि निरुक्तानि च वेदाङ्गत्वाविशेषात्प्रमाणानि। तेषामिदं फलमिदं साध्विल्येतदशक्यं वक्तुमिति ॥ १४ ॥

---

2. *b.* हर इत्येक for हृ इत्येक. 4. *bi* लोके for लोकं of *a. b. m.*, *d* om. लोकं. 5. *a. d.* फलोपप्रदर्शनार्थं, *m.* °नार्थं; *b. m.* ब्राह्मणे चैव for ब्राह्मणेनैव; *d* appears to read अ(ब्रू)नः for नः। 7. *a. m.* om. यत् after यदुक्त 8. *bi.* adds पश्यामः after इति; *bi.* पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भम्। अपरस्मादपि सतो भावात्। एकेषां न एकेषां तत् यथा;*a. d.* अपरकालीनात् for अपरस्मात् 9. *d.* लम्बचूलक इति. 11. *m.* चान्यनोप°, for चान्यत्र नोप° of *bi.* 12. *bi.* इत्येतदनैकत्वादयुक्तम् for इत्येतदनैकान्तिकत्वादयुक्तम्. 13 *m.* om. वा after भरणात् 15. *bi.* अतिमिश्रित for अतिविह्वल of all our Mss. 16. *b* शिष्योऽप्रतिबध्यमान., *d.* शिष्यो न प्रतिबुध्यमानः, *bi.* शिष्योऽप्रतिबुध्यमान.. 18. *bi* तेषामेव फलमिदं साध्वित्येतदशक्यं वक्तुमिति I. *m.* तेषामपीदं.

---

2. For the quot. *vide* S'atapatha Br. XIV. viii. 4. 1.

अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यतेऽर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशस्तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च । यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति कौत्सोऽनर्थका हि मन्त्रास्तदेतेनोपेक्षितव्यं नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्त्यथापि ब्राह्मणेन रूपसंपन्ना विधीयन्ते "उरु प्रथस्वेति प्रथयति" । "प्रोहाणीति प्रोहति" । अथाप्यनुपपन्नार्था भवन्ति । "ओषधे त्रायस्वैनं" "स्वधिते मैनं हिंसीः" इत्याह हिंसन्नथापि विप्रतिषिद्धार्था भवन्ति । 5

"एक एव रुद्रोऽवतस्थे न द्वितीयः ।"

"असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् ।"

"अशत्रुरिन्द्र जज्ञिषे ।" 10

"शतं सेना अजयत्साकमिन्द्रः ।"

इत्यथापि जानन्तं संप्रेष्यति "अग्नये समिध्यमानायानुब्रूहि" इत्यथाप्याहादितिः सर्वमिति "अदितिर्द्यौरदितिरन्तरिक्षम्" इति । तदुपरिष्टाद्व्याख्यास्यामोऽथाप्यविस्पष्टार्था भवन्त्यम्यग्याद्दृग्जारयायि काणुकेति ॥ १५ ॥ 15

एवं नामाख्यातोपसर्गनिपातानां प्रविभागेनावस्थितानामेतस्माल्लक्षणं परिज्ञायते ।
अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते । अथशब्दोऽधिकारार्थः ।
द्वितीयं शास्त्रारम्भप्रयोजनमधिकरोतीति । अपीति संभावने । अपि पदेषु विभागेनाव-

---

1. A. विद्यतेऽर्थमप्रतियतो, Two Mss. of Bi. °मप्रतीयतो. 2. R.'s variant विद्यास्थानं. 4. Three Mss. of Bi. °स्तदिति नो°. 16. *bi.* एतल्लक्षणं. 18. *a. d.* om. इति after अधिकरोति.

स्थितेषु लोके वेदे वा अपि मन्त्रेषु वाक्यभावेनावस्थितेषु यः समस्तार्थस्तस्मिन्प्रत्ययो विशेषावधारणं न विद्यते—न भवतीत्यर्थः । अपीदं शास्त्रमन्तरेण पदार्थे प्रत्ययो नास्ति । अपि वाक्यार्थ इत्यभिप्रायः ।

आह । कः पुनः पदार्थवाक्यार्थयोर्विशेष इति । उच्यते । साकाङ्क्षः पदार्थो निरा-
5 काङ्क्षो वाक्यार्थः । तद्यथा गौरित्युक्ते किमित्याकाङ्क्षा भवति ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति । यथा गच्छतीत्युक्ते क इति साकाङ्क्षं भवति तथा गौरित्युक्ते निराकाङ्क्षं भवति । अथेदानीं गौर्गच्छतीत्युक्ते गौर्वाहदोहादिभ्यो व्यावृत्य गमनेनावतिष्ठते । गमनं चान्येभ्यो व्यावृत्य गव्येवावतिष्ठते । एष वाक्यार्थः । स एष प्रकरणाविरोधी वाक्यार्थः पदार्थं नियमेन लक्षयति पदार्थश्च पदलक्षणम् । पदार्थसंनियोगेन हि व्याक-
10 रणे पदानां प्रकृतिप्रत्ययादीनि लक्षणानि व्यादिश्यन्ते ।

अत एवमलोऽर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः । अर्थमप्रतियतो-प्रतिपाद्यमानस्यानवबुद्धार्थस्येत्यर्थः । नात्यन्तम्—नैकान्तिकेन । एकान्तो नाम निश्चयो निश्चयेनेत्यर्थः । किम् । स्वरसंस्कारोद्देशः । स्वरोद्देशश्च संस्कारोद्देशश्च स्वराव-धारणं संस्कारावधारणं च नास्तीति वाक्यशेषः । किं कारणम् । न ह्यनवबुद्धार्थः
15 स्वरसंस्कारावधारयितुं शक्नुयात् । अर्थवशेन हि स्वरसंस्कारावतिष्ठेते ।

तदिदम्—एवं कृत्वा निरुक्तशास्त्रं विद्यास्थानमेतदधीनत्वादर्थपरिज्ञानस्य । अर्थवशगत्वाच्च स्वरसंस्कारयोरिदं व्याकरणस्य कार्त्स्न्यं कृत्स्नभावं करोतीति वाक्य-शेषः । व्याकरणेन हि स्वरसंस्कारौ चिन्त्येते । तस्मादपरिसमाप्तमेव तावद्व्याकरणं याव-न्निरुक्तं नाधिगतमिति । न ह्यनैरुक्तोऽर्थमवधारयितुमलम् । नानवबुद्धार्थः स्वरसंस्कारतत्त्वं
20 विजानीयादिति ।

---

2. *a d* नास्तीत्यर्थः for न भवतीत्यर्थः; *m* इति समस्तार्थः for इत्यर्थः. 6 *b.* *m* यथा for तथा of *b₁* before गच्छति; *m.* निराकाङ्क्ष for निराकाङ्क्षं 7. *a. d* गच्छतीति यत्र for गच्छतीत्युक्ते 8 *m* चान्येभ्यो for चान्येभ्यो, *b* om स before एष; *b. m.* प्रकरणविरोधी for प्रकरणाविरोधी 9. *a. b. d m* पदार्थनियमेन for पदार्थं नियमेन; *a* om हि 10. *b. m* लक्षणादीनि for लक्षणानि. 12 *a d* नैकान्ते च for नैकान्तिकेन; *b* एकान्ते, *b₁* एकान्त for एकान्तो of others 13. *m.* निश्चयो नेत्यर्थः 14. *b₁* om. च before नास्तीति. 15 *b₁*. °वतिष्ठते for °वतिष्ठेते. 16. *b.* एव तदधीन° for एतदधीन°. 18 *a d* व्याकरणे for व्याकरणेन

---

12. Should it not be °प्रतिपद्यमानस्य more correctly ?

आह । ननु व्याकरणस्य कार्त्स्न्यमेतत्करोतीत्युक्ते तच्छेषभूतमेवैतदुणादिवत् । ततश्च विद्यास्थानत्वमस्य विरुध्यत इति । नेत्युच्यते । स्वार्थसाधकं च । स्वार्थं जहद्वृत्त्या ह्येतदनुग्रहतो व्याकरणस्य कृत्स्नतां करोति । यथा लोके स्वार्थमपरिहाय कश्चित्परानुग्रहं करोत्येवम् । यत्पुनरेतदुक्तमुणादिवदिति । ते हि तन्त्रान्तर्भूता एव । "उणादयो बहुलम्" इत्युक्तम् । न पुनर्निघण्टवो बहुलमिति । तस्मात्स्वतन्त्रमेवेदं विद्यास्थानमर्थनिर्वचनम् । 5 व्याकरणं तु लक्षणप्रधानमिति विशेषः ।

आह । यदि मन्त्रार्थप्रत्ययायैतदारभ्यते हन्त तर्ह्येनदेवमर्थमारभ्यमाणमनर्थकमेव भवतीति । आह । क एवमाहेति । उच्यते । कौत्सः । किं कारणम् । अनर्थका हि मन्त्राः । न हि मन्त्राणामर्थोऽस्ति वाच्यवाचकत्वेन । तदर्थनिर्वचनायारभ्यमाणमिदमप्यनर्थकमेव भवति । तस्मान्नारब्धव्यमित्येवं कौत्सो मन्यते । तत् एत- 10 देवमुच्यमानं कौत्सेनानेन नैरुक्तेनोपेक्षितव्यम् । उपगम्य वेदं शास्त्रं चेक्षितव्यम् , किमसौ सत्यमाचष्टे उतेति वा परीक्ष्यम् । अर्थवत्त्वे मन्त्राणां यद्धेतुजातं वक्ष्यमाणं तदुपगम्यार्थवत्त्वं मन्त्राणामीक्षितव्यमिति केचिदाहुः ।

कया पुनरुपपत्त्या कौत्सो मन्त्राणामानर्थक्यमाहेति । उच्यते । नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्ति इति । नियतवाचोयुक्तयो-निरूढवाचोयुक्तयः- 15 अभिधाननियता हि ते भवन्ति । "अग्न आ याहि वीतये" इति मन्त्रे न पुनर्विभावसो आगच्छ पानायेति । नियतानुपूर्व्या नियतमिष्टानुपूर्वी पदप्रयोगस्य । तद्यथा । आ आयाहि इति न पुनर्भवति आयाह्यो इति । इह लोकेऽर्थवतां शब्दानामनियमेन

---

1. *a. d* करोतीत्येवमुच्यमाने, *bi.* तच्छेषमेवैतत्; *a. b d.* वणादिवत्, *bi.* गुणादिवत् 2. *m.* विद्यास्थानमस्य; *b* adds किं after उच्यते. 3. *b. m* अनुग्रहात् for °ग्रहतो; *a. d* व्याकरणकृत्स्नतां, *m* कृत्स्नतां *a* अपरिहाय, *b. d.* अपरिहाय्य, *m.* स्वार्थमप° 4. *b* करोत्येव, *a. b d* वणादिवत्, *bi* गुणादिवत्, *m* तन्त्रान्तर्भूता एव. 5. *m* अथ निर्वचन for °र्थनि° 6. *m* लक्षणप्राधान्° for °प्रधान°. 7. *a. b d m* तर्ह्यदंदमर्थं for तर्हेदमर्थं of *bi.* 8. *m.* om उच्यते 11. *bi.* उच्यमानं कौत्सं परेण अनेन नैरुक्तेन न उपेक्षितव्यम् We read with all our Mss. 16. *bi.* मंत्रेण for मंत्रे न of all our Mss. 17. *a. d.* नियतमिनिष्टानुपूर्वी; *m.* नियतानुपूर्वी,

---

4. For the Sûtra quoted *vide* Pâṇ. III, iii. 1.

16. For the quot. *vide* SS. I. i. 1.

पर्यायवचनता दृष्टा गवादिप्रयोगे तथा न पौर्वापर्यं दृष्टम् । तद्यथा । गोणीमभ्याज अभ्याज गोणीम् । आहर पात्रम् । पात्रमाहरेति । न च तथा मन्त्रेषु । ततोर्थवच्छब्द-वैधर्म्योत्पश्यामोनर्थका मन्त्रा इति ।

अथाप्ययमपरो हेतुरानर्थक्ये मन्त्राणाम् । आह । कतम इति । उच्यते । ब्राह्मणेन
5 ह्येते रूपसंपन्ना अपि सन्तो विधीयन्ते । रूपं नाम लिङ्गं तेन संपन्ना लिङ्गसंयुक्ता इत्यर्थः । प्रकटलिङ्गा अपि सन्तस्तदविवक्षितं कृत्वा कर्मसु विधीयन्त एव । यदि ह्येते अर्थवन्तोभविष्यन् स्वेनैव लिङ्गेन स्वमात्मानमेते विनियोक्तुं समर्था इति कृत्वा न ब्राह्मणेन तेषु तेषु कर्मसु व्यधास्यन्त विहिताश्च । तद्यथा । "उरु प्रथस्व" इति प्रथन-लिङ्गो मन्त्रो विहितः प्रथनकर्मणि । तथा च "उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः
10 प्रथताम्"। यजुरिदम् । पुरोडाशं प्रत्युच्यते । पुरोडाश । त्वं विस्तीर्णप्रथनः सन् विस्तार-यात्मानं ते तव यज्ञपतिश्चायं यजमानः प्रजापशुहिरण्यादिभिश्चोरु प्रथतां विस्तीर्यता-मिति । तथा "प्रोहाणीति प्रोहति" इति ब्राह्मणं द्रोणकलशप्रोहणविधायि । इदमह-मात्मानमेव प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्चसायेति । तेजोर्थं ब्रह्मवर्चसार्थं चात्मानं प्रोहामि प्राञ्चं प्रेरयामीति । प्रोहाणीति प्रोहतीति प्रोहणलिङ्गो विहितः प्रोहणकर्मणि । तस्मा-
15 ल्लिङ्गसंपन्नविधानात्पश्यामो ब्राह्मणेनानर्थकस्वरूपमेव सन्तं मन्त्रं नियुक्तम् । एवं सति मन्त्र पुनर्विदधद्ब्राह्मणमर्थवत् । अनर्थका मन्त्राः । न ह्यर्थवन्तः सन्तो दासवद्ब्राह्मणेन

---

1. *b m* read गोणी for गोणी 2 *b* om अभ्याज गोणीम्, *a d m* read गामभ्याज instead, *a d* ते ह्यमर्थवच्छब्द° for ततोऽर्थव°. 4 *m* हेतुनानर्थक्ये for हेतुरानर्थक्ये 5 *b₁* हि for ह्येते, *b.* om it. 6. *a. d* om. एव after विधीयन्ते, *b. m.* read it; *b₁* om रूप नाम etc to विधीयन्त एव 7. *b* तेनैव for स्वेनैव 8. *m* om one तेषु, *m* विधास्यन्ते for व्यधास्यन्त, *a b d m* om प्रथयति added by *b₁.* from the text. 10. *m* adds हे before पुरोडाश, *b₁* विस्तारप्रथः स्वात्मानं for विस्तारयात्मानं of all our Mss. 11 *m* विस्तार्यतां for विस्तीर्यतां. 13 *b₁* प्रोहणविधायि । इदमहमात्मानं प्रोहामि प्राञ्चं प्रेरयामीति प्रोहाणीति प्रोहतीति प्रोहणलिङ्गो for प्रोहणविधायि &c to प्रोहणलिङ्गो of our Mss 15 *b d* read विनियुक्तं for नियुक्तं, *b₁* मन्त्रं twice after एवं सति. 16 *a. d* add हि after अनर्थका.

---

8. For the quot. *cf.* S'B I i 6 8; and Kât. S'r. S0 II 5 20

9. For the quot, see VS, I, 22.

12. In the ताण्ड्यब्राह्मण we read प्रोहाणीति प्रोहति.

विधीयेरन् विहिताश्च। तस्मादनर्थका मन्त्रा इति पश्यामः। अपि च ब्राह्मणस्यानर्थक्याभ्युपगमे देशकालकर्तृदक्षिणादि कर्माङ्गभूतं कुत उपलभ्येत। तथा च ब्राह्मणस्यानर्थक्येऽभ्युपगम्यमाने वेदैकदेशस्य मन्त्रस्यात्यन्तमेवानर्थकत्वमभ्युपगतं स्यात्। न हि ब्राह्मणस्य विधिस्तुत्यर्थत्वादतोऽर्थवत्त्वमस्ति। मन्त्राणां पुनर्वाच्यवाचकत्वेनानर्थकानामपि सतां विनियोगमात्रेणार्थवत्ता स्यात्। एतस्माच्च काममनर्थका मन्त्रा वाच्यवाचकत्वेन सन्तो विनियोगमात्रेणैवार्थवन्तो विधेयत्वात्। विधायकत्वाच्च ब्राह्मणमर्थवदस्त्विति।

**अथापि**-अयमपरो हेतुरनर्थकत्वे मन्त्राणाम्। आह। कतम इति। उच्यते। **अनुपपन्नार्था** एते **भवन्ति**। य एतेष्वर्थो लभ्यते। अयमेतेष्वर्थः स्यादिति नासावुपपद्यते। तद्यथा। **ओषधे त्रायस्वैनम् इत्याह**। न चौषधिरात्मानमपि त्रातुं समर्था किमुतान्यम्। तथा। **स्वधिते मैनं हिंसीः इत्याहात्मनैव हिंसन्**। को 10 हि नामैवमुक्त्वा स्वयमेव हिंस्यात्। हिनस्ति च। लोके यान्येवंविधानि वाक्यान्युन्मत्तप्रभृतीनां तान्यनर्थकान्युच्यन्ते तथैवेमानि। तस्मादिमान्यप्यनर्थकानीत्युपपद्यते।

**अथापि**-अयमपरो हेतुरानर्थक्ये मन्त्राणाम्। आह। कतम इति। उच्यते। **विप्रतिषिद्धार्था भवन्तीति**। अन्यस्यान्येन विरुद्धार्थेन प्रतिषेधो विप्रतिषेधः इतरेतरव्याघात इत्यर्थः। तद्यथा। **"एक एव रुद्रोऽवतस्थे न द्वितीयः"**। **"असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्"**। **"अशत्रुरिन्द्र जज्ञिषे"**। **"शतं सेना अजयत् साकमिन्द्रः"** इति। एतान्युदाहरणानि। 15

---

2. a. d. अनर्थकत्वाभ्युपगमे for आनर्थक्याभ्युपगमे of b. m., bi. आनर्थक्योपगम्य; a d. उपलभ्यते; a. d om. च after तथा. 3. a. d. om. मन्त्रस्य; b. °त्यन्त-मिवा°. 4. bi. विधिस्तुत्यर्थत्वात्, m. °र्थत्वात् मन्त्रेनर्थ°. 5. a. d. add अपि after °मात्रेण, m. °मात्रेणानर्थ°; a. d. स्यादेव। तस्मात्काममनर्थका°, b. एतस्मा च काम°, m. · m. ■ after एतस्मात् 8. a. एषु for एतेषु 10. bi. समर्थाः for समर्था cf a b. d. m.; b. युक्तः for युक्ते. m. आत्मनैव for आत्मनेव cf bi. 12. d. m. add इति before उपपद्यते; b. m. om. अपि after इमानि 13. b. om. कतम इति 14. a. b. d. m. add अन्यस्य वा ( वा a. d. )न्येन before विप्रतिषेधः, b. प्रतिषेध for विप्रति°.

---

9. For qu t. see VS. IV. 1.
10. For qu t. see VS. IV. 1.
15. For असंख्याता etc. see VS. XVI. 54.
16. अशत्रु etc. is from RS. X. 133. 2; शतं etc. is from RS. X. 103. 1.

" एक एव रुद्रोवतस्थे न द्वितीयो रणे निघ्नन्पृतनासु शत्रून् ।
संसृज्य विश्वा भुवनानि गोप्ता प्रत्यङ् जनान्संचुकोचान्तकाले " ॥

एक एवावस्थे रुद्रः स्थितवान् रणाय-रणार्थम् । नान्यो द्वितीयः कश्चिदस्तीति रुद्रबहुत्वप्रतिषेधः । कथमवतस्थे । निश्चयेन घ्नन् पृतनासु-स्पर्द्धनीयेषु संग्रामेषु । किं
5 निघ्नन् । शत्रून् । किं च स एकः संसृज्य सृष्ट्वा विश्वा विश्वानि भुवनानि गोप्ता-रक्षिता सृष्ट्वा च सर्गकाले पालयित्वा च स्थितिकाले प्रत्यङ् सर्गप्रातिलोम्येन जनान् संचुकोच-सङ्कोचयति अन्तकाले प्रलयकाले । य एवंगुणस्तं रुद्रं वयं स्तुमः ।

" असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् ।
तेषां सहस्रयोजनेव धन्वानि तन्मसि ।"

10 एषा शतरुद्रियेनुष्टुप् । तेन चाग्निचयनेऽवैकेदेवेनाज्ञाक्षीरमिश्रा गवेधुकाः सक्तवो हूयन्त उत्तरस्यां श्रोणावन्त्यायामिष्टकायाम् । प्रजापतेरार्षम् । असंख्याता-असंख्याता-नि सहस्राणि-बहूनीति यावदुक्तं स्यात् । तेषाम् । ये रुद्राः भूम्याम् अधि-उपरि तेषां सहस्रयोजने-अध्वन्यवस्थितानामेव अव तन्मसि-तनुमः धन्वानि-धनूंषि । अप्राप्तानामेवास्मान्प्रतीत्यभिप्रायः । तावदेव च तानभिद्रुमो यावदवततानि तानि धनूंषीति ।

15 " त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिं ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परिष्वजामहे
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥"

---

2. Roth ( erlautingen p 12 note 4, ) reads संचुकोचान्तकाले 3 b. adds रणे before रणाय, a. d. om. इति 4 b. adds नि before निघ्नन् b. om. किं निघ्नन् before शत्रून् 5. m सृष्टा for सृष्ट्वा 6. b सर्गकाले for सर्गकाले; b पालयिता for पालयित्वा & प्रातिलोम्येन for सर्गप्राति°. 7 b. प्रलयकाले for प्रलयकाले, b. om. च before एवं, 10. d शतरुद्रीये. b अनेन for तेन, b. सक्तवो for सक्तवो of all our Mss 11. a b. d. om. असंख्याता, m om. असंख्याताानि. 12. a. d om इति after बहूनि. 13 a. b d. m. om. तन्मसि before तनुमः, and धन्वानि before धनूंषि read by b. 14 b. तावदेतान् for तावदेव च तान, b om. च; d. m. यावद्वततानि for यावत्तरानि of b ; a. b. d. m. add इति after धनूंषि omitted by b. 15. a. b. m. do not read the whole verse, d. does.

---

10. *Cf.* Kât. *S'r.* Sû. 18. 1. 1–3.

एतया अतिच्छन्दसेन्द्रं तुष्टाव सुदाः पैजवनः । षोडशिनि शस्त्रे विनियुक्ता । हे इन्द्र भवानसृजः सिन्धून्–स्यन्दनानेतान् माध्यमिकानुदकसंस्त्यायान् । कथं पुनरवासृजः । अधराचः–तानधोगमनान्कृत्वा सर्वानेवावासृजो निम्नकाटम् । अहन्नहिम्–हन् मेघम् । अशत्रुः–अशात्रविततो जज्ञिषे–जायसे नित्यकालं भवसि तस्मिन् हते मेघे । किं च । त्वमनेन प्रकारेण मेघवधकर्मणा विश्वं–सर्वं पुष्यसि–पुष्णासि वार्यं–वारिप्रभवं व्रीह्या- 5
दिकम् । तं त्वा–त्वामेवंगुणसंयुक्तं वयं परिष्वजामहे–सर्वतः स्वजामहे–आलिङ्गामः । नभन्तां–मा भूवनन्यकेषाम्–अन्येषां ज्याका–ज्या अधिधन्वसु–अधिधनुःषु । किन्तु-तान्ये केवलाभ्युपगच्छन्तां एतेस्मद्विरोधिनस्तत्र्यधनुषो हतसर्वोद्यमाः सन्त्वित्यतस्त्वां परिष्वजामहे इत्यभिप्रायः ।

" आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । 10

संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः ॥ "

इत्येषाप्रतिरथेन त्रिष्टुबभिप्रणयने विनियुक्ता । अप्रतिरथस्यैन्द्रस्यार्षम् । आशुः–व्यापकः–क्षिप्रो वा शिशानः–शिश्यानः–तीक्ष्णीकुर्वन्नायुधं प्रगृहीतायुधः वृषभो न–वृषभ इव युद्धे योद्धा भीमः–शत्रूणां भयजनको घनाघनो–हनाहनो–जहिजहीत्येवं शब्दकारी क्षोभणः । केषाम् । चर्षणीनाम्–प्रत्यनीकावस्थितानामसुरादीनाम् । संक्रन्दनः 15
–समाह्वाता शत्रूणामाहूय चानिमिषः–आदरवाक्यं प्रति एकवीरः–एक एव विक्रान्तोऽप्रतिद्वन्द्वः संग्रामेषु शतं सेना–बह्वीः शत्रुसेनाः साकमवस्थिता अजयदेक इन्द्रो यस्तं वयं स्तुमः । एवमितरेतरविप्रतिषिद्धान्येतानि मन्त्रवाक्यानि । यद्येको रुद्रः नासंख्यातानि

---

1. *bi.* सुदाः for सुदाः　　2. *m.* माध्यमिकान्; *a.* कदकसंस्त्यायान्　　3. *bi.* तानधोगमनान्; *b.* असृज for भवासृजः; *m.* नित्ये काले.　　4. *m.* नित्ये काले; *d.* तस्मिन् तस्मिन्.　　5. *m.* om. सर्वं, *bi.* वारिद.　　6. *a.* *b* *d.* *m.* om. त्वा, *bi.* om. आलिङ्गामः after स्वजामहे read by *a.* *b.* *d.* *m*　　7. *b.* *d.* *m.* add अपि after ज्या.　　8. *bi* केवलाभ्युपगच्छन्तां: *m.* एतेस्माद्विरो°, *bi.* एते स्म द्विषः　　12. *a.* *b.* *d.* अप्रतिरथे, *m.* °रथ°, *bi.* °रथेन; *b.* *d.* *m.* add अग्नौ after त्रिष्टुप्; *b.* *d.* *m.* do not read the whole verse.　　13. *a.* *d.* om. शिशान°, *m.* reads शिशान°; *m.* गृहीतायुध°.　　14. *bi.* om. भीमः शत्रूणां भयजनकः. *b.* reads भयानकः शत्रूणां; *b.* योधाः for योद्धा; *bi.* om. हनाहनो after घनाघनो read by all our Mss.　　16. *bi.* अप्रतिद्वंद्व, *a.* *d.* *m.* अप्रतिद्वन्द्वः *b.* अप्रतिद्वन्द्वा.　　18. *bi.* इतरेतरप्रतिषिद्धानि; *a.* नासंख्यातानि for नासं°, *m.* नासंख्याता.

सहस्राणि । अथासंख्यातानि नैकः । यच्छत्रुः कथं शतं सेना अजयत् । अथ शतं सेना अजयत् कथमशत्रुः । लोके हि चान्येवंरूपाणि वाक्यान्युन्मत्तादीनां तान्यनर्थकानीत्युच्यन्ते । तथा चेमानि । तस्मादिमान्यप्यनर्थकानीति ।

अथापि–अयमपरो हेतुर्मन्त्राणामानर्थक्ये । कतम इति । उच्यते । जानन्तं संप्रेष्यत्यध्वर्युर्होतारम् । कथम् । "अग्नये समिध्यमानायानुब्रूहि" इति । होता हि विधिज्ञ एव भवति । नह्यविद्वान् विहितोऽस्तीति । विजानात्येवामुष्मिन्नवधाविदं मयानुष्ठानमिति । तदेतद्विज्ञातार्थस्य सतः संप्रेषणमनर्थकमेव भवति । यथैतदनर्थकमेवमन्येऽपि मन्त्रा इति ।

**अथापि**–अयमपरो हेतुर्मन्त्राणामानर्थक्ये । आह । कतम इति । उच्यते । अथाप्याह मन्त्रनिगमः **अदितिः सर्वमिति** । आह । किमुदाहरणम् । "**अदितिर्द्यौरदितिरन्तरिक्षम्**" इति । तदेतदुदाहरणमुपरिष्टादैकपदिके व्याख्यास्यामः । इह त्वेवमर्थमियमुदाहृता । कथं यैव द्यौः सान्तरिक्षम् । यैव माता स एव पुत्रः स एव च पितेत्येवमादि किमपि बहुत्र परस्परासंबद्धमुच्यते । तदर्थवत्त्वे सत्युपपादयितुमशक्यम् । तस्मादनर्थका मन्त्रा इति ।

**अथापि**–अयमपरो हेतुरानर्थक्ये मन्त्राणाम् । आह । कतम इति । उच्यते । **अविस्पष्टार्था** अपि हि केचिद् भवन्ति । तद्यथा । **अम्यग् यादृश्मिन् जारयायि काणुका** इत्येवमादयः । न ह्येषां विस्पष्टार्थता मन्त्रेषु शक्यते परिज्ञातुम् । न च केचिदर्थवन्तः केचिदनर्थका इति न्याय्यमभ्युपगन्तुमर्धवैशसं हि स्यात् । तस्मात् सर्व एवानर्थका इति । परिसमाप्तः पूर्वपक्षः ॥ १५ ॥

---

1 *m.* कथं for शत. 2. *a. d.* om. हि after लोके 3. *b1* om. उच्यन्ते । तथा चेमानि । तस्मादिमान्यप्यनर्थकानि । 5. *a. b d.* add इति after संप्रेष्यति, *m* विहित for विधिज्ञ. 6 *b* adds स before एव, *m* विहितो करोति for विहितोऽस्तीति; *m* °जानात्येवममुष्मि° 7. *b* विज्ञानार्थस्य, *b d* अनर्थमेव for अनर्थकमेव, *m* om. एव before भवति, *b d* यथैतद° for यदेतद° of *b1*, *m* °मनर्थेष्वे । 10. *b1.* om अथापि before आह, *m* om आह before किम् 11 *b1.* om ऐकपदिके after उपरिष्टात्. 13 *b1.* om च before पिता; *b d m.* बहुत्र, *b1.* बहुत्र, *a* च बहुच. 15. *m.* om उच्यते. 16. *a.* adds भवन्ति before अपि हि केचित्; *b1.* यादृश्मिन्. 17 *m* om इति after काणुका, *b d m.* एतेषां for एषां of *b1* 18 *a* om. न्याय्यमभ्युपगन्तु to एवानर्थका इति, *b1* अर्द्धविशस for अर्धवैशस 19. *d.* समाप्तः for परिसमाप्तः.

---

5. For the quot. *vide* S'B. I iii 2. 3.
10. For the quot. see RS I 89. 10.
11. व्याख्यास्यामः i. e in Nir. IV. 23.

अर्थवन्तः शब्दसामान्यात्। "एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदति" इति च ब्राह्मणम्। "क्रीळन्तौ पुत्रैर्नप्तृभिः" इति। यथो एतन्नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतद्यथेन्द्राग्नी पितापुत्राविति। यथो एतद्ब्राह्मणेन रूपसंपन्ना विधीयन्त इत्युदितानुवादः स भवति। यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत। यथो एतद्विप्रतिषिद्धार्था भवन्तीति लौकिकेष्वप्येतद्यथासपत्नोयं ब्राह्मणोनमित्रो राजेति। यथो एतज्जानन्तं संप्रेष्यतीति जानन्तमभिवादयते जानते मधुपर्कं प्राहेति। यथो एतददितिः सर्वमिति लौकिकेष्वप्येतद्यथा सर्वरसा अनुप्राप्ताः पानीयमिति। यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति। यथा जानपदीषु विद्यातः पुरुषविशेषो भवति पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति ॥ १६ ॥

स्वपक्षमिदानीं स्थापयिष्यामः। तदर्थमिदमारभ्यते। अर्थवन्तः शब्दसामान्यादिति। अर्थवन्त एव मन्त्रा इति प्रतिज्ञा। हेतुरुच्यते। शब्दसामान्यादिति। समान एव हि शब्दो लोके मन्त्रेषु च। तद्यथा य एव गोशब्दो लोके स्वरसंस्कारयुक्तः स एव मन्त्रेष्वपि। तत्रैवं सति स एवार्थवान् लोके स एव चानर्थको मन्त्रेष्विति विशेषहेतुर्नास्ति। असति च विशेषहेतावर्थवन्त एव मन्त्राः शब्दसामान्या-

2. After ब्राह्मणम् Bi concludes Pâ 3 Kh 1, A. concludes Pâ 3 Kh 5. 8. A. C. D. R. read प्राहेति, bı प्राह. 13. After भवति A concludes sect. 6 and concludes पाद as इति प्रथमाध्यायस्य तृतीयः पादः।. Bi concludes sect [illegible] and the pâda as प्रथमाध्यायस्य पञ्चमः पाद. 14 b. m स्वपक्षमिदानीं for स्वपक्षमिदानं of Bı. 16. a b d m मन्त्रेषु for मन्त्रे of Bı, and तद्यथा for तथा च of Bı.; after तद्यथा b. reads य एव गोशब्दो लोके मन्त्रेषु च। तद्यथा। य एव गोशब्दो &c. ( probably a mistake of copy ), a. d. °संस्कारसंयुक्तः. 17. b. स एव चानर्थका।

दित्युपपद्यते । यत्पुनरेतदुक्तं । प्रयोगानियमाल्लोकेऽर्थवत्त्वं प्रयोगनियमाच्च मन्त्राणामानर्थक्यमिति प्रतिवक्ष्याम एतत् । लोकेऽपि हि प्रयोगनियमो दृष्टस्तद्यथा । पितापुत्राविति ।

किं चान्यत् । एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत् कर्म क्रियमाणमृ-
5 ग्यजुर्वाभिवदतीति च ब्राह्मणम् । एतदेव हि यज्ञकर्मणः समृद्धम् । तत् किमित्युच्यते । यद्रूपसमृद्धं मन्त्रलिङ्गैरभिधीयते तदेव हि समस्तऋद्धया युक्तं भवति नेतरत् । एतदेव पुनरपि स्पष्टीकरोति । यत् कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणमिति । शब्दसामान्याद्ब्राह्मणप्रामाण्याच्चेति चशब्दः । ब्राह्मणमपि च मन्त्राणामर्थवत्त्वमेव दर्शयति । अनर्थका हि सन्तः कथं कर्माभिवदेयुः । कथं वानभिवदन्तः समर्धयेयुः
10 अर्थवत्वं चाभ्युपगतं भवता ब्राह्मणस्याथापि ब्राह्मणेन रूपसंपन्ना विधीयन्त इत्यत्र । ब्राह्मणेन सिद्धमेवार्थवत्त्वमुक्तं मन्त्राणाम् । तदेतदुपदर्शितमस्माभिस्तस्मादर्थवन्त एव मन्त्रा इति ।

किं पुनः समृद्धरूपत्वे मन्त्राणामुदाहरणम् । उच्यते । क्रीळन्ताविति ।

" इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् ।

15 क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ "

सूर्याया आर्षम् । विवाहे विनियुक्ता । अनुष्टुप् । इहैव स्तं-भवतं युवां स्वे गृहे मोदमानौ-हृष्यमाणौ मा वि यौष्टम्-मा च वियुज्येथाम् । विश्वं सर्वमायुर्व्यश्नुतं क्रीळन्तौ पुत्रैर्नप्तृभिः-पौत्रैश्च सहेत्याशीः ।

---

1. *b d.* यत्पुनरेतदुक्त, *b₁* तत्पुनरेतदुक्तं॰ 2 *b₁* add तत् before प्रतिवक्ष्याम. 3. *a* यज्ञस्य कर्मणः; *d* समृद्ध तत्किमिति 6 *b* om. यद्रूपसमृद्ध. *b m* om. मन्त्रलिङ्गैरभिधीयते, *b* समृद्धऋध्या, *m* समस्तऋध्या for समस्तऋद्धया of *b₁*, *a*, *d*. समस्तऋद्धया। 8. *b₁* एवं for एव after अर्थवत्त्व [illegible] *b.* *m.* मन्त्रा. for मन्त; [illegible] कर्म वदेयुः, *m.* कर्मणि वदेयु॰; *a d. m* कथं चानभि॰ for वानभि॰. 10. *b₁* अर्थवाच चाभ्यु॰ for अर्थवत्तं चाभ्यु॰; *m* भगवता, *a. d.* भवतो 11. *a d.* सिद्धमेवार्थवत्त्व, *m* ब्राह्मणसिद्धमेव. 13 *m. d.* add आह before किं पुन 17. *a* वियुज्यतम्, *d* वियुज्येताम्. *b₁* वियुज्येताम्, वियुज्येथाम् is printed above to be in agreement with the subject युवां. *m* om. विश्वं. 18. *a. b d* add च after पुत्रैः; *a. b d m* om. नप्तृभि॰.

---

3. For एतद्वै etc vide AB. III 3 or 5. In both these places यजुर्वा does not occur in the original.

14. The quot. is RS. X. 85. 42.

स्यादितिनर्थवत्त्वं मन्त्राणामधुना परपक्षे हेतवो निराकर्तव्यास्तदर्थमिदमाह **यथो एतदिति**। यत्पुनरेतदुक्तं **नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति** अत्र ब्रूमः। **लौकिकेष्वपि** ह्यर्थवत्सु शब्देषु नियतवाचोयुक्तित्वं नियतानुपूर्वीत्वं च दृष्टमेव। तद्यथा। **इन्द्राग्नी इति पितापुत्राविति च**। तत्र यदुक्तं नियतवाचो-युक्तित्वान्नियतानुपूर्व्याच्चानर्थका मन्त्रा इत्येतदयुक्तम्। लौकिकेष्वपि हि नियतप्रयोगाः 5
सन्तः शब्दाः केचिदर्थवन्तो दृष्टा यथेन्द्राग्नी पितापुत्राविति। स एष प्रयोगनियमाद-नर्थका मन्त्रा इत्यनैकान्तिको हेतुः। तस्मादर्थवन्त एवेति।

**यथो एतत् यत् पुनरेतदुक्तं ब्राह्मणेन रूपसंपन्ना विधीयन्त** इत्यत्र ब्रूमः। **उदितानुवादः स भवति**। नासमर्था आत्मानमेते स्वेन रूपेण विधातु-मिच्छन्तो ब्राह्मणेन विधीयन्ते। किं तर्हि। आत्मनियोगाश्रयमुक्तमेव सन्तं मन्त्रेणार्थं ब्राह्म- 10
णमनुवक्ति विस्तरेण प्रकृतार्थसन्तुष्ट्या। न ह्यनुक्तं स्तोतुं शक्यते सोऽयमेवमुदितानुवाद एव भवति। उक्तानुवाद इत्यर्थः। अपि चानेकेऽपि समानलिङ्गाः प्रकरणे मन्त्रा भवन्ति। ते अहंपूर्विकयैकं प्रयोगं प्रति खले कपोतवत् संनिपतन्ति। तेषां समुच्चये विकल्पे च प्राप्ते सत्यभिमत एको नियमार्थं ब्राह्मणेन विधीयते। एवमुभयोरर्थवत्त्वं मन्त्रब्राह्मणयोः। तत्र यदुक्तं रूपसंपन्नविधानान्मन्त्रानर्थक्यं मन्त्रार्थवत्त्वे वा ब्राह्मणा- 15
नर्थक्यमित्येतदयुक्तम्। तस्मादुभयमर्थवत् मन्त्राश्च ब्राह्मणं चेति।

**यथो एतत्-यत् पुनरेतदुक्तम्। ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीः** इत्याद्योऽनुपपन्नार्था इत्यत्र ब्रूमः। ओषध्यधिदैवमुच्यते हे ओषधे त्रायस्वैनम्। त्वत्पूर्वको ह्येष कृत्तश्छिद्यमानः सम्यक् छिन्नो भविष्यति ततश्च यज्ञे विनियुक्तः प्रतिविशिष्टमुत्कर्षमेतस्मात्स्थावरत्वात् प्राप्स्यत इत्येतत्प्रागनभिप्रेत्योक्तमोषधे 20

---

1. *b. d.* परपक्षहेतवो. 3. *a. b d* नियतानुपूर्वत्वं च, *b.* °पूर्वत्वं च, *m* om. it. 4. *bi.* एवमदा for तद्यथा and om इति after इन्द्राग्नी; *m.* °वाचोयुक्त्वात्. 6. *m.* °म एव for स एष. 8 *a. b d m.* om. यथो एतत्; *a d* om. इति before अत्र. 9. *b. d.* ▪ नासमर्थो, *bi.* न समर्थ, *a* नासमर्थाः; *a b. d* एते, *bi* एव, *m.* एते. 10. *bi.* विधीयते. 11. *m* सन्तुष्टविषया; *b.* सोयमेवमुदिता°. 12. *a. d* प्रकरणमन्त्रा. 13. *m* एव for एक; *bi* सम्पतन्ति for संनिपतन्ति of *a. b d m.* 14. *m.* विधीयते. 15. *m* om. वा. 16 *a. d* इत्येतदुक्तं for इत्येतदयुक्तं. 17. *a. b. d. m.* om. यथो एतत् 18. *a. d* इत्येवमादयो for इत्यादयोः *bi.* भवन्ति for इति. 20. *a. b.* विनियुक्ता; *bi.* एतस्याः for एतस्मात् of all our Mss; *b. d. m.* add अत्र before प्राग.

" मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः ।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः " ॥

इति । तथापि स्वल्पसत्त्वं दृष्ट्वा केचिदेवं वक्तारो भवन्त्यसत्त्वोयं ब्राह्मण इति । एवमेव कस्मिंश्चिदनिभृद्धे भृशं शातिते मेघेन्द्रेयामसारतामभिप्रेत्येदमुक्तं स्यात् अशत्रुरिन्द्र जज्ञिषे यस्त्वनेनैवमनिभृद्धमहर्नाहमिति । यत् पुनरेतदुक्तं **शतं सेना अजयदिति** अत्र ब्रूमः । कुतो हि सेना या इन्द्रो जेष्यति । न हि देवानां शत्रवः सन्ति ये जेतव्या इति । किं कारणम् । विभवो देवा वशिनोऽधिकरणधर्माणश्च परेण महिम्ना युक्ताः । आह । कथं तर्हि शतं सेना अजयदित्येतदुक्तम् । उच्यते । रूपकत्वनयैवैषा युद्धप्रवादा स्तुतिः । वक्ष्यति च ' अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति ' इति । तदेतद् भवता न सम्यग् दृश्यते सम्यगन्विष्यतो देवतातत्त्वं नैरुक्तेभ्यस्ततो मन्त्रार्थानविरोधेन सम्यगवभोत्स्यसे । नैव-मनाश्रयतस्त्वहेन मन्त्रार्थोऽवगाहितुं शक्यः । गम्भीरपदार्थो हि वेदः कथमवभोत्स्यते । वेदार्थावबोधविभ्रान्ता एव हि प्रवादिनः स्वबुद्धिलाघवमाविर्भावयन्तो ब्राह्मणाः सन्तः सर्ववर्णसाधारणानि दर्शनान्तराणि प्रतिपेदिरे । यदुक्तं विप्रतिषिद्धार्थत्वादनर्थका मन्त्रा इति एतदयुक्तम् । न हीमे विप्रतिषिद्धार्थाः । भवत एव मतिविभ्रमो मन्दशिक्षित-त्वात् । तस्मादर्थवन्त एव मन्त्रा इति ।

**यथो एतत्–यदुक्तं जानन्तं संप्रेष्यतीति** अत्र ब्रूमः । लौकिके-ष्वप्यर्थवत्सु शब्देष्वेतदेव स्वाभाव्यं दृष्टम् । तद्यथा **जानन्तं गुरुमभिवादयते**

---

2 m. कस्याइन्ने 3. m. स्वल्पं सत्त्वं, *b.* स्वल्पसत्त्वं and असत्त्वत्रो. 4. *a. d.* मघानिने, m. संशातिते, *b.* शातिते for शातिते cf *b₁*; m. om. पुनः *a. d.* add हि after मेघे, and read एतत् for इदम्. 5. *b₁*. स्वा for स्व after य. 7. *m.* विनः for वशिन०, *b₁* अधिकरणधर्मांश्च 9 *b₁* युद्धप्रवादान स्तुति 10 m. तदेव तत् for तदेतत्. 11. *b₁* देवतातत्त्वं for देवतातत्त्व 12 *d. b₁* विगाहितुं for अवगाहितुं. m. गम्भीरपदार्थे for °दार्थो. *a. d* add कथमवभोत्स्यते after वेदः, *b. m.* अवभोत्स्यसे for °ते 13. *b₁* वेदार्थविवादविभ्रान्ताः *a. d* एव for एव. 15. m. omits from एतदयुक्तं to मन्त्रा इति l. 16, *a. d.* एव for एव. 16. *a.* तस्मादन-र्थवन्त? 17. *a b. d m.* om. यथो एतत्; *a. d.* adds एतत् after पुनः 18. *b₁*. om. अपि after लौकिकेषु, and तद्यथा after दृष्टम्

---

9. वक्ष्यति i. e. in Nir. II. 16.

तदेवं सति **पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति** इति । य एते पारोवर्यविदो ब्राह्मणाः पारोवर्येण विजानन्त्याचार्यपरंपरया ते पारोवर्यविदो न साक्षात्कृतधर्माण इत्यभिप्रायः । तेषां किम् । तेषां य एव भूयोविद्यो भवति बहुश्रुतः कश्चित्स एव प्रशस्यते । स एव मन्त्रार्थविज्ञाता प्रशस्यो भवति नेतरो मन्दबुद्धिरशिक्षितः । स हि बहुश्रुतो बहुदृष्टत्वादनेकविषये मन्त्रार्थे न क्वचित्प्रतिहन्यते न हि तस्याविस्पष्टार्थो नाम कश्चिदस्ति । तस्माद्धेतोः स त्वं बहु शृणु ततः सम्यगवभोत्स्यसे मन्त्रार्थान् । तत्र यदवोचोऽविस्पष्टार्था मन्त्रा न हि तेऽविस्पष्टार्थास्तानेवोपरिष्टात् स्वीकृत्य व्याख्यास्यामहे । तवैव मतिं भ्रमयति संमोहः । तस्मादर्थवन्त एव मन्त्रा इति सिद्धम् । तस्माच्चैतदपि शास्त्रं मन्त्रार्थप्रत्ययायारभ्यमाणमर्थवदेव भवतीति सिद्धः शास्त्रारम्भः । तत्र यदुक्तं 'यदि मन्त्रार्थप्रत्ययायानर्थकं भवति' इत्येतदयुक्तम् । इति प्रसिद्धेषु परस्य हेतुषु स्वपक्षसिद्धावुदिते च कारणेऽवस्थिता मन्त्रगणस्य सार्थता । तदर्थमेतत् खलु शास्त्रमर्थवदिति ॥ १६ ॥

अथापीदमन्तरेण पदविभागो न विद्यते ।

"अवसाय पद्वते रुद्र मृळ"

इति । पद्वदवसं गावः पथ्यदनमवतेर्गत्यर्थस्यासो नामकरणस्तस्मान्नावगृह्णन्ति । "अवसायाश्वान्" इति स्यतिरुपसृष्टो विमोचने तस्मादवगृह्णन्ति ।

"दूतो निर्ऋत्या इदमाजगाम"

इति पञ्चम्यर्थप्रेक्षा वा षष्ठ्यर्थप्रेक्षा वाऽःकारान्तम् ।

"परो निर्ऋत्या आचक्ष्व"

इति चतुर्थ्यर्थप्रेक्षैकारान्तम् । परः संनिकर्षः संहिता । पदप्रकृतिः संहिता । पदप्रकृतीनि सर्वचरणानां पार्षदानि ।

अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति तदेतेनोपेक्षितव्यं ते ब्रूयुर्लिङ्गज्ञा अत्र स्म इति ।

---

2. *m.* om. य एते; *a.* परोवर्यं for पारोवर्यं everywhere; *a. b d* विजानते for विजानन्ति. 3. *a. d.* om. तेषां before किं. 4 *bi* कश्चित् for कश्चित्; *bi.* य for स after प्रशस्यते; *m. bi.* मन्त्रार्थविज्ञाना for °विज्ञाता; *m* नेतरा इतबुद्धि°. 5. *a. d.* प्रतिहिंस्यते for प्रतिहन्यते. 8. *Bi* प्रमयति for भ्रमयति, *m. d.* विभ्रमयति; *a. d.* स मोहः for संमोहः. 10. *m.* om. यदि. 11. *a.* परस्पर for परस्य; *bi.* उदिते for उदिते of *a. d. m.* 15. A. B. C. D. R. °र्थस्यासो, Bi. °र्थस्यासो.

"इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति"

इति वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रे ।

"अग्निरिव मन्यो त्विषितः सहस्व"

इति तथाग्निर्मान्यवे मन्त्रे । त्विषितो ज्वलितस्त्विषिरित्यप्यस्य
5 दीप्तिनाम भवति ।

अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च ॥ १७ ॥

**अथापीदमन्तरेण पदविभागो न विद्यते ।** शास्त्रारम्भप्रयोजनाधिकारे वर्तमाने अथापीदमन्तरेण मन्त्रेष्वर्थावधारणं नास्तीत्युक्ते यदि मन्त्रेत्यादिनानर्थक्यहेतुभिर्बहुभिरानर्थक्य उपपादिते निरुक्तशास्त्रस्य कौत्सेन मन्त्राणामर्थवत्तां स्थापयित्वा पर-
10 पक्षहेतवः प्रत्युक्ताः । तेषु स्थितमर्थवत्त्वं मन्त्राणाम् । तेषामर्थनिर्वचनायेदमारभ्यमाणमर्थवदित्युपपन्नमर्थवत्त्वं निरुक्तशास्त्रस्य । तदेतत्सर्वमपि चोदकशास्त्रकारव्याजेन प्रसक्तानुप्रसक्तमुक्तं प्रज्ञाया विवृद्धये शिष्यस्य । कथं नामासौ विवृद्धप्रज्ञः शब्दार्थन्यायसंकटेषु हेतुसमयानभिज्ञः परैः प्रतिबध्यमानोपि पदार्थान्वाक्यार्थांश्चासंमोहेन निर्ब्रूयादिति । एवं तावदेतदन्तरेण मन्त्रार्थप्रत्ययो नास्ति । अथेदमपरमारम्भप्रयोजनमित्येवं
15 विशेषाधिकारार्थोयमथशब्दः । अपि मन्त्रार्थप्रत्यय इदमन्तरेण नास्ति नाप्यस्ति यदिदं वक्ष्यमाणमित्यपिशब्द एवं संभावने ।

आह । किं पुनस्तद्वक्ष्यमाणमिति । उच्यते । **पदविभागः ।** एवं पदानि वक्तव्यानीत्येतत्पदविभागपरिज्ञानं नास्तीत्यर्थः । किं कारणम् । अर्थवशेन हि पदान्यवतिष्ठन्ते न चेदमन्तरेणार्थपरिज्ञानमस्ति । तस्मादत एव पदविभागप्रसिद्धिरिति । इदमर्थ-
20 वत्त्वं मन्त्राणामन्तरेण पदविभागोप्यकिंचित्करः । प्रसिद्धश्चैव सर्वशाखासु । तस्मात्पदविभागार्थवत्त्वाय चार्थवन्तो मन्त्रा इति केचिद्वर्णयन्ति ।

एवं प्रतिज्ञाय समानसंहितेषु ग्रन्थेष्वर्थहेतुकं पदविभागविशेषं दर्शयति । तद्यथा ।
**अवसाय पद्वते रुद्र मृळेति** । पद्वत्—पादवत्—पादसंयुक्तम् । **अवसं गावः पथ्य-**

---

3. A reads सहस्वेत्यथाग्निर्मान्यवे. 5 B. C. D. R. read दीप्तिनाम for दीप्तिर्नाम of Bi. and A. 6. A concludes Pā. 1, and B1 Pā. 6. Kh. 1 after अज्ञाननिन्दा च. 7. *Bi.* अपीदं for अथापीदं. 12 *m.* प्रज्ञया for प्रज्ञाया; *Bi.* कथ नामा सा for नामासौ of *a b d m*; *a d* अविवृद्धप्रज्ञः. *Bi* विवृद्धप्रज्ञा; *a* शब्दार्थेष्वायसंकटेषु for °र्थन्यायसं°; *Bi* °संकरेषु 13. *m* प्रतिबुध्यमानोपि, वाक्यार्थांश्च संमोहेन ? 15. [illegible] om. अथ and reads अयं शब्दः. 16. *a* एव प्रमाणे. *b. d* एव प्रमावने for एव संभावने of *Bi. m.* 18. *a b d.* पदविभागपरिज्ञानं for विभागपरि° of *Bi.* 19. *m.* पदविभागसिद्धिः. 23. *a.* पद्वत् for पादवत्; *a. d. b. m.* अवस पथ्यदनं; *Bi.* गावं for गावः.

दनम् इति निगमप्रसक्तस्य पर्यायवचनम् । अवतेर्गत्यर्थस्यासो नामकरणः प्रत्ययः । तस्मात्–असमासत्वादस्य नावगृह्णन्ति एतत्पदकारा इति शेषः ।

" मयोभूर्वातो अभिवातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् ।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृळ ॥ "

शबरो नाम काक्षीवत ऋषिः । त्रिष्टुप् छन्दः । पूर्वैस्त्रिभिः पादैर्गवामाशिषमाशास्योत्तमेन तासामेव रुद्रात्सुखमयाचत । गवामुपस्थाने विनियुक्ता । मयोभूः–मयोभावयिता–पाल्यो वात एना उस्रा अभिवातु–आभिमुख्येन वातु । किं च तेन सुखसुवा वातेनानुद्वेजनीयेन स्पृश्यमाना ऊर्जस्वतीः–प्रभूतरसा ओषधीरारिशन्ताम्–आस्वादयन्तु । आस्वाद्यास्वाद्य च सत्त्वगम्यात्मात्माभिप्रेते काले उदकं पिबन्तु । तत्र पीतमोषधिमहितमासां तया कोष्ठे विपच्यमानं रसशोणितमांसमेदोमज्जास्थिक्रमेण यथैनाः पीवस्वन्त्यो भवेयुः । पीवस्वतीः–पीवगुणयुक्ताः–स्थूला–बलवत्यो–बहुपयस्काः । सति च बहुपयस्त्वे जीवधन्या–जीवधनिन्यो रोगदुष्टमातृकाः( ? ) । हे रुद्र वयमेनासां गवामेनामाशिषमाशास्महे । त्वमप्यस्मै गोलक्षणाय अवसाय पादयुक्ताय मृळ सुखो भव । मैना हिंसीस्त्वमासामीश्वर इत्यभिप्रायः ।

**अवसायाश्वानिति** । इदमपरमुदाहरणम् । अस्मिन्पूर्वेण रूपेण सरूपमेव पदमर्थकृतात् विशेषादवगृह्णन्ति । द्वयोः पदयोर्बहूनां वा यदविच्छेदेनोच्चारणं स समासः ।

---

1. *m.* पर्यायवचनं; *m.* नामकरणे प्रत्ययः for °करणः प्रत्ययः. 2. *m.* पदविभाग for पदकारा, and adds ऋक् after शेषः. 5. *bi.* शुबरो, *a. b.* शुमरा, *d.* शुमरो, *m.* शबलो, we read शबरो on the authority of Sāyana and the Anukramaṇī; *bi* गौतम· ■ मयोभूरित्यस्याश्विप्रमः for काक्षीवत ऋषिः । त्रिष्टुप् छन्दः । of *m.* supported by Sāyaṇa. 6. *bi.* adds च after तासामेव. *m* विनियोगः for विनियुक्ता 8 *d.* पातेन for वातेन; *m.* अशोषधीः ( ? ) for ओषधी . 9. *m.* आस्वाद्यास्वाद्य सत्त्वगत्यादमात्माभिप्रेतकाले 10. *a.* om. पीवस्वन्त्यो भवेयुः । पीवस्वती. पीवगुणयुक्ता·, *d.* also om. it except the last word, *b. m.* om. पीवस्वतीः 11. *m.* om. च after सति. 12. *m.* reads जीवधन्याः for जीवधन्या·; *bi.* रोगदुष्टमातृकाः, *b.* रोगदुष्टपाभृका·, *d.* रोमदुष्टमातृका·, *m.* रोगदुष्टपातृकाः, none is intelligible; *m* वयशो ( ? ) for वयम्. 13. *bi* adds पद्वते before अवसाय; *m.* reads अवशाय ( ? ), *bi.* पथ्यद्वनाय for पादयुक्ताय, *a. d.* add पद्वते before पादयुक्ताय; *a. b. d.* मै for मैना of *bi*. 14. *m.* ईश्वरमित्यभिप्रायः 16. *bi* अवगृह्णाति for अवगृ· *b. m.* पदावच्छेदेन, *bi.* पदविच्छेदेन, *a. d.* पदविच्छेदेन.

---

5. This is RS. X. 169. 1. पीत and not प्रचेता
12. Is it to be separated as जीवधनिन्य· अरोगदु

तयोरेवार्थविभागोपप्रदर्शनार्थमवच्छेदेन ग्रहणमवग्रहः । तदेतदवगृह्यते पदम् । स्यति-धातुर्विमोचनेऽर्थे वर्तते । स पुनरुपसृष्ट उपसर्गेणावेत्यनेनोपसृष्टः संयुक्त इत्यर्थः । यतो धातूपसर्गविभागोपप्रदर्शनार्थमेव तत्पदमवगृह्यते अवऽसाय इत्येतत् ।

" योनिष्ट इन्द्र निषदे अकारि तमा निषीद स्वानो नार्वा ।

5 विमुच्या वयोऽवसायाश्वान्दोषा वस्तोर्वहीयसः प्रपित्वे ॥ "

एतया त्रिष्टुभा कुत्स आङ्गिरस इन्द्रं तुष्टाव । योनिष्टे । हे इन्द्र । योनिः-वेद्याख्य-स्थानं ते-तव निषदे-निषदनाय-उपवेशनाय यदिदं मया अकारि-कृतं तं योनिं-तत्स्था-नम् आ निषीद-एत्य निश्चयेन सीद । कथं पुनर्निषीद । स्वानो न-स्वन्यमान इव अर्वा-अश्वः । संशब्द्यमान इवाश्वबन्धने यथा स्वे स्थाने निषीदत्येवं मया स्वमुपशब्द्यमानः 10 स्तुतिभिरेतस्मिन्मया संस्कृते स्वास्तीर्णबर्हिषि स्थाने निषीद । कथं पुनर्निषीद । विमुच्यै-तान् वयोऽश्वान् । कुतः । रथात् । पुनरपि चैतानवसाय-वियोज्य रश्मिभ्योऽश्वान् स्वस्थो-दकयवसान्कृत्वा दोषावस्तोर्वहीयसः-अहनि च रात्रौ च ये केचिद्वहन्ति तेभ्योऽपि वहीयसः-शीघ्रतरेण जवेन वोढॄनमास्तलस्त्वं स्वस्थो भूत्वा निषीद । एतस्मिन् योनौ-एतस्मिन्संस्कृते बर्हिषि प्रपित्वे-प्राप्ते अस्माकं स्वयजनकाले मा नो विघ्नं कार्षीरित्य-15 भिप्रायः । एवं तावदिदमवगृह्यमिदमनवगृह्यमित्यर्थपरिज्ञानद्वारेण तस्मादेतन्निरुक्ता-ध्यादिज्ञायते ।

1. *m* तस्य ■ वार्थ॰ for तयोरेवार्थ॰, *bs*. विभागोपदर्शनार्थ, *d* अविभागोप॰, *a* प्रवि-भागोप॰ for विभागोपप्रदर्शनार्थ of *m*. *b* 2. *bi* दातः for धातु, *a*. *d*. स्यतिधातु. 3. *bs* अवगृह्येत for ॰गृह्यते 6 All the Mss. om. योनि. after इन्द्र. 7. *m*. वेद्याकपरस्थान for स्थान of *bs*; *m* om यदिदं; *d* om निषदे, *a* reads निषदने for निषदे *b*. om. ते; *b* adds उपवेशनाय before मया. *bs*. om. उपवेशनाय यदिदं 9 *m*. संशप्यमान for संशब्द्यमान; *m*. अश्वबन्धने यथा &c for अश्वबन्धनाश्च स यथा &c. of *a*. ■ *d* *bs*; *m*. निषीदति for निषीदेत् of *bs*; *a*. *d* त्वमुपशब्द्यमान, *m*. त्वमुपशब्द्यमानः for त्वमपि शब्द्यमान of *bs*, *b* त्वमनुशस्यमानस्तुतिभि 10. *m*. स्वास्तीर्णबर्हिषि for स्वास्तीर्णे बर्हिषि. 11. *m*. पतावेव: for एतान् वयः; *m* विमुच्य for वियोज्य. 13 *a* after *bs*. कः शीघ्रतरेण for शीघ्रतमेन of *bs*.; *d*. जीवेन, *m*. नवेन for जवेन of others. शब्दार्थेनाध्ययन॰ for त्वदजस्र॰. 15. *m*. एतस्मात् for तस्मात्
समोहेन ।
*d*. एवं प्रमायते for एव ......
विभागपरि॰ of *bs*. 13. *m* 104. 1.
*d*. *b*. *m*. अवस पश्यदने; *bs*. मा

परो निर्ऋत्या आचक्ष्वेति । एतस्मिन्पदे चतुर्थ्यर्थप्रेक्षा–चतुर्थ्यर्थदर्शनम् । अत एतत् पदमैकारान्तम् ।

" अपेहि मनसस्पतेऽप क्राम परश्चर ।

परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः ॥ "

5 प्रचेता नामाङ्गिरस एतामनुष्टुभमपश्यत् । दुःस्वप्नदर्शने विनियुक्ता । मन इति विज्ञानमुच्यते बुद्ध्यादि तस्य पतिर्मनसस्पतिरात्मा इह पुनर्मृत्युर्व्याधिर्वा मनसस्पतिः । उभावपि स्वकृतकर्मापेक्षया प्राणिनां बुद्ध्यादिविज्ञानोपसंहारस्येशाते । तयोरन्यतरः संबोध्यते । हे मनसस्पते । अपेहि–अपगच्छास्मत्तः । मा च त्वमीषदपगम्यास्मत्तः समीप एव स्था अस्माकम् । किं तर्हि । अपक्राम–दूरमपेत्य क्राम । अपक्रम्य च परः–परतः–

10 अन्यतोऽस्मत्तः चर–अपुनरावर्तमानोऽस्मान् प्रति । किं च परः–परागत्य यस्यास्त्वं दूतो निर्ऋत्यास्तस्यै निर्ऋत्या आचक्ष्व । किमिति । बहुधा जीवतो मम मनः । अथवा परः –प्रकृष्ट आप्तस्त्वं तस्या निर्ऋत्या दूतो मां प्राप्तः अविज्ञातमरणकाल एवातिसंमोहाद्दतो ब्रवीमि । तस्यै निर्ऋत्यै गत्वा बहुधा अनेकप्रकारमाचक्ष्व–कथय । जीवतो यादृशं मनो भवति तादृशं मम मनो बुद्ध्यादिकरणज्ञानं दिनकरकिरणस्पष्टवृत्ति न तावत्संमुमूर्षु-

15 रित्येतदाचक्ष्व । मुमूर्षोर्हि उपक्षीणकर्मणो नातिस्पष्टा इन्द्रियवृत्तयो भवन्ति न च मम तथेत्यभिप्रायः । एवं समानसंहितानामपि पदानामर्थभेदकृतं विभागवैलक्षण्यम् । स चार्थं इदमन्तरेण न विज्ञायते । अत इदमुक्तम् ' अथापीदमन्तरेण पदविभागो न विद्यते ' इति ।

---

1 a d m. om. चतुर्थ्यर्थप्रेक्षा 2. m om अत. 5 a d. om. नाम, m. एतामनुष्टुभ् for एतामनुष्टुभमपश्यत् ; d m. मन इति हि विज्ञानं &c. 6. b1. बुद्ध्यादि for बुद्ध्यादि of a. b d m.; ■ d. पति for पतिः. 7. b1 m. विज्ञानोपसंहारस्य, a. [illegible] for अन्यतरः. 8. b1 अपगच्छ । अस्मत्तो गत्वा च त्व°. 9. b1. adds [illegible] m अपेति for अपेत्य, a. क्राम. for क्राम. 10. a. b. d m [illegible] of b1. 11 a b. d om. निर्ऋत्यै, d. तस्मै for तस्यै; b1 om [illegible] 12 ■ प्रकृष्टः for प्रकृष्ट of all others, b एव नित्यं for एवाति°, [illegible] b1. समोहतो 13. ■. तस्येव for तस्यै. 14. a b. बुद्ध्यादिकरणज्ञान, ■ बुद्ध्यादिकरणज्ञानदिनकर°, a b. ■ m. [illegible] स्पष्टवृत्तित्वेन तावत्, m. संमुमूर्षु for स मुमूर्षु of b1. 15 m. [illegible] for मुमूर्षो ; b1. उपक्षीणकर्मणा for °कर्मणो of a. b d. m. [illegible] चार्थ.

.द्वाकपदधान fo [illegible] b om ते, b a [illegible] सशयमान for सशा [illegible] b d. b1, m. निर्षा [illegible] for त्वमपि शब्दमानः [illegible] [illegible] स्तीर्णे बहिःषि, 11. [illegible] b1. न शीघ्रनरेण for शी [illegible] शब्दार्थेवावस्थन° for स्वदश [illegible] समोहेन ! d एवं प्रमावने for [illegible] विभागपरि° of b1. 19. m. 164. 1. d. b. m. प्रमवं पश्यदने, b1 [illegible] ginning of the section

पदविभागप्रसक्तमधुना संहितालक्षणमाह । **परः संनिकर्षः संहिता** इति । परः –प्रकृष्टो यः संनिकर्षः–संश्लेषः परस्परेण स्वराणां स्वराधिरूढानां च व्यञ्जनानां सा संहितेत्युच्यते । सा च पुनरियं **पदप्रकृतिः संहिता** । अत्र द्विधा वर्णयन्ति । पदानां या प्रकृतिः सेयं पदप्रकृतिः संहिता । किं कारणम् । संहितातो हि पदानि प्रक्रियन्ते तस्मात्संहितैव प्रकृतिः । विकारः पदानीत्येवमेके मन्यन्ते । अपरे पुनः पदप्रकृतिः 5 संहितेति पदानि प्रकृतिरस्याः सेयं पदप्रकृतिरिति । किं कारणम् । पदान्येव हि संहन्यमानानि संहिता भवति तस्मात् पदान्येव प्रकृतिः विकारः संहितेति ।

एवं च कृत्वा **पदप्रकृतीनि सर्वचरणानां पार्षदानि** । सर्वेषां चरणानां–सर्वशाखान्तराणामित्यर्थः । किम् । पार्षदानि । स्वचरणपर्षद्येव यैः प्रतिशाखानियतमेव पदावग्रहप्रगृह्याप्रगृह्यक्रमसंहितास्वरलक्षणमुच्यते तानीमानि **पार्षदानि**–प्रातिशाख्यानी- 10 त्यर्थः । आह किं तेषामिति । उच्यते । तानि पदप्रकृतीनि । पदं येषु संहितायाः प्रकृतित्वेन चिन्त्यते तानीमानि पदप्रकृतीनि । तेषामपि स एव समय इत्यभिप्रायः ।

आह । किं पुनरत्र साधीयः । पदानां प्रकृतित्वं संहिताया विकारत्वमुत वा विकारत्वं पदानां प्रकृतित्वं संहिताया इति । उच्यते । संहितायाः प्रकृतित्वं ज्यायः । आह । किं कारणम् । उच्यते । मन्त्रो ह्यभिव्यज्यमानः पूर्वमृषेर्मन्त्रदृशः संहितयैवाभिव्यज्यते 15 न पदैः । अतश्च संहितामेव पूर्वमध्यापयन्त्यनूचाना ब्राह्मणा अधीयते चाध्येतारः । अपि च यज्ञकर्मणि संहितयैव विनियुज्यन्ते मंत्रा न पदैः । यदि हि पदानि प्रकृतिरभविष्यन् संहिता पदैरेव मन्त्रोऽभिव्यज्येत पदान्येव च पूर्वमध्यापयिष्यन् ब्राह्मणा अध्येष्यन्त चाध्येतारः पदैरेव विन्ययोक्ष्यन्त मन्त्राः कर्मसु । न त्वेतत्सर्वमस्ति । तस्मादेतैर्विशेषणैः संहितैव प्रकृतिर्न पदानीति पश्यामः । समयमात्रमितरत्स्वशाखानियतमेव । 20

---

a. b. d m. om. च after °रूढानां, bi. °रूढाणां; m. adds च after व्यञ्जनानां
[illegible]द्विधा for द्विधा of a. b. d. m.  6. a. b. d. m. अस्याः for यस्याः of bi.;
[illegible]मानानि for संहन्यमानानि of the Mss.  7. b. d. add हि after पदान्येव
[illegible]शाखानुत्तराणां.  10 bi. पदावग्रहप्रगृह्यक्रम° for पदावग्रहप्रगृह्याप्रगृह्यक्रम°
[illegible]गृह्यं क्रम°; m. om. उच्यते.  13. m. अथवा for [illegible] वा  15. a.
[illegible]तयैव.  16. m. अधीयंते for अधीयते; bi. om. अपि च &c. to
[illegible]ad before पदैरेव by all our Mss.; a. b. read अध्येष्यन, d. अध्ये-
[illegible], we read the form corrected grammatically.

---

[illegible] of संहिता is the same as Pan. I. iv. 108.
[illegible]is'ākhya II. i.

मयमाग्नेयो मन्त्रः। स एष लिङ्गमात्रदर्शनेनाविज्ञातप्रधानदेवतो विनियुज्यमान ऐन्द्रे वायव्ये वा कर्मणि कर्तुरभिप्रेतफलसिद्धये नालं स्यात्। कर्मवैगुण्याच्च कर्तुरपध्वंसाय स्यात्। तस्माद् विज्ञेयं मन्त्रदेवतानिश्चयज्ञानाय निरुक्तमिति।

"अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि।

हत्वाय शत्रून् वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व॥"

इति। यथा पूर्वस्मिन्नाग्नेये वायुलिङ्गमिन्द्रलिङ्गं च तथैतस्मिन्नपि मान्यवे मन्त्रे अग्निः—अग्निलिङ्गं नैघण्टुकम्। एवमनेकदेवतालिङ्गसंकटेषु दुरवधारं देवतातत्त्वमनैरुक्तेनाप्रसिद्धमन्त्रव्याख्यानसमयेन। यदुक्तं लिङ्गज्ञातारो वयमत्र लिङ्गत एव मन्त्रान् कर्मसु *विनियोक्ष्यामहे न नो निरुक्तेन प्रयोजनमस्तीत्येतदयुक्तमिति।*

10 त्विषिरित्यप्यस्य दीप्तिनाम भवति अपठितमपि दीप्तिनामसु न केवलं यान्येव पठितानि अन्यान्यपीति।

अथापीदमपरमारम्भप्रयोजनमस्य। आह। किमिति। उच्यते। ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च ज्ञानं च प्रशस्यते अज्ञानं च निन्द्यते। तत्रैवं सति वयमनिन्द्याः स्याम प्रशस्याश्चेति ज्ञेयं निरुक्तम्। अतो हि अध्यात्माधिदैवताधियज्ञाभिधा-

15 यिनां मन्त्राणामर्थाः परिज्ञायन्ते ते च परिज्ञाताः सन्तः पुरुषस्योत्तमाय श्रेयसे भवन्ति। तदेवमखिलपुरुषार्थोपकारसमर्थं शास्त्रमिति न्याय्यमारब्धुम्॥ १७॥

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।

योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥

यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते।

20 अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥

स्थाणुस्तिष्ठतेरर्थोऽर्तेररणस्थो वा॥ १८॥

---

1. *bi* ऐन्द्रे for ऐन्द्रे 2. *bi* °फलसिद्धे for °फलसिद्धये. 7. *a. b. d. m.* om अग्निः. 8 *a.* °मंत्राख्यानसमयेन, *d* वयमत्रलिंगत एव। 9. *m.* नैरुक्तेन for निरुक्तेन. 10. *a* त्विषिरित्यस्य, *d. m.* om. भवति, *m* दीप्तिनाम. 13. *b. m.* वयं कथं नामानिन्द्या for वयमनिन्द्या .14. *bi.* स्यामः for स्याम, *a. d m.* परिज्ञेयं for ज्ञेयं, *m.* °धिदेवाधि° for °धिदैवताधि°. 16. *bi* m °पकारसमर्थयाथ°. 17. C. accents as न विजानाति 18. C. accents as ज्ञानविधूतपाप्मा 20 R. तु for तत्. 21. After अरणस्थो वा A. Bi. conclude *pâda* 6, sect. 2.

---

4 The quot. is RS. X. 84. 2.

क्व पुनर्ज्ञानं प्रशस्यतेऽज्ञानं च निन्द्यत इति । उच्यते । लोके शास्त्रे च । लोके तावद् यः कश्चिद्विद्वान्भवति स पूज्यते पुण्यफलैरभिजनैस्तदेतत्प्रत्यक्षत एव दृष्टम् । शास्त्रेऽपि स्थाणुरयं भारहारः इत्येवमादि । स्थाणुर्वृक्षः स यथा पत्रपुष्पफलानामात्मीयानां धारणमात्रेणैव संबध्यते । न तज्जैर्गन्धरसरूपस्पर्शोपभोगसुखैः । एवं च किलासावधीत्य वेदं न विजानाति योऽर्थम् । तस्य वेदस्याध्ययनं भारमा- 5
त्रमेव ह्यसौ बिभर्ति । योऽर्थज्ञ इत् सकलं भद्रमश्नुते । य एवार्थज्ञो भवति न प्रत्ययमात्राध्येता स एव सकलमनवखण्डितं भद्रमश्नुते अर्थपरिज्ञानफलमश्नुते–प्राप्नोति । किं पुनस्तत् । इह लोके पूज्यतामुपेत्य शिष्टनामितो लोकादन्तकाले नाकमेति यत्रा-

---

1. m. adds आह before क्व पुनः, m. वेदे for लोके, c. d. वेदे for शास्त्रे; m. adds अज्ञाननिन्दा ज्ञानप्रशंसा before शास्त्रे　　3. b1. इत्यादि for इत्येवमादि.　　5. d °ध्ययन भार° for °ध्ययनभार° of all others.　　7. m. अर्थस्यपरिज्ञान° for अर्थपरिज्ञान°.　　8. b1. किं पुनस्तत्र for किं पुनस्तत्, c. यथा for यत्र.

---

3. The text beginning with स्थाणुरयं is accented in almost all Mss. except one, viz. B. Both the Mss. of the text and also the commentary accent it, none of the Mss., however, completely agree in the actual accents; and as the tradition of the Brāhmaṇas does not favour the recitation of the verse with proper accents we have omitted all accents in the pratīkas here and below. We have printed the accents in the text above according to R. but it must be said that they are different from what we actually find in the Mss. We have given the variant of C. as a specimen. Properly speaking the text should not be accented at all. The accents printed in R. are grammatically correct, and hence are reproduced in our text above, but a difference, between the Mss. as here, is an indication of the accents being given to an apparently modern verse. The verses do not occur anywhere in the old Vedic texts and are referred to as Yāska's by some later writers. Durga's comment, however, indicates that it is a quotation from some old Smṛiti text, see below. All these verses are found in the *Saṁhitopanishad Brāhmaṇa* of the Sāmaveda, where they are introduced in the same way as here. There also they are not accented. That Brāhmaṇa text, however, does not appear from its language to be a production belonging to the age of the *Brāhmaṇa* literature.

सुखं किंचिदपि नास्त्याध्यात्मिकमाधिदैविकमाधिभौतिकं वा तत् स्थानमेति निरति-शयम् । कस्मात् पुनरसावीदृशं स्थानमेतीति । इतः । यस्मादसौ **ज्ञानविधूतपाप्मा।** ये हि नाकगमनप्रतिबन्धिनः पाप्मानस्ते तस्य ज्ञानेन विधूताः । अतोसावेति नाकम् । उक्तं चान्यत्रापि " न हि ज्ञानेन सदृशं पवित्रमिह विद्यते " इति ।

5 अथवा स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ॥ स यथा चन्दनभारं वहत्येव तदुपभोगैर्नाभिसंबध्यते एवं किंस्विदसौ यो ग्रन्थमात्राध्येता नार्थज्ञः । एवं तावदस्मिञ्ज्ञानं प्रशस्तम् ।

अथैतस्मिन्नज्ञानं निन्द्यते । यद् गृहीतमविज्ञातम् इति । यद् गृहीतं गुरुमुखाद-विज्ञातं चार्थतः । किं च **निगदेनैव शब्द्यते**-निगदमात्रेणैव नित्यकालं शब्द्यते-उच्चार्यते न पुनरर्थतो विचार्यते । आह । किं तस्य । उच्यते । **अनग्नाविव शुष्कैधो न**

10 **तज्ज्वलति कर्हिचित्** । शुष्कं काष्ठमनग्नौ प्रदेशे नालं ज्वलनाय-प्रकाशाय । एवं यो वेदार्थस्यानभिज्ञोध्येता स वेदाध्ययनभारमात्रेणैव संबध्यते न तु तदीयेन फलेन । परिज्ञानं तु श्रेयसा चाभ्युदयेन च युनक्तीति । तस्मादेतत्परिज्ञानाय अवश्यं निरुक्तशास्त्रमा-रब्धव्यमिति ।

स्थाणुशब्दमर्थशब्दं च उदाहरणप्रसक्तौ निर्ब्रवीति । **स्थाणुस्तिष्ठतेः** । स्थितो-

15 ह्यसौ नित्यकालमेव भवति न कदाचिदप्यासीदिति । **अर्थोऽर्तेः** गतिकर्मणः । अर्यते ह्यसावर्थिभिः । अरणस्थो वा यदा ह्यस्य स्वामी अरति गच्छति इतो लोकादमुं लोकं तदायमिहैव तिष्ठति नानेनैव सहामुं लोकं गच्छति दीनारादिरर्थः तत्सामान्या-दितरोऽपि शब्दार्थोऽर्थ उच्यते ।

एवं तावत् शिष्यानुगमस्तुतौ ज्ञानं प्रशस्यते अज्ञानं च निन्द्यते ॥ १८ ॥

---

1. *bi.* adds कमिति सुखनाम तत्प्रतिषिद्धं प्रतिषिध्येत &c. to पुण्यकृतो ह्येव तत्र गच्छन्ति ( *Vide* Nir. II. 14. ) after °धिभौतिकं वा. Evidently a marginal note is here included in the text. 2. *bi.* adds इत्यादि before इत°. 4. *bi.* युक्तं for उक्तं. 5. *m* न तदुपभोगे नाभिसंबध्यते. 6. *m.* अनर्थज्ञः for नार्थज्ञ. 8. *a b d.* अज्ञातं for अविज्ञात; *a. b. d. m.* किंस्वित् for किंस्वि of *bi.*, *a. b d m.* om. निगदेनैव शब्द्यते 9. *a d* add तेः after न पुनः, *b.* omits न पुनरर्थतो विचार्यते; *a. b. d.* अनग्नाविव शुष्कैधः शुष्कं काष्ठं अग्नौ &c. 13. *m.* om इति after आरब्धव्यम् । 14. *a.* °दाहरणप्रसक्तो? for °क्तौ. 15. *b m.* कदाचिदप्यासीनेति, *bi.* कदाचिदप्यासीदिति. Our emendation is conjectural here. 16. *bi.* यदास्य for यदा ह्यस्य of *a. b. d m*; *m.* आरति for अरति. 17. *a b. m.* दीनारादिरप्यर्थः for दीनारादिरर्थः.

---

4. For quot. *vide* Bhag. Gītā IV. 38.

"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।

उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः॥"[1]

अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धमप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते। ज्ञानं प्रकाशनमर्थस्याहानया वाचोपमोत्तमया वाचा। जायेव पत्ये काम- 5
यमाना सुवासा ऋतुकालेषु सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु। यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा। तस्योत्तरा भूयसे निर्वचनाय॥ १९॥

न केवलं स्मृतावेव ज्ञानप्रशंसाज्ञाननिन्दा च। किं तर्हि। वेदेपि प्रदर्शयति उत त्वः पश्यन् इति। विद्यासूक्ते द्वे अप्येते ऋचौ बृहस्पतेरार्षम्। उत शब्दोपि- 10
शब्देन समानार्थः। त्वः—एक इत्यर्थः। बहूनामपि समानपृष्ठोदरपाणिपादानां समानमेवाध्ययनमधीयानानामेकः कश्चित्पश्यन्नपि वाचं मनसा स्वभ्यस्ताध्ययनोपि तीक्ष्णधीः सन् न पश्यत्येवार्थानभिज्ञत्वात्। स हि तां सम्यक् पश्यति यस्तस्या अर्थं विजानाति। अर्थपरिज्ञानफला हि वागित्यभिप्रायः। एवमेकः शृण्वन्नपि न शृणोत्येवैनां वाचम्। य एव ह्यर्थमवबुध्यते वाचस्तेनैव हि सा सम्यक् श्रुता भवति नेतरेण। इतरो 15
ह्यविद्वान् ध्वनिमात्रमेवोच्चारयन् शृणोति वाचमेवमनेनार्धर्चेनाविद्वांसमाह निन्दन्न्यृक्। सांप्रतमुत्तरेणार्धर्चेनार्थज्ञं प्रशंसन्नाह। उतो त्वस्मै—अप्येकस्मै—कस्मैचिदर्थज्ञाय तन्वं—शरीरं विसस्रे—विस्रंसयति—विवृणोतीत्यर्थः। अर्थो वाचः शरी-

4. A. आहार्धम° for आहार्धम्°. 5. B. °पमोत्तरया for °पमोत्तमया. 6. A om. सुवासा कल्याणवासा कामयमाना ऋतुकालेषु 8. A. Bi. conclude sect. ॥ after निर्वचनाय. 9. *bi.* om. प्रदर्शयति after वेदेपि 13. *bi.* adds न ददर्श between सन् and न पश्यत्येवा°; *m.* सहितां for स हि तां; ■ सः after पश्यति. 14. *bi.* अर्थपरिज्ञानफला for °ज्ञानफला, *m.* om. हि; *a. b d. m* न शृणोत्येवैनां वाचं, *bi.* om. एव. 15. *bi.* om. हि after तेनैव. 16. *bi.* ध्वनिमात्रमेवोच्चारयन्नपि वाचम् अर्थम् अनेनार्धर्चेन &c., *a. d.* उच्चारयति for उच्चारयन् 17. *a. d.* अन्येकस्मैचिदर्थज्ञाय for अप्येकस्मै कस्मैचिद°.

1. The quot. is RS. X. 71. 4.

रं ... .णं दर्शयत्येकस्मै कस्मैचिदर्थज्ञाय । अप्रकाशनमर्थस्याहानया वा
च ...र्थेन तृतीयेन पादेनेत्यर्थः । कथं पुनर्विवृणुते तन्वमिति यतः उपमो-
त्तमया वाचा—उत्तमेन पादेनोच्यते जायेव पत्य उशती सुवासाः—इत्यनेन ।
यथा हि जाया निरन्तर्वाससवयवा भूत्वा उशती—कामयमानेयय भर्त्रे प्रेम्णा दर्श-
5 येदात्मानम् । कस्मिन्काले । यदा सुवासा भवति—निर्णिक्तवासा भवति । निर्णिक्त-
वासा—नीरजस्का ऋतुकालेषु तदा हसितं स्त्री पुरुषं प्रार्थयते । अत एतयास्यर्थो-
पमीयते । यथा स पुरुषस्तां यथावत् पश्यति स्त्रियं नेतरो या घनस्थगितसर्व-
गात्रा । एवं स एवैतां वाचं यथावत्पश्यति यः पदशोऽवच्छिद्यैतां विसृज्य चार्थमस्याः
पश्यति समस्तमस्तम् । एवमस्यामृच्यमर्थज्ञप्रशंसा ।

10 अपीत्यस्या ऋग्मताः एवोत्तरस्यैवार्थस्य प्रकृतस्य ज्ञानप्रशंसाख्यस्य फला-
भिधानद्वारेण भूयसे—बहुतरयानुना फलेनाभिसंबन्धात्प्रतिविशिष्टं ज्ञानमित्येवं निर्व-
चनाय । निर्विविच्य निर्धार्य वचनं—कथनं निर्वचनं तस्मै निर्वचनाय ॥ १९ ॥

"उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥"

15 अप्येकं वाक्सख्ये स्थिरपीतमाहुः रममाणं विपीतार्थं देवसख्ये
रमणीये स्थान इति वा विज्ञातार्थं यन्नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्व-
प्यधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया नास्मै कामान्दुग्धे वाग्दो-

---

1 *a. d* निरुक्तमान for निरुक्तोत्थानान, *bi.* दर्शयत्येकस्मै for दर्शयत्येकस्मै; *a. b. d. m.* अर्थप्रकाशनमज्ञानया वाचा  2. *m.* तृतीयपादेन, *bi.* तर्हि for पुनः; *bi* यतः for यत ; *d.* उत्तमया बत्तनया वाचा  4. *bi.* adds पत्ये after कामयमाना  5. *a. d* om. निर्णिक्तवासा भवति.  6. *bi.* स्वपुरुषं for स्त्री पुरुषं.  7. *m.* उपमीयते ।, *bi.* adds पत्नी after तां, *a. b d. m.* read नेतरो यो घनपटप्रावृतसर्वगात्रां ( *d* अं ). we read with *bi.* as it makes better sense, but we read या घनपट॰ for या घनपट॰ of *bi.*  8. *bi.* शृणोतीति for पश्यति, *bi. m.* विसृज्य चार्थं॰.  9. *bi.* समस्तमस्तमेव॰, *m.* समस्तमस्तमेव, we read with *a. b d.*  10. *m.* अप इव for अपीत्य; *bi* तस्याः for अस्याः.  11 *bi.* प्रतिविशिष्टज्ञानं, we read with our Mss. *a b d.* om. निर्वचनाय  12. *a.* वचनाय for वचनं कथनं निर्वचनं तस्मै.

---

13. The quot. is RS. X. 71. 5.

ह्यान्देवमनुष्यस्थानेषु यो वाचं श्रुतवान्भवत्यफलामपुष्पामित्यफलास्मा अपुष्पा वाग्भवतीति वा किंचित्पुष्पफलेति वार्थं वाचः पुष्पफलमाह याज्ञदैवते पुष्पफले देवताध्यात्मे वा।

साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्त्संप्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं 5
समाम्नासिषुर्वेदं च वेदाङ्गानि च। बिल्मं भिल्मं भासनमिति वा। एतावन्तः समानकर्माणो धातवो धातुर्दधातेरेतावन्त्यस्य सत्त्वस्य नामधेयान्येतावतामर्थानामिदमभिधानं नैघण्टुकमिदं देवतानाम प्राधान्येनेदमिति। तद्यदन्यदेवते मन्त्रे निपतति नैघण्टुकं तत्।

"अश्वं न त्वा वारवन्तम्।" 10

अश्वमिव त्वा वालवन्तम्। वाला दंशवारणार्था भवन्ति। दंशो दशतेः।

"मृगो न भीमः कुचरो गिरिष्ठाः।"

मृग इव भीमः कुचरो गिरिष्ठा मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव। कुचर इति चरतिकर्म कुत्सितमथ 15
चेद्देवताभिधानं क्वायं न चरतीति। गिरिष्ठा गिरिस्थायी। गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान्पर्वतः पर्व पुनः पृणातेः प्रीणाते·

---

3. B. C. read याज्ञे दैवते r; Durga's comm. below shows that he reads दैवताध्यात्मे; A. Bi. conclude sect. 4 after देवताध्यात्मे वा. 5. B. सम्प्राहु° for संप्रादु. 6. R. brackets the derivations of बिल्मं and धातुः. 9. R. B. अन्यदेवते, Bi. अन्यदैवते; A. B1. conclude sect. 5 after नैघण्टुकं तत्. 11. R. अश्वमिव त्वा वालावन्तं वाला. 17. A. पर्वं for पर्व.

वार्धमासपर्व देवानस्मिन्प्रीणन्तीति तत्प्रकृतीतरत्सन्धिसामान्यान्मेघस्थायी । मेघोऽपि गिरिरेतस्मादेव ।

तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते तदुपरिष्टाद्व्याख्यास्यामो नैघण्टुकानि नैगमानीहेह ॥ २० ॥

5 तद्यथा । उत त्वं सख्ये स्थिरपीतमाहुः इति । अप्येकमपि बहुन्विदुषः सख्ये–सखिभावे कस्मिन् देवसख्ये देवानां समानख्यानतायां–देवसायुज्य इत्यर्थः । वक्ष्यति हि । ' यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति ' इति । अथवा देवसख्ये रमणीये स्थाने । यस्मिन् देवानां सखिभावः तद्देवसख्यं स्थानं तस्मिन् देवसख्ये रमणीये स्थाने देवलोक इत्यर्थः । कमिति । स्थिरम्–अविचालिनम् 10 –अप्रच्यवनधर्माणम् । कमेवमाहुः । विपीतार्थमापीतार्थं गृहीतार्थमित्यर्थः । क एव-

4 B. नैगमानीह. After नैगमानीहेह A B1 conclude sect. but the former simply notes इति प्रथमोऽध्यायः without marking the pâda; B1. concludes 6th pâda here. 6 a. adds रमणीये after देवसख्ये; b1. om. देवानां of a. b. d., m. समानख्यातायां. 9 m. reads कमिति for किमिति of all other Mss., yet it is preferred as it alone corresponds to the answer that follows.

6. It almost looks as if *Durga* had a different text from ours, for, (i) he separates वाक्सख्ये in our text into two words; (ii.) he reads स्थिरं as if it is a word in the text which he explains by अविचालिनं &c.; (iii.) he does not notice the words रममाणं and विज्ञातार्थं. If, however, it be argued that he had the same text as ours, but he construed वाक्सख्ये as two independent words and not a compound, and स्थिरं was the sense of the word रममाणं in the text which he further explained by what followed, and that विज्ञातार्थं was implied in his [illegible] गृहीतार्थं, we are at any rate obliged to assert that his method here [illegible] explanation of the text differs from what he usually follows. It may also be noted that the word सख्ये in the verse appears to be rendered by Yâska either as वाक्सख्ये or देवसख्ये. This would obviate the awkward and forced construction put on the word वाक् by दुर्ग.

7. वक्ष्यति i. e. in Nir. Pari XIII. 13.

माह। इयमेव **वाक्** ऋक्संज्ञिका। किं च **नैनं हिन्वन्त्यपि वाजिनेषु**। एनं-वागर्थज्ञं न **हिन्वन्ति**–नानुगन्तुं शक्नुवन्ति। केषु। **वाजिनेषु**–वाग्ज्ञेयेष्वर्थेषु बलवत्स्वपि–दुर्ज्ञेयेषु दुरवघटनीयेषु समुद्रपिहितरत्नसंनिभेषु देवतापरिज्ञानादिषु व्याक-र्तव्येषु। स हि तान्व्याकर्तुं शक्नोति नेतरे मन्दबुद्धयो बहवोपि समागताः शक्नुवन्ति तानर्थान्व्याकर्तुं यानसौ व्याकरोति। अत एतदुक्तं **नैनं हिन्वन्त्यपि वाजिनेषु** इति। एवं तावदर्थज्ञः प्रशस्तः। 5

अथेदानीमविद्वानुत्तरेणार्धर्चेन निन्द्यते। **अधेन्वा चरति**। **अधेन्वा ह्येष चरति**। न हि सा वाक् हिनोतीह न परत्र च यस्या अर्थो न परिज्ञायते। तया गृहीतयैव तामधीयान इतश्चेतश्चरति तत्प्रधान एव सर्वतः पर्यटतीत्यभिप्रायः। किं च **माययैष** चरति गृहीतया। यथा हि कश्चिन्मायया सुवर्णं बिभृयादेवमयमवाचमेतां बिभर्ति। 10 सा तादृशी भ्रियमाणा वाक्। किं करोति। **नास्मै कामान् दुग्धे**। कतमान्। ये तस्या वाचो दोग्धव्याः। क। देवतास्थानेषु मनुष्यस्थानेषु च। यः किं करोति। **य एवं श्रुतवान् भवति**। कथम्। **अफलामपुष्पामिति**। एवं यः श्रुतवान् भवत्यन्येभ्यः सकाशाच्छ्रुत्वा च दृढग्राहेण गृहीत्वावस्थितो भवति अध्ययनादृते नान्यदस्ति वाचि किंचिन्मृग्यमिति। तस्मै किमिति। **अफलैवास्मा अपुष्पा च वाग् भवति**। 15 यथैव ह्यसौ पश्यत्यफलेयमपुष्पा चेति तथैव भवतीत्यभिप्रायः। अथवा **किंचित्पु-ष्पफलेति वा**। एतदुक्तं भवत्यल्पफलामल्पपुष्पामिति। किं कारणम्। अस्ति ह्यध्यय-नमात्रे किंचिदल्पं फलं नासौ परिश्रमो व्यर्थ एवेति भाष्यकाराभिप्रायः। आह। किं पुनर्वाचः पुष्पफलमिति। उच्यते। **अर्थं वाचः पुष्पफलमाहे**तस्मिन्मन्त्रे मन्त्रदृक्। आह। कः पुनरसावर्थ इति। याज्ञं दैवतमध्यात्ममित्येष वाचः समासतोर्थः। ॥20

---

1. *m.* व। for वाक्; *bi.* ऋक्संहिता for ऋक्संज्ञिका. 2. *bi.* नानन्तुगन्तुं. *m.* नानु-गतं for नानुगन्तुं of *a. b. d.*; *d.* वाज्ञेयेषु for वाग्ज्ञेयेषु. 4. *m.* मन्दबुद्धयाः for मन्दबुद्धयो. 6. *bi.* अपि for इति. 7. *bi.* निन्द्यन्ते for निन्द्यते. 8. *a. b. d.* भिनोति for हिनोति ( possibly the sandhi may have given rise to this reading); *m.* reads हिनोति हि for हिनोतीह. 9. *a. b. d.* इतश्चेतश्च चरति. 10. *a. b. d. m.* एवमयमवाचमेतां बिभर्ति. *bi.* एवमय वाचमेव एतां &c, both are construable; *b.* om. एतां. 11. *m.* भ्रियमाना for भ्रियमाणा. 12. *m.* om. च. 13. *bi.* adds शुश्रुवान् before श्रुतवान्; *bi.* अन्यः for अन्येभ्यः. 14. *m.* reads वा for वाचि. 15. *m.* कस्मै for तस्मै; *d.* अफलैवास्मै अपुष्पा; *m.* एव for च; *bi.* इति after भवति. 18. *a. b. d.* add अपि after अध्ययनमात्रे; *a. d.* अल्पफलं for अल्पं फलं. 20 *bi.* याज्ञदैवतं for याज्ञं दैवतं.

पुनरेव रूपकल्पनया पुष्पफलविभागेन द्विधा प्रविभज्यते । यज्ञदैवते पुष्पफले
देवताध्यात्मे चेति । यज्ञपरिज्ञानं याज्ञं देवतापरिज्ञानं दैवतमात्मन्यधि यद्वर्तते तदध्या-
त्मम् । स एष सर्वोऽपि मन्त्रब्राह्मणराशिरेवं त्रिधा विभक्तः । तत्रैवं सति यदा
अभ्युदयलक्षणो धर्मोऽभिप्रेयते तदा याज्ञं पुष्पं दैवतं फलम् । किं कारणम् । पूर्वं हि
5 पुष्पं भवति फलार्थम् याज्ञमपि च पूर्वं तन्यते देवतार्थमित्येतस्मात्सामान्याद्याज्ञं पुष्पं
दैवतं फलम् । यदा पुनर्निःश्रेयसलक्षणो धर्मोऽभिप्रेयते तदोभे अपि यज्ञदैवते पुष्प-
त्वमेव बिभृतः । दैवते हि याज्ञमन्तर्भूतमेव तदर्थत्वात् । अतो न पृथगुच्यते । यत्पुनर-
धिदैवतं सर्वमपि प्रतिविशिष्टज्ञानेनोपासकेन मुमुक्षुणा निरूप्य चेतसा आत्मानमेव प्रत्य-
भिसंपाद्यते कार्यकरणाधिदेवताद्वारेण सोऽयमेवमधिदैवतमधियज्ञं चोच्छिद्याध्यात्ममेवा-
10 भिसंपादयति यथा पुष्पभावमुच्छिद्य पुष्पं फलभावायेति । एवं सोऽयमात्मन्यध्येवा-
भिसंपद्यते । तत्रैवं सति अध्यात्मार्थत्वादधिदैवतस्य अध्यात्मस्य च पुरुषार्थस्य निष्प-
न्नत्वात् दैवतं पुष्पम् अध्यात्मं फलमित्युक्तम् ।

आह । कुतः पुनरिदमायातं निरुक्तशास्त्रं प्रधानमितराणि चाङ्गानीति । उच्यते ।
**साक्षात्कृतधर्माण ऋषयो बभूवुः** । साक्षात्कृतो यैर्धर्मः साक्षाद्दृष्टः प्रतिविशिष्टेन
15 तपसा त इमे साक्षात्कृतधर्माणः । के पुनस्त इति । उच्यते । ऋषयः । ऋषन्त्यमु-
ष्मात्कर्मण एवमर्थवता मन्त्रेण संयुक्तादमुना प्रकारेणैवंलक्षणः फलविपरिणामो भवतीति
पश्यन्ति ते ऋषयः । 'ऋषिर्दर्शनात्' इति वक्ष्यति । तदेतत्कर्मणः फलविपरिणामदर्श-
नमौपचारिक्या वृत्त्योक्तं साक्षात्कृतधर्माण इति । न हि धर्मस्य दर्शनमस्ति अत्य-
न्तापूर्वो हि धर्मः ।

1. *a* *b*. *d*. रूपककल्पनया; *a* द्विधा वर्धविभज्यते for द्विधा प्रविभज्यते. 2 *d*. देवताध्यात्मे for दैवताध्यात्मे of others, the reading of *d*. is however favoured by the reading of the text, *m*. om. from तदध्यात्मम् to धर्मोऽभिप्रेयते in l 6. below. 3. *d* त्रेधा for त्रिधा 4. *bi* याज्ञपुष्पं दैवतफलं. 5. *bi*. om. च after याज्ञमपि; *m*. *b*. *d*. add च after देवतार्थं; *m* देवतार्थत्वे तस्मात् &c. 6 *bi*. एव for अपि. 7. *a*. *d*. add एतत् after पुन . 9. *bi*. प्रतिसंपाद्यते for प्रत्य-भिसंपाद्यते of all the Mss.; *a*. *d*. कार्यकरणाधिदेवताद्वारेण, *bi*. कार्यकारणाधि° *m*. सोममेव for सोऽयमेव. 10. *bi*. तथा for यथा. 11. *b* *d*. *m*. अधिदैवस्य for अधिदैवतस्य; *a*. *d*. om. च after अध्यात्मस्य, *m* add न after पुरुषार्थस्य 12. *a*. *b*. *d*. फलमित्येवमुक्तम् 13. *d*. निरुक्त शास्त्रप्रधानं. 16. *m*. एवमर्थवत्ता for °र्थवता; *bi*. एवंलक्षणं for एवंलक्षणः of *m* *a*. *b* *d* ; *m* भवतीति पश्यन्ति ते ऋषयः *bi* *a*. *b*. *d*. भवतीत्यृषय .

17. वक्ष्यति i. e. in Nir. II. 11.

आह । किं तेषामिति । उच्यते । **तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्संप्रादुः** । ते ये साक्षात्कृतधर्माणस्तेऽवरेभ्योऽवरकालीनेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्यः । तेषां हि श्रुत्वा ततः पश्चादृषित्वमुपजायते न यथा पूर्वेषां साक्षात्कृतधर्मणां श्रवणमन्तरेणैव । आह । किं तेभ्य इति । उच्यते । तेऽवरेभ्य उपदेशेन शिष्योपाध्यायिकया वृत्त्या मन्त्रान्ग्रन्थतोऽर्थतश्च संप्रादुः संप्रदत्तवन्तस्तेऽपि चोपदेशेनैव जगृहुः ।

अथ तेऽपि **उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च** इति । उपदेशाय उपदेशार्थम् । कथं नामोपदिश्यमानमर्थमेते शक्नुयुर्ग्रहीतुमित्येतमर्थमधिकृत्य ग्लायन्तः खिद्यमानास्तेष्वनुगृह्णन्तस्तु तदनुकम्पया तेषामायुषः संकोचमवेत्य कालानुरूपां च ग्रहणशक्तिं बिल्मग्रहणायेमं ग्रन्थं गवादिदेवपत्न्यन्तं समाम्नातवन्तः । किमेनमेव । नेत्युच्यते । वेदं च वेदाङ्गानि चेतराणीति । 10

कथं पुनः समाम्नासिषुरिति । आह । शृणु । वेदं तावदेकं सन्तमतिमहत्त्वाद्दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः सुखग्रहणाय व्यासेन समाम्नातवन्तः । तद्यथा । एकविंशतिधा बाह्वृच्यम् । एकशतधाध्वर्यवम् । सहस्रधा सामवेदम् । नवधाथर्वणम् । वेदाङ्गान्यपि । तद्यथा । व्याकरणमष्टधा । निरुक्तं चतुर्दशधेत्येवमादि । एवं समाम्नासिषुर्भेदेन ग्रहणार्थम् । कथं नाम । भिन्नान्येतानि शाखान्तराणि लघूनि सुखं गृह्णीयुरेते शक्तिहीना अल्पायुषो मनुष्या इत्येवमर्थं समाम्नासिषुरिति ।

बिल्मग्रहणं भाष्यवाक्यप्रसक्तं निर्ब्रवीति । यदेतत् **बिल्ममित्युक्तमेतद्भिल्मं वेदानां** । 15 **भेदनम्** । भेदो व्यास इत्यर्थः । **भासनमिति वा** । अथवा भासनमेव बिल्मशब्द-

3. *d.* श्रुतर्षिभ्यः.; *m.* °कृतधर्मणा । 4. *a. b. d. m.* om. उच्यते; *m.* विशिष्यो° for शिष्यो°; *bi.* शिष्योपाधिकया for शिष्योपाध्यायिकया of all Mss. 5. *m.* वस्था for वृत्त्या; *a. d. m.* संप्रत्तवन्त:; *a.* om. एव after उपदेशेन 6. *d.* °ग्रहणायेमे for °येमं. 7. *m.* om. इति; *c. d.* om. अर्थं after उपदिश्यमान. 8. *m.* ग्रहीत° for ग्रहीतु°; *m.* ग्रहीतुमित्येतमर्थमधिकृत्य, *d.* °तुमित्येवमर्थमधि°, *a.* °मित्येवमनर्थमधि°, *b.* °मित्येत । एवमर्थमधि°, *bi.* °मित्येतमधि°; *bi.* तेष्वनुगृह्णन्ति for तेष्वनुगृह्णन्तस्तु of *a. d. m., b.* तेष्वनुगृह्णन्त. instead. 9 *m.* अवश्य for अवेत्य; *m.* कालानुरूपा च, *d.* कालानुरूपं च 10. *d. m.* add च after वेद. *bi.* om. it. 12. *m.* सुखग्रहणाय for सुखग्रहणाय of others. 13. *bi.* बाह्वृच्यम् for बाह्वृच्यं of all the Mss; *m.* सहस्रा for सहस्रधा; *a* अथर्वण । 16. *d.* अल्पायुष । 17. *b.* भाष्यवाक्यप्रसक्तं, *a. d.* भाष्यवाक्यप्रसक्त, *b.* भाष्यकारप्रसक्त, *m.* भाष्यकारप्रसक्त 18 *bi.* भषण° for भासन°.

3. For a vedic illustration of one who got ऋषित्व after austerities *vide* RS. V. 61. 1–19. the story of श्यावाश्व.

नोच्यते । वेदाङ्गविज्ञानेन भासते प्रकाशते वेदार्थ इति । अत इदमुक्तं बिल्ममिति । एवं भिदेर्भासतेर्वा बिल्मशब्दः । एवमिदमृषिभ्यो निरुक्तशास्त्रमायातमितराणि चाङ्गानीति परिशोधित आगमः ।

अथेदानीं निघण्टुसमाम्नायविरचना वक्तव्या प्रकरणत्रयविभागेन सुखव्याख्यानार्थ-
5 मस्य शास्त्रस्य । सेयमुच्यते । **एतावन्तः समानकर्माणो धातवः । एतावन्त्यस्य सत्त्वस्य नामधेयानीति** । स एष पदराशिर्नैघण्टुकं नाम प्रकरणम् । एतावन्त इति या चैषु धातुषु चाख्यातपदेषु प्रतिनियता संख्या साभिप्रेयते । तद्यथा । 'गतिकर्माण उत्तरे धातवो द्वाविंशं शतम्' 'कान्तिकर्माण उत्तरे धातवोऽष्टादश' इत्येवमादि । एतावन्त्यस्य सत्त्वस्येति या नामसु प्रतिनियता संख्या साभिप्रेयते । तद्यथा । 'पृथिवी-
10 नामधेयान्येकविंशतिः' । 'हिरण्यनामान्युत्तराणि पञ्चदश' । इत्येवमादि । यत्रैतावर्थौ प्रायेण चिन्त्येते प्रसङ्गतोऽन्यदपिकिंचित्तदेतदेवंलक्षणं नैघण्टुकं नाम प्रकरणं गवादि प्राग् जहाशब्दात् ।

अथ पुनर्यत्रैतावतामपर्यायाणामिदमभिधानमित्यर्थः प्रायेण चिन्त्यते । तद्यथा । 'आदित्योऽप्यकूपारः' 'समुद्रोऽप्यकूपारः' इत्येवमादि । अनवगतसंस्काराश्च निगमाः
15 जहादयः प्रायेण चिन्त्यन्ते प्रसङ्गतोऽन्यदपिकिंचित्तदेतदेवंलक्षणमैकपदिकं नाम प्रकरणं जहादि प्रागग्निशब्दात् । अथ पुनर्यत्र नैघण्टुकं देवतानामास्मिन्मन्त्र इदमन्यदत्र

---

2. bi. आगत for आयातं of a b d m. 4. m. प्रकरणत्रयसविभागेन, and सुख व्याख्यानार्थं 5. d समानकर्मणो. 8. m. करणं for प्रकरणं. 7. bi. m. व्याख्यातपदेषु. a. d. चाख्यातपदेषु, b appears to agree with a d. but is uncertain. 8. bi. द्वाविंशशतम् 9. a d. m. om. both या and सा; m नामधेयपर्याविर्षया for नामसु प्रतिनियता 11. m चिन्त्यते; a. d तदेतदेवंलक्षण b तदेतल्लक्षण, m. तदेव पदलक्षणं, bi. पदलक्षणं by omitting तदेवम् 14 d इत्येवमादिरनवगत° 15 a b. अनुषङ्गतो for प्रसङ्गतो, m अन्यदपि for अन्यद्; bi. °m. तदेतदेवंलक्षण to अग्निशब्दात्, m. तदेवंलक्षण for तदेतदेवलक्षणं. 16 bi. add अप्राधान्येन after देवतानाम, b. अन्यत्र for अन्यदत्र; d. अस्मिन् for अस्मिन्.

---

6 Nir. III. 9.
10. Nir. II. 7; II. 10
12. जहाशब्दात् i. e. Nigh. IV. 1., Nir. IV. 1.
14. Nir. IV. 18.
16. अग्निशब्दात् i. e. Nigh. V. 1., Nir. VII. 14.

प्राधान्येन वर्तत इत्ययं विभागः प्रायेण चिन्त्यते तदेतद्दैवतलक्षणं दैवतं नाम प्रकरणम-
मितान्द्रादि देवपत्न्यन्तम्। तान्येतानि त्रीणि प्रकरणानि नैघण्टुकमैकपदिकं दैवत-
मिति। अनेन प्रकरणत्रयविभागप्रदर्शनेनेदमवस्थितं निरुक्तशास्त्रमिति।

**तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत्।** इदमुक्तं नैघण्टुकमिदं देव-
तानाम् प्राधान्येनेदमिति तत्र न ज्ञायते किमिदमुक्तं भवति तदेतल्लक्षणत उपदिश्यत 5
इति पर्युत्सुकस्तच्छब्दः। यदभिधानमन्यदैवते अन्या यस्मिन् प्रधानदेवता सोयम-
न्यदैवतस्तस्मिन्नन्यदैवते मन्त्रे स्वमर्थमन्यस्यां प्रधानायां मन्त्रदेवतायां **निपतति**
—निगमयत्सतति—प्रयुज्यमानानङ्गभावं गच्छति मन्त्रवाक्ये नैघण्टुकं तदित्युच्यते गुणभूत-
मित्यर्थः। संज्ञा हि तस्येयमस्मिञ्छास्त्रे।

तद्यथा— 10

"अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः।
सम्राजन्तमध्वराणाम्॥"

अस्यामृच्यश्वो नैघण्टुकोऽग्निः प्रधानम्। शुनःशेपस्यार्षम्। गायत्री। वारवन्ती-
यानुशंसने विनियुक्ता। सा चैव वारवन्तीयस्यैव योनिः। अश्वं न त्वा—अश्वमिव
त्वां हे अग्ने। अग्निमग्ने नेतारं देवानां वारवन्तं—वालवन्तं—दशाश्वम्। स ह्यतितरां 15
वालवान् भवति वन्द्यते परिचर्यते च न तथान्ये। तमिव त्वां वन्दध्यै—वन्दामहे
—स्तुमः। नमोभिः—नमस्कारैरन्नैर्वा हविर्भिरुक्तैः। क्व पुनरवस्थितं कथं वा वन्दामह
इति। सम्राजन्तं—दीप्यमानमध्वराणां—यज्ञानां मध्येऽवस्थितमुत्तरवेद्यादिषु धिष्ण्येष्व-
भिप्रेतार्थसिद्धये वन्दामहे।

---

1. *b. m.* तदेतद्दैवतलक्षणं, *a. d.* तद्दैवतलक्षणं; *a. d. m.* प्रकरणं before दैवतं नाम and not after. 5. *a. d.* तदेतल्लक्षणम् उपदिश्यते, *m.* तदेतल्लक्षणं तदोपदिश्यते। 6. *a. b. d. m.* read अन्यदेवते for अन्यदैवते of *bi.*, and all except *m.* read अन्यदेवतः for अन्यदैवतः of *bi.* 7. *bi.* स्वार्थं for स्वमर्थं of *a. b. d. m.*; *m.* मन्त्रे देवतायां; *m.* निगमयत्सतति प्रयुज्य°, *a. b. d. bi.* निगमयति for निगमयत्सतति; *bi.* अभिप्रयुज्य°. 14. *m.* वारवन्तीयानुशंसने।; *d.* त्वा for त्वां. 15. *m.* om. अग्ने. 16. *m.* वन्दामहे for वन्दामहे.

---

1. दैवतप्रकरणं from Nir. VII. to the end of XII.

11. The quot. is RS. I. 27. 1.

वालशब्दस्य निगमप्रसक्तस्य निर्वचनं वाला दंशवारणार्था भवन्ति । तैर्हि दंशादयो निवार्यन्ते । दंशशब्दस्य प्रसक्तानुप्रसक्तस्य निर्वचनं दंशो दशतेरिति । दशति दंशो ।

द्वितीयमुदाहरणम् ।

5 " मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।

सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताळ्हि वि मृधो नुदस्व ॥"

इति । गयो नामेन्द्रपुत्रस्तस्येयमार्षम् । त्रिष्टुप् । वैमृधस्य हविषो याज्या । इन्द्रोऽस्य प्रधानं मृगो नैघण्टुकः । मृगो न—मृग इव व्याघ्रो वा सिंहो वा । भीमो—भीषणः । कुचरः—कुत्सितचरणो हिंस्रः प्राणिवधजीवनः । गिरिष्ठाः—पर्वताश्रयः । स यथा
10 कंचिदन्यं प्राणिविशेषं हन्ति । तेनानभिभूयमानः परावतः—परस्मात्—अतिदूरात्स्थानात्परस्याः—दिवः सम्बन्धिन आजगन्थागच्छ। एतदर्थमागत्य चेह कर्मणि हे इन्द्र एतदस्मद्वचः कुरु । सृकं—यः शत्रुकार्येषु सर्तुं शक्नोति तं पविं—वज्रं संशाय—तीक्ष्णीकृत्य तिग्मं—छेदनायोत्साहवन्तं सुनिशितं कृत्वा ततो [illegible] ताळ्हि—विताडयैतानस्मच्छत्रूनेक-

---

1. *a d.* दंशविनिवारणार्था; *m.* om. हि after तैः  2. *m.* विवार्यन्ते for निवार्यन्ते; *bi.* प्रसक्तस्य for प्रसक्तानुप्रसक्तस्य of *a. b. d. m.*  4. After उदाहरणम् *a b. d bi.* मृगो न भीम इति, *m* मृगो न भीम° °नुदस्व. But after उदाहरणम् adds

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ ( RS. I. 154. 2.).

किं च । and after this reads मृगो न &c. l. 5. We do not accept this verse in the text as Durga has not commented upon it. It however, contains the part quoted in the Nirukta text.  7. *m.* इन्द्रोऽस्य प्रधानं मृगो नैघण्टुकः before गयो नाम and not afterwards; *a. b. d.* अस्या for अस्य.  8. *b* adds मृगो न भीम इति before मृगो न.  10-14. *bi.* reads these very badly [illegible]: तेनानभिभूयमान इह कर्मणि हे इन्द्र एतदस्मद्वच कुरु । सृकम् यः शत्रुकार्येषु सर्तुं शक्नोति । परावतः परस्मात् अतिदूरस्थानात् परस्याः दिव सम्बन्धिन आजगन्थ आगच्छ । एतदर्थमागत्य च ते पविं वज्रं &c. This as it stands makes no sense. We read the text according to *b.*; *a. d.* apparently agree with *b* *m.* with a few omissions.  13. *bi.* adds ( शत्रून् ) after अस्मच्छत्रून्.

---

5. The quot. is RS. X. 180. 2.

7. The use of the verse is prescribed in As'. S r. Sū. II. 10.

प्रहारवर्जितदेहान् कुरुष्व । यानपि च ॥ हिनस्सि कथंचित्तानपि मृधो-हिंसकान्' वितुदस्व-नानाप्रकारं प्रेरयस्व दूरमपुनरागमनाय ।

अथ चेद् देवताभिधानमेतत्कुचर इति ततः क्वायं न चरतीति सर्वत्र चरतीति । गिरिष्ठा मेघस्थायी इति च । अनुपक्षीणशक्तयो हि विभवो वेदशब्दा यथाऽस्मं पुरुषाणामर्थोभिधानेषु निर्गरिणमनानाः सर्वतोमुखा अनेकार्थान् प्रब्रुवन्तीत्येतदनेन प्रदर्शितं भवतीत्यथ चेद्देवताभिधानमिति । 5

मृगादिशब्दान् निगमप्रसक्तान् निर्ब्रवीति । मृगो-मार्ष्टेर्गतिकर्मणः । नित्य ह्यसौ गच्छति । भीमो बिभ्यत्यस्मात्-सर्वे एव ह्यस्माद् बिभेति । भीष्मशब्दं सारूप्यप्रसक्तं निराह । भीष्मोऽप्येतस्मादेव इति । कुचर इति चरतिकर्म कुत्सितम् । चरति ह्यसौ कर्म कुत्सितं व्याघ्रो वा सिंहो वा । क्वायं न चरतीति 10 देवताभिधानत्वे । गिरिः पर्वतः । समुद्गीर्णो भवति समस्तो ह्यसावुद्गीर्ण इव भूलो भवति । पर्वतशब्दं पर्यायाख्यानप्रसक्तं निराह । पर्ववान् पर्वत इति । शिलाशिखरसन्धिभिरसौ तद्वान् भवति । पर्वशब्दं विग्रहप्रसक्तं निराह । पर्व पुनः पृणातेः पूरणार्थस्य । पूरयन्ति हि ते शिलाशिखरसन्धयोऽखिलं पर्वतम् । प्रीणातेर्वा तर्पणार्थस्य । तद् पुनरेतदर्धमासपर्व । किं कारणम् । देवानस्मिन् हविर्भिः प्रीण- 15 न्तीति । तत्प्रकृतीतरत् सन्धिमात्रसामान्यात् कालसन्धिश्च शिलासन्धिश्च समानं सन्धित्वमिति । देवताभिधानपक्षे मेघस्थायी गिरिष्ठाः । मेघोऽपि गिरिरेतस्मादेव । असावपि समुद्गीर्णो भवत्यन्तरिक्षलोके ।

तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते । तदुपरिष्टाद्व्याख्यास्यामः । नैघण्टुकानि नैगमानीहेह । तदेतदुच्यते । 20 सामान्यलक्षणोपलक्षितप्रकरणत्रयविभागेनावस्थितो गवादिर्देवपत्न्यन्तः समाम्नायोऽयमा-

---

1. *bi.* adds हि after यानपि च न; *a. d.* हिनस्सि, *b.* हिनस्ति, for हिनस्सि; *a. b. d.* omit मृधो हिंसकान्. 4. *a. d.* अनुपक्षीणशक्त्यो? 5. *b.* यथा मनुष्याणां?; *bi.* अनेकार्थां न ब्रुवन्तो ऽेतदनेन &c. *b. m.* ब्रुवन्तीत्येतद् for प्रब्रु°. 7. *bi.* adds इति after निर्ब्रवीति 10. *m.* om. वा after व्याघ्रः. 11. *a. d.* om. पर्वतः after गिरिः. 12. *b. m.* पर्यायानुप्रसक्तं for पर्यायाख्यानप्रसक्तं. 13. *d.* adds हि after तद्वान्. 15. *m.* तर्पणार्थस्य for तर्पणार्थस्य. 16. *a. b. d.* om. इति after प्रीणन्ति; *bi.* सन्धिसामान्यात् for सन्धिमात्रसामान्यात् of *a. b. d. m.* 17. *b.* समानसन्धित्वमिति. 18. *m.* अन्तरिक्षे for अन्तरिक्षलोके.

नुपूर्व्या व्याख्यास्यत इति पर्युपयुक्तः तच्छन्दः । यानि नामानि प्राधान्यस्तुतीनाम-ग्न्यादीनाम् । प्रधानभावेन याः स्तूयन्ते न निपातभाक्त्वेन ता एताः प्राधान्यस्तुतयो देवताः । तासां यानि नामान्यग्न्यादीनि देवपत्न्यन्तानि तानि सर्वाण्यपि समुदितानि सन्त्येतयैकया सामान्यया प्रकरणसंज्ञयाचक्षत आचार्याः । कतमया । उच्यते । दैवत-
5 मित्येतया । निरूढा ह्रीयमेतस्मिन्नैघण्टुकशब्दसमुदाये संज्ञेत्यभिप्रायः । तत्पुनरेतद्दैवतं प्रकरणमुपरिष्टाद्व्याख्यास्यामोऽस्य शास्त्रस्य । आह । किं कारणम् । उच्यते । गुणपदेषु व्याख्यातेषु प्रधानदेवतापदानि सुखं व्याख्यास्यन्त इत्यनेनाभिप्रायेण । देवतापरिज्ञान-तत्फलाभिधाननिष्ठं च कथं नामेदं शास्त्रं स्यादिति । यानि पुनर्नैघण्टुकानि गवादीनि नैगमानि च जहादीनि तानीह प्रकरणद्वये नैघण्टुके चैकपदिके च व्याख्यास्याम इत्येत-
10 देवानुवर्णते । त एते गवादयो देवपत्न्यन्ता निघण्टवस्तदेकदेशो नैघण्टुकं प्रकरणम् । निघण्टुसंज्ञया व्यवहारो लोके । निघण्टुमधीमहे निघण्टुमध्यापयाम इति । शास्त्रे

---

1 *m* यानि इमानि for यानि नामानि  2. *bi* om न after स्तूयन्ते; *b.* वा for या.  3. *b. d. m* add किल after तासां  4. *m.* एकया for एतया.  5. *b.* नैघण्टुशब्दसमुदाये, *bi.* तत्पुनरेतत्, *d.* तत्पुनरदैवतं.  6. *a. b. d.* add इति after किं कारणम्.  7. *a b d. m* °परिज्ञानतत्फला°, *bi* °परिज्ञानं तत्फला°.  10. *a. b* तदेकदेशो, *d m* तदेकदेशो, *m.* नैघण्टुकप्रकरण, *bi.* adds इति after प्रकरणम् omitted by all the Mss.  11. *bi.* अध्यामहे for अध्यापयाम: of *a. b. d. m*

---

6. अपरिज्ञान् i.e. In the second half of Nirukta Adhyâyas VII. to XII.

8 नैघण्टुकानि–i.e All the words collected in Nigh. Adhyâyas I. to III.

9. नैगमानि–i. e. All the words collected in Nigh. Adhyâya IV.

प्रकरणद्वये First part Nir. II. & III. adhyâyas, second part Nir. IV. to VI. adhyâyas.

11. This is the popular name of the whole collection of words in five Adhyâyas from गौः to देवपत्न्यः printed at the beginning. Durga states, however, that the word निघण्टु, accurately speaking, denotes every word in this collection, and the first part including the first three adhyâyas of the collection is called the Naighantuka.

ह्यल्पापि नैघण्टुकं प्रकरणमिति । नैगममित्यैकपदिकम् । नैघण्टुकानि नैगमानि पदानि चेह प्रकरणद्वये व्याख्यास्यामः ।

अध्यायपरिसमाप्तिलक्षणार्थः परितोषार्थो वा द्विरभ्यास इति ॥ २० ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य

कृतौ प्रथमोऽध्यायः समाप्तः ॥ १ ॥  5

([1]समाम्नाय[2]स्तत्र चतुष्ट्व[3]मतो[4]न्येय निपाता [5]सा[6]युर्वा त्वा [6]न [7]नूनं नूनं सा त [8]ऋचां [9]त्वो[9]क्षण्वन्तो [10]निष्टुक्वासो [11]हविर्भि[12]रितीमा[13]न्यथापि [14]यो यथो हि [15]न्वया[16]पीदम[16]र्थवन्तो[17]थापीदं [18]स्थाणुरय[19]मुत त्वः [20]पश्यन्नुत त्वं सख्ये विंशतिः ॥ )

इति निरुक्ते पूर्वषट्के प्रथमोऽध्यायः ॥ १ ॥

---

1. *d.* नैगममित्यैकपदिकम् ।; *a. b. d.* नैघण्टुकानि च पदानि नैगमानि चेह &c.
3. *m.* अध्यायपरिसमाप्तलक्ष°; *m.* omits इति; *a. b* conclude section as खं ॥ २० ॥
4–5. *a. d.* इति ऋज्वर्थायां निरुक्तवृत्तौ. *b.* इति ऋज्वर्थायां निरुक्तवृत्तौ, *m. bi.* इति निरुक्तटीकायां. *bi.* first concludes Pâda as इति निरुक्तवृत्तौ षष्ठाध्यायस्य षष्ठः पादः and then the adhyâya as इति निरुक्तटीकायां जम्बूमार्गा°...°दुर्गस्य कृतौ षष्ठाध्यायः (प्रथमाध्यायः) समाप्तः ॥ ६ ॥; *a.* at the end gives the enumeration of parts &c. as:—॥ खं. २० ग्रं. १० संख्या २१०० पाद ६ पत्र ७२.

---

5. In almost all the Mss. of Nirukta its adhyâyas are numbered in continuation of those of the collection of words; hence this is called the 6*th* adhyâya, but as the commentary of Durga begins from this adhyâya, we have disregarded the reading of the colophon as given by *bi.* and preferred that of *a.* & *d.* here as well as in the colophons that follow.

देव । अमुष्मिन् धातावयं स्वरो वर्णो वा मया दृष्टः स एवायमस्मिन्नभिधाने दृश्यत इत्येवमुत्प्रेक्ष्य स धात्वर्थः सूत्रबद्ध इव तस्मिन्नभिधान आहृत्य स्फारीकृत्य कृत्स्नः प्रकाशयितव्यः । एवमविद्यमानेऽर्थसामान्ये स्वरवर्णसामान्यमात्रेणापि निर्ब्रूयादेव । न त्वेव न निर्ब्रूयात् । इतरथा ह्यनर्थकमेव निरुक्तशास्त्रं स्यात् । तन्मा भूदित्यत इदमुच्यते लक्षणपराङ्मुखेषु शब्देषु न संस्कारमाद्रियेत । किं तर्हि । अर्थसामान्यमाद्रियेत शब्दसामान्यं वा । तद्यथा । प्रवीणोदारनिस्त्रिंशशब्दा उत्कृष्टस्वार्थाभिधेयसंबन्धाः सन्तः क्रियागुणसामान्यं हेतुमाश्रित्यान्येष्वेवार्थान्तरेषु वर्तन्ते । तद्यथा । प्रकृष्टो वीणायां प्रवीणो गान्धर्वे अत्र ह्यस्य मुख्या वृत्तिः । स एष स्वमर्थमभिधेयमुत्सृज्यैव गान्धर्वेऽभ्यासपाटवमात्रं सामान्यमाश्रित्य सर्वत्रैवाभिप्रवृत्तः । यो हि यस्मिन् कुत्रचन उत्पन्नकौशलो भवति स तत्रोच्यते प्रवीण इति । तद्यथा । प्रवीणो व्याकरणे प्रवीणो निरुक्त इति । एवमेवोदार इति । प्रागारसंनिपातादाकूतेनैव सारथेर्यो बहुलक्षोनड्वान् वा स उद्गतारत्वादुदार । तत्र हि समञ्जसा वृत्तिरस्य शब्दस्य । स एव उत्सृज्यैव स्वमर्थमाकूतानुविधायित्वमात्रमेव सामान्यमाश्रित्य प्रवृत्तो यो हि कश्चित् कस्मैचिदाकूतमेव लक्षयित्वा प्रागेव प्रार्थनाद्ददाति स उदार इत्युच्यते । एवमेव निस्त्रिंशः । त्रिभिः प्रदेशैर्द्वाभ्यां धाराभ्यामग्रेण च निशितः श्यतीति निस्त्रिंशः खड्गस्तत्र ह्यस्य शब्दस्य समञ्जसा वृत्तिः । स एष छेदनसमानरूपं क्रौर्यसामान्यमाश्रित्य सर्वत्रैव प्रवृत्तः । यो हि लोके क्रूरो भवति स निस्त्रिंश इत्युच्यते । एवमेते क्रियागुणसामान्यमात्रेण वर्तन्ते । यथैते एवमन्येऽप्यभ्यूहितव्याः । अभ्यूह्य चैवमर्थसामान्येन निर्वक्तव्याः । स्वरवर्णसामान्ये तु प्रचुराण्येवोदाहरणानि । सर्व एव हि नैगमाः शब्दा जहादयः स्वरवर्णसामान्यमात्रेणैव निरुच्यन्ते ।

---

1 *bı* स एव यस्मिन् for स एवायमस्मिन् of *a b d. m*  4 *bı.* om न after न त्वेव, *m* adds न संस्कारमाद्रियेत after निर्ब्रूयात्, *b d m* om इद after अत  5. *b* om शब्देषु  7 *bı* क्रियागुणसामान्य हेतु. *m* °सामान्यहेतु, for सामान्यहेतुमाश्रि of *a b d*, *m* प्रवर्तन्ते for वर्तन्ते  8 *a d* प्रवृत्ति for वृत्ति, स for एष  9 *m* पाटवमात्रसामान्य  11 *a d.* आकूतमात्रेणैव for आकूतेनैव of *bı*; *a d.* आरात्संनिपातात् for आरसंनिपातात् of the rest, *b m* प्रागारसंनिपातात् व्याहृतमात्रेणैव यावत्संकेतेनैव सारथे &c  12 *m* उद्गततरत्वात् for उद्गतारत्वात् of the rest; *b* om एव after उत्सृज्य  13 *d* आकूतानुविधायित्वमेव, *bı* om एव after आकूतं  14 *m* प्रार्थना for प्रार्थनात्  15. *m* adds स after श्यतीति *d.* adds मुख्यग्रहणात् after खड्ग and *n* मुख्यग्रहणात् for it  16 *a d* अभि- for प्रवृत्त.  17 *a d.* om. इति after निस्त्रिंश.  18. *b. m.* om अपि अन्ये, and च after अभ्यूह्य

च निरुक्ते कारुअनकादिशब्दा व्युत्पाद्यन्ते सुबोधैव हि तेषां व्युत्पत्तिः प्रसिद्धैव च व्याकरण इ एव तु दुर्बोधाः परोक्षातिपरोक्षवृत्तयः बिल्मकुदरोदर-वैनसर्वशब्दादयस्त एव्युत्पाद्य निरुच्यन्ते । तेषु हि विशेषेणार्थवत्ता निरुक्तस्य । तान्येवार्थसामान्येन वा समान्येन वा निर्ब्रूयान्न तेषु संस्कारमाद्रियेतेति ।

आह । किं कारणमिदउच्यते । **विशयवत्यो हि वृत्तयो भवन्ति** । हियं हेत्वर्थे । यस्माद्विशय बहुसंशयवत्यः शब्दानामर्थेषु वृत्तयो भवन्ति नानाभावे-नार्थेष्ववस्थिता प्रवृत्तिरेवं स्यान्नैवं स्यादिति विचारयन्तः सन्तः प्रतिपत्तसंमो-हाच्छेरत इवास्मिन्निति विषयः संशय इति ।

अत्र । केचिदर्थेन्येन क्वचिद्वर्तन्ते शब्दाः केचित्स्वरसामान्येन केचिद्वर्णसामा-न्येन यत एवमतो.कोऽपि यथार्थमेव संनमयेद्विपरिणमयेत्पूर्वोत्तरपदप्रकरणाविरोधेन । 10
किं कारणम् । क्वापि हि व्यत्ययो भवत्येव । सुपां स्थाने सुपो भवन्तीति हि वैया-करणाः पठन्दिर्शयिष्यति चायमपि विभक्तिविपरिणामम् । तद्यथा । "**इत्सु शोकैः** हृदयानि शे" इत्येवमादि ।

अधुक्त्वा विशयवत्यो भवन्तीत्यर्थवशेन व्याकरणेऽपि शब्दविपरिणामो भवती-त्येवं.यति । **प्रत्तमवत्तमिति धात्वादी एव शिष्येते** इत्येवमादि । "डुदाञ् 15
दा" तस्य प्रपूर्वस्य प्रत्तमिति । अत्र दकार आकारश्च धातुः परो निष्ठाप्रत्ययस्तकारः । एवं सति "दो दद् घोः" (पा॰ ७, ४, ४६) इति वर्तमाने "अच उपसर्गात् :" (पा॰ ७, ४, ४७) इति आकारस्य तकारो भवति "झरो झरि सवर्णे" पा॰ ८, ४, ६५) इति धात्वन्त्यस्य तकारस्य लोपे कृते "खरि च" (पा॰ ८,

---

2. *m.* सिद्धैव for प्रसिद्धैव; *bi.* om. तु; *a* d. °कुतरोदर°, *m.* °कुदनोदर°, *bi.* कुदरोदार°; *b.* बिल्म for बिल्म t. 3 *d.* om. हि after त एव. 4. *b.* *i.* om [illegible] after अर्थसामान्येन; *a* *d.* स्वरसंस्कारं for संस्कारं; *d* *m.* om. इति after आद्रियेत. 5. *bi.* विषयवत्यो for विशयवत्यो; *m.* adds यथार्थं विभक्तीः सन्नमयेत् after भवन्ति. 6. *bi.* *a* *b.* तस्मात् for यस्मात् of *d* *m*; *bi* विषय° for विशय°. *b.* व्यवस्थिता for अवस्थिता; *d.* om. न before एवं, and reads विचारयन्नप्रतिपन्न: मोही. 8. *bi.* विषयः for विशय; *d.* adds नानाभावेनार्थेषु again by mistake after संशय. 14. *bi.* विषय° for विशय°. 17. *a.* *d.* अत for अत्र. 19. *bi.* धात्वन्तस्य for धात्वन्त्यस्य of *b.* *d.* *m.*

---

12. दर्शयिष्यति i. e. in Nir. IX. 33.

15. डुदाञ्-Dhátupátha जुहोत्यादि (9).

४, ५५ ) इति दकारस्य चर्त्वे कृते "परः संनिकर्षः संहिता"
इति धातुतकारः प्रत्ययतकारेण संयोगतामुपैति । "हलोऽनन्तराः
१, ७ ) इति ततः प्रादिसमासे कृते प्रत्तमिति भवति । एवमु
इत्यस्यावपूर्वस्य अवत्तमिति । अत्रापि दकार ओकारस्य धा
5 अत्र "आदेच उपदेशेऽशिति" (पा० ६, १, ४५) इत्योकार
पचर्त्वपरगमनप्रादिसमासाः पूर्ववदेव । एवमनयोर्धात्वोरादी एव
रेवमन्येषामपि दृष्ट्वा यथासंभवमनुविधेयम् ।

**अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः**
भुवि' इत्यस्य निवृत्तिस्थानेषु गुणवृद्धिनिवृत्तिस्थानेषु ङितीति वर्तते
10 (पा० ६, ४, १११)" इत्यादिलोपो भवति । योऽयं धात्वादाव
तस्मिँल्लुप्ते प्रयोग. स्तः सन्तीति । एवमन्येषामपि दृष्ट्वानुविधेयं यथासंभवम्

**अथाप्यन्तलोपो भवति गत्वा गतमिति** । अत्र गमेः क्त्वाक्त
प्रत्यये च परतोऽनुनासिकलोपो भवति "अनुदात्तोपदेश" इत्यधिकृत्य
एवमन्येष्वपि द्रष्टव्यमनुविधेयं च यथासंभवम् ।

15 **अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति** । अत्र गमेरलोपः । "अ
न्त्यात् पूर्व उपधा" (पा० १, १, ६५) इत्यकारस्योपधासंज्ञा तस्य "गमहनजनखन-
घसां लोपः (पा० ६, ४, ९८)" इत्युपधालोपः । एवमन्येषामपि द्रष्टव्यमनुविधेयं
यथासंभवम् ।

---

1. *b.* तकारस्य for दकारस्य 2. *d m.* add वाक after प्रत्ययतकारेण. 5 *m.* आदेश for आदेच, *d.* आचेद. 8 *a. d.* read अस्तु भुवि. 10. *d m* पच for एव, *d.* लुम्पते for लुप्यते 11. *m* adds कथं after लुप्ते; *m.* दृष्ट्वा यथा सम्भवमनुविधेयम्. 12. *a.* om गत्वा गतमिति to भवति in l. 13. 14 *m* om. च, and reads द्रष्टव्यं यथासम्भवमनुविधेयम्. 15. *b.* अल्लोप· for अलोपः. 16 *b. m* इत्युपधासञ्ज्ञा, we read with *a d* 17. *b* om लोप, *m.* अन्येष्वपि for अन्येषामपि, and adds च after अनुविधेयं.

---

3. दो- धा० पा०-दिवादि (42).

8. अस्- धा० पा०-अदादि (55)

13 अनुदात्तोपदेश etc. *vide Pāṇini VI. iv. 37.*

याच्यसे तत् एवायमपि यजमानो हविर्भिः—संस्कृतैः सांनं"
तावावां भवन्तमेकमेवार्थं याचावहे स्तुतिभिर्हविर्भिश्च। स त्वमहेद
हि याच्यमान: क्रुध्यतीत्यत एवमुच्यते । हे वरुण बोधि—बुध्यस्व
भिप्रेतार्थं कुरु । उरुशंसेत्येकं पदं संबोधनं च । हे उरुशंस
5 नोस्माकं याचमानानामायुः प्रमोषीः । कुरु नोभिप्रेतार्थसिद्धिमित्यर्थ

अथापि द्विवर्णलोपस्तृच इति । अत्र ऋवर्णरेफयोर्लोपः
दरं क्रमिवदनुप्रविष्टो द्रष्टव्यः । स लुप्यते ऋवर्णेन साकम् ।

अथाप्यादिविपर्ययो भवति ज्योतिर्घनो बिन्दुर्वाट्य इति । 'इति' 'श्चुत दीप्तौ' तस्य
तस्यादिव्यापत्त्या ज्योतिः । 'हन हिंसागत्योः' तस्य घन इति । 'भिदिर् वि
10 बिन्दुः । 'भट भृतौ' तस्य वाट्यः ।

हभिराशास्ते ।
मोकुध्यन् । सर्वो
रा: स
एवमे
दा चैतमावयोर-
धातुस्तुत्य वरुण मा
कारयः ।
रेफ एव ऋवर्णो-
नैत 'श्चुत दीप्तौ'

5. bi.

---

3. *b* बोधस्व for बुध्यस्व; m पनं for पदं. 4. m एकपद for एकं पदं. d. अभिप्रायसिद्धिं for अभिप्रेतार्थसिद्धिं. 6 *bi*. om. रेफ एव &c. to द्रष्टव्यः; a. read ऋवर्णोदर, *b*. m read ऋवर्ण उदरं instead, and add उदरं क्रमिवत् after क्रमिवत्. 8, 10. *bi*. *b*. वाटयः for वाट्यः of *a*. *d*. m 10. *d*. om. तस्य before वाट्य

---

6 The whole passage is very doubtful. Again it does not give a good explanation of द्विवर्णलोपः Evidently both the र् and ऋ are not elided as it is written here, for, in that case the form should have been त्रिच; but it is तृचः and hence one ऋ must be retained. Siddhânta-kâumudî on Pâṇini VI i 34 in the 6*th* adhyâya of Vaidikîprakriyâ perhaps supplies a better explanation. Under the above sûtra a *Vârtika* is quoted as ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि which means "In Vedic language, if त्रि is followed by ऋच्, the initial vowel of the 2*nd* member is dropped", and since त्रि itself takes सम्प्रसारण by the rule here cited the vowel इ is elided in this change, and hence two letters are elided altogether in the formation of तृच.

8. श्चुत्–धा० पा०–भ्वादि ( 742 ).

9. हन्–धा० पा०–अदादि ( 2 ), भिद्–धा० पा०–रुधादि ( 2 ).

10. भट–धा० पा०–भ्वादि ( 318 ).

अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकतास्तर्क्विति । 'श्च्युतिर् क्षरणे' तस्याद्यन्तविपर्ययेण स्तोकाः । 'सृज विसर्गे' तस्य रज्जुः । 'कस विकसने' तस्य सिकता । 'कृती छेदने' तस्य तर्कु ।

अथाप्यन्तव्यापत्तिर्भवति ॥ १ ॥

ओघो मेघो नाधो गाधो वधूर्मध्विति । अथापि वर्णोपजन आस्थ- 5
द्वारो भरूजेति । तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद्द्विप्र-
कृतीनां स्थानमिति प्रदिशन्ति तत्र सिद्धायामनुपपद्यमानायामितर-
योपपिपादयिषेत्तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति तद्यथैतदूतिर्मृदुः पृथुः
पृषतः कुणारुमित्यथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते
दमूनाः क्षेत्रसाधा इत्यथापि नैगमेभ्यो भाषिका उष्णं घृतमिति । 10
अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु । शवतिर्गतिकर्मा
कम्बोजेष्वेव भाष्यते । कम्बोजाः कम्बलभोजाः कमनीयभोजा वा
कम्बलः कमनीयो भवति । विकारमस्यार्येषु भाषन्ते शव इति ।
दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु । एवमेकपदानि निर्ब्रूयात् ॥

अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं 15
प्रविभज्य निर्ब्रूयाद्दण्ड्यः पुरुषो दण्डपुरुषो दण्डमर्हतीति वा दण्डेन

---

2. d. om. तस्य before रज्जुः. 11. A. B1. conclude sect 3 after विकृतय एकेषु. 15. R. omits चानेकपर्वसु. 16. A. B1. R. (Rec. II) om दण्डपुरुषो read by all others; R remarks in the notes that the word is an unnecessary addition. We let it stand in the text as it is the current reading in these parts of the country.

---

1. श्च्युत्-धा० पा०-भ्वादि ( 41 ).

2 सृज्-धा० पा०-दिवादि ( 72 ) & तुदादि ( 133 ). कस्-धा० पा०-भ्वादि (885) but the meaning here given is गतौ instead of विकसने.

3. कृत्-धा० पा०-तुदादि ( 154 ).

6. R. reads स्वरान्तर्धा तु as two words. I do not believe it necessary nor quite natural and hence I read it as one word.

संपद्यत इति वा दण्डो ददतेर्धारयतिकर्मणोऽक्रूरो ददते मणिमित्य-
भिभाषन्ते दमनादित्यौपमन्यवो दण्डमस्याकर्षतेति गर्हायाम्। कक्ष्या
रज्जुरश्वस्य कक्षं सेवते। कक्षो गाहतेः। क्स इति नामकरणः। ख्यातेर्वा-
नर्थकोऽभ्यासः। किमस्मिन् ख्यानमिति। कषतेर्वा। तत्सामान्यान्मनुष्य-
5 कक्षो बाहुमूलसामान्यादश्वस्य ॥ २ ॥

ओघो मेघो नाघो गाधो वधूर्मध्विति। 'वह प्रापणे' तस्यान्ताव्यापत्त्या ओघः।
'मिह सेचने' तस्य मेघः। 'णह बन्धने' तस्य नाघः। 'गाहू विलोडने' तस्य गाधः।
'वह प्रापणे' तस्य वधूः। 'मद तृप्तौ' तस्य मधु।

अथापि वर्णोपजनः। आस्थद्द्वारो भरूजेति। 'असु क्षेपणे' तस्य आस्थ-
10 द्वर्णोपजनेन। 'वृङ् संभक्तौ' तस्य द्वारः। 'भ्रस्ज पाके' तस्य भरूजा।

एवं व्याकरणेऽपि लक्षणप्रधाने सत्यर्थवशेन लोपागमौ विपरिणामश्च शब्दानां दृष्टः
किमुत निरुक्ते यदर्थप्रधानमेव। तस्मात्साधूक्तम् 'अथानन्वितेऽर्थेऽप्रादेशिके विकारे-
ऽर्थनित्यः परीक्षेत केनचिद् वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्नि-
र्ब्रूयात्। विभक्तीरपि यथार्थं संनमयेत्' इति। एवमयमादिमध्यान्तलोप आदिमध्यान्त-
15 विकारो वर्णलोपो द्विवर्णलोप आदिविपर्यय आद्यन्तविपर्ययो वर्णोपजनश्छन्दसि भाषायां
च द्रष्टव्यो दृष्ट्वा च यथासंभवमनुविधेयः।

---

2. A Bi. conclude sect. 4 after गर्हायाम्. 7. *b.* reads नह for णह. 9. *bi* असु for असु 10 *bi*. om. वर्णोपजनेन after आस्थत्; *a. d.* read वृञ् for वृङ्; *a b. d* read तस्य द्वारः for तस्य वारः of *bi*; *a*, reads भरूजी and *d*. भ्रज्जी for भ्रस्ज. 12 *m* नैरुक्ते for निरुक्ते 15 *m*. reads °विकारः for °विकारो. 16. *a. b. d. m.* read द्रष्टव्यः *bi*. द्रष्टव्याः; *a. b. d.* read अनुविधेयः, *m*. अनुसंधेयः, for अनुविधेयम् of *bi*.

---

6, 8. वह्-धा. पा.-भ्वादि (1029) S'ivadatta remarks वहतेरादिव्यापत्तेरप्र-
सिद्धकल्पनीयत्वेन चिन्त्यमेतत्। तस्माद् 'ओख' धातुरेव स्वीकार्यः।

7. मिह्-धा पा-भ्वादि (1017). णह्-धा. पा.-दिवादि (60) -गाहू-धा पा-
भ्वादि (650).

8. मद्-धा. पा.-चुरादि (172).

9. असु-धा.-पा -दिवादि (103).

10. वृ-धा० पा०-क्र्यादि (37), भ्रस्ज्-धा- पा -तुदादि (4).

अतः परं संप्रसारणचिन्ता वर्तिष्यते तदर्थमिदमारभ्यते । **तद्यत्र स्वरादनन्त-
रान्तस्थान्तर्धातु भवति तद्द्विप्रकृतीनां स्थानमिति प्रदिशन्ति ।** संप्रसा-
र्यप्रकृतयश्चासंप्रसार्यप्र... श्चोभयप्रकृतयश्च धातवः । तत्रैवं सत्युभयप्रकृतिषु स्वराश्रय-
विषयगतं यद्वक्तव्यं **तत्** इदमुच्यत इति पर्युत्सुकस्तच्छन्दः ।

आह । इदमेव तावदुच्यतामुभयप्रकृतीनां किं लक्षणमिति । उच्यते । **यत्र** यस्मिन् 5
धातौ **स्वराद**कारादेरनन्तरानन्तर्हितान्येन व्यञ्जनेन परा वा पूर्वा वान्तस्था यर-
लवानामन्यतमो वर्णोऽन्तर्धातु धातुमध्ये भवति । किं तत्र । तदेतदेवंलक्षणं धातुरूपं
हि **द्विप्रकृतीनां** द्विरूपभावानां शब्दानां **स्थान**माश्रय इत्येवमाचार्याः **प्रदिशन्ति**
प्रविभागेनोपदिशन्ति ।

तद्यथा । 'यज देवपूजासंगतिकरणदानेषु' इति । अत्र द्वे शब्दप्रकृती भवतः । संप्रसा- 10
रणपक्षे तावत् इष्टवान् इष्टः इष्ट्वा एताः शब्दप्रकृतयो भवन्ति । असंप्रसारणपक्षे पुनः
यष्टा यष्टुं यष्टव्यमित्येताः ।

**तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत् ।** तत्रैवं सत्येक-
प्रकारेण **सिद्धाया**मर्थसिद्धा**वनुपपद्यमानायामितरयोपपिपादयिषे**दुपपादयितु-
मिच्छेदर्थम् । द्वयोः संप्रसारणासंप्रसारणप्रकृत्योर्यथैवोपपद्यतेऽर्थस्तथैवोपपादयेत् । उभय- 15
थाप्यनुपपद्यमानेऽर्थे स्वयमुत्थाय निर्धार्य यथा यथोपपद्येतार्थस्तथा तथोपपादयेदर्थलक्षण-
शास्त्रविहितेनार्थसाधनोपायेन । अर्थस्य प्रधानत्वात् ।

---

2. *a.* adds इति after प्रदिशन्ति. 3. *bi.* स्वरा° for स्वराश्र°. 4. *a.* omits तावत्. 5. *d.* reads इदमेवमुच्यतां? 7. *m.* मध्ये for धातुमध्ये; *a. b. d. m.* omit तत्; *bi.* reads एवदेव for °देव°; *b. m.* add तत् after धातुरूपं; 8. *m.* omits हि; *a. b. d. m.* read आश्रये for आश्रयः; *a. b. d m.* omit प्रदिशन्ति. 10. *m.* omits इति. 11. *a. d.* add इष्टिः after इष्टः, *m.* reads इष्टिः for इष्टः and omits इष्ट्वा 12. *bi.* यष्ट्वा for यष्टा. 15. *bi.* reads अर्थे for अर्थं and joins it with the following sentence.; *m.* यथेव for यथैव of the rest; *bi.* °पद्येतेऽर्थस्त° for °पद्यतेऽर्थस्त°, *m.* तथेव for तथैव of the rest, *bi.* adds अथवा before उभयथापि. 16. *b. m.* अनुपपद्यमानोऽर्थः for °द्यमानेऽर्थे; *bi.* तथोपपादयेत् अपि तल्लक्षण° for °पादयेदर्थलक्षण°.

---

10. यज-धा. पा.-भ्वादि (1027).

**तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति ।** एतस्मिन्नपि संप्रसारणलक्षणे सत्येके धातवः **अल्पनिष्पत्तयो भवन्ति।** अल्पेषु शब्दरूपेषु संप्रसारणप्रकृतिरभिनिष्पद्यते। तदप्युपेक्षितव्यम् ।

**तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारुमिति ।** **तद्यथैत**दुदाहरणजातम् ऊतिः मृदुः पृथुः पृषतः कुणारुम् इति। अवतेर्गत्यर्थस्य क्तिप्रत्यये परतः "च्छ्वोः शूडनुनासिके च" इति वर्तमाने "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" इत्यूठ्भावः क्रियते तत ऊतिरिति भवति। 'म्रद मर्दने' तस्य मृदुः। रेफः संप्रसार्यमाण ऋकारो भवति। एवमेव 'प्रथ प्रख्याने' तस्य पृथुः। 'प्रुषु दाहे' तस्य पृषतः। क्वणः शब्दार्थस्तस्य कुणारुम्।

एवमयमपि संप्रसार्यासंप्रसार्यविशेषः परिज्ञेयः शब्दाभिर्बुभुत्सता पुंसा। **अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते ।** अथापीदमपरमुपेक्षितव्यमनेन शब्दाभिर्बुभुत्सता । आह किमिति । उच्यते **भाषिकेभ्यो धातुभ्यो** भाषायां

---

1 *b1* adds तत्रापि before एतस्मिन्नपि  4. *a d.* omit the pratika तद्यथा &c  5. *b.* reads क्तिप्रत्यये, *b m* परे for परतः; *a b d.* read छ्वोः, *b1* च्छोः. 6 *b1* ज्वरत्वरस्रिव्यवि°; *b* ऊठ्भावः.  8. *b1.* प्रुष दाहे, *a. d.* read परिष सेहने, *b. m.* पृष सेहने, *b1* कुणारु, *m* कुणारु, for कुणारुम्  9 *b1.* एवमपि for एवमयमपि, and °विशेषपरिज्ञेयश्च° for °विशेष परिज्ञेय. श°; *a. b d* omit पुंसा.  11. *b1.* आगमशब्दान् for अनेन शब्दान्; *m.* शब्दाभिर्बुभुत्सता।

---

6 अवृ-धा० पा०-भ्वादि ( 601 ) अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ।

7 म्रद्-धा० पा०-भ्वादि ( 768 ). प्रथ-धा० पा०-भ्वादि ( 766 ).

8 प्रुषु-धा पा०-भ्वादि ( 704 ) The readings of the Mss tend to show that the root is rather पृषु which they give as bearing the sense of सेहन. In the धातुपाठ however this root is given as bearing the sense of सेचन which answers very well since पृषत् means a drop. But as the word is given in the section of roots undergoing Samprasārana in their derivative forms we have evidently to reject this derivation and prefer the one from प्रुषु as the one intended by the author of Nirukta.

9 क्वण-धा० पा०-भ्वादि ( 451 )

ये प्रायेण प्रसिद्धप्रयोगास्ते भाषिकास्तेभ्यो नैगमाश्छन्दोविषयाः कृतः कृत्प्रत्ययान्ताः शब्दा भाष्यन्ते विवियन्ते निरुच्यन्त इत्यर्थः ।

तद्यथा दमूनाः क्षेत्रसाधा इति । 'दमु उपशमे' तस्य भाषायां दाम्यत्यनड्वान् दमयत्यनड्वाहं दान्तोनड्वानित्येवमादयः प्रयोगा भवन्ति । छन्दसि पुनर्दमूना अग्निरुच्यते ॥ भाषाशब्दसामान्येन केनचिन्निर्वक्तव्यो दममना इत्येवमादिना । एवमेव 5 साध्यतेर्भाषाप्रयोगवृत्तेः "मित्रं न क्षेत्रसाधसम्" इत्येवमादयो मित्रमिव क्षेत्रसाधयितारमित्येवमादिना प्रकारेण निर्वक्तव्याः ।

अथापि नैगमेभ्यो भाषिकाः । निगमे छन्दसि ये प्रायोवृत्त्या प्रसिद्धास्तेभ्यः सामान्यं गृहीत्वा भाषिकाः कृत्प्रत्ययान्ता भाष्यन्ते विवियन्ते । तद्यथा उष्णं घृतमिति । 'उष दाहे' । एष प्रायेण छन्दसि प्रसिद्धः । "प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः" 10 इत्येवमादि । भाषायां पुनरुष्णमिति श्रूयते । स एष नैगमशब्दसामान्येन निर्वक्तव्यः । एवमेव 'घृ क्षरणदीप्त्योः' तस्य छन्दसि "आ त्वा जिघर्मि" इति प्रसिद्धः प्रयोगः । भाषायां पुनर्घृतमिति श्रूयते । स एवं जिघर्तेरेव छान्दसस्य सामान्येन निर्वक्तव्यः । एवं भाषाविषयेभ्यश्छन्दोविषया निर्वक्तव्याश्छन्दोविषयेभ्यश्च भाषाविषयाः ।

---

1. *a. d.* येषां प्रायेण प्रसिद्धप्रयोग, *b. m.* येषां प्रायेण सिद्धः प्रयोगः; *a. d.* कृत्प्रयताः for कृत्प्रत्ययान्ता . 2. *b₁.* विवियन्ते for विवियन्ते of *a. b. d. m.* 4. *b.* omits दमयत्यनड्वाह, *m.* reads दमयन्त्यनड्वान् । 5. *b₁.* भाषासामान्येन for भाषाशब्दसामान्येन. 6. *b₁.* adds साधा इति after °प्रायोवृत्तेः; *a. d. b₁.* क्षेत्रसाधसं for क्षेत्रसाधयितारं of *b. m.* 11. *b₁.* एषो for एष. 12 *b₁.* इत्यादिषु सिद्धः for इति प्रसिद्धः, *d.* सिद्धः for प्रसिद्धः. 13. *b.* adds तु after भाषायां; *b. m.* स एष for स एवं ; *b₁.* सामान्ये for सामान्येन.

---

3. दमु-धा. पा०-दिवादि ( 97 ) ·

6. मित्रं न-RS. VIII. 31. 14.

10. उषु-धा० पा०-भ्वादि ( 697 ). प्रत्युष्टं-VS. I. 7.

12. घृ-धा० पा०-भ्वादि (963); आ त्वा-VS. XI. 23. *The whole text is*—

आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम् ॥

अथापीदमपरमुपेक्षितव्यमनेन शब्दाभिज्ञेनैवता । आह । किमिति । उच्यते **अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु ।** एकेषु प्रदेशेषु प्रकृतय एव धातुशब्दानां भाष्यन्ते विकृतय एकेषु । धातोराख्यातपदभावेन यः प्रयोगः सा प्रकृतिः । नामीभूतस्य तस्यैव यः प्रयोगः सा विकृतिः ।

5 **शवतिर्गतिकर्मा**—गत्यर्थो धातुः **कम्बोजेष्वेव भाष्यते** म्लेच्छेषु प्रकृत्या प्रयुज्यत आख्यातपदभावेन । शवति गच्छतीत्यर्थः । उदाहरणविशेषप्रसक्तः कम्बोजशब्दो निरुच्यते । **कम्बोजाः कम्बलभोजाः** । ते हि प्रायेण कम्बलानुपभुञ्जते हिमप्रायत्वात्तस्य देशस्य । **कमनीयभोजा वा** कमनीयानि प्रार्थनीयानि चैते हि द्रव्याण्युपभुञ्जते प्रचुररत्नो हि स देश इति । कम्बलशब्दं विग्रहप्रसक्तं निर्ब्रवीति ।

10 कम्बलः कमनीयो भवति प्रार्थनीयो हि स शीतार्तैर्भवति । **विकारमस्यार्येषु भाषन्ते शव इति ।** आर्येषु जनपदेष्वस्यैव शवतेर्विकारं भाषन्ते मृतकनामधेयभूतमेतं प्रयुञ्जते । कथम् । शव इति । एवमेकेष्वाख्यातस्य एव प्रयुज्यते नामीभूत एकेषु । इत्येतत्प्रकृतित्वं विकारत्वं च । अथवा चेतनावत्स्वेकेषु गमनक्रियायोगिनि द्रव्ये प्रयुज्यत एकेषु पुनश्चेतनारहित एवेत्येतत्प्रकृतित्वं विकारत्वं च ।

15 द्वितीयमुदाहरणम् । **दातिर्लवनार्थे प्राच्येषु** । दातिर्धातुराख्यातस्थो लवनार्थे प्राच्येषु जनपदेषु प्रयुज्यते । तद्यथा । व्रीहीन् दाति यवान् दाति । अयमेव नामीभूत **उदीच्येषु** जनपदेषु प्रयुज्यते **दात्रमिति** । दायते अनेनेति दात्रं लूयत इत्यर्थः ।

**एवमेकपदानि निर्ब्रूयात्** । अनेन प्रकारेणैकपदानि निर्ब्रूयात् । भाषानिगमव्यवस्थया रूढिव्यवस्थया वा देशभाषाप्रसिद्धिविभागेन वा ।

---

1. *a. d.* omit अथापि after उच्यते. 2. *m.* reads देशेषु for प्रदेशेषु, and एक° for एव. 3. *a.* omits यः before प्रयोगः 4. *a.* adds after विकृतिः —स एष—सूत्रं ॥ ३ ॥, *d.* adds स एष only and reads it along with शवति· &c. *m.* reads स एष सूत्र शवतिर्गतिकर्मेति &c. 7. *b.* reads तेपि for ते हि; *b₁.* उपभुञ्जन्ते and *m.* उपभुञ्जते । 8. *a. b. d.* ते for एते. 10. *b₁.* शीतार्ते for शीतार्तैः, *d.* शीतार्ते. 12. *b₁.* एतं for एतं, *b.* मृतकनामधेयभूते मेवे प्रयुञ्जते. 13–14. *b.* omits from अथवा to विकारत्वं च 14 *m.* पुनश्चेतद्धित इव. 16. *m.* ददाति for दाति, and adds दात्रं before उदीच्येषु. 17. *a. d.* omit जनपदेषु; *b₁.* दीयते for दायते of *a. c. m.*, *d.* द्यते. 18. *b. m.* add एव after अनेन 19. *a. b. d. m.* read रूढिव्यवस्थया वा before देश°, *b₁.* omits it; *a b d. m.* read वा after विभागेन; *b₁.* reads च instead.

आह । एवं तावत्तद्धितयुक्तेषु पदेष्वसमासयुक्तेषु च निर्वचनम् । अथ पुनर्यानि तद्धितयुक्तानि समासयुक्तानि च पदानि तानि कथं निर्वक्तव्यानि । किं तद्धितयुक्तेषु पदेषु पूर्वं पदार्थो निर्वक्तव्य उत तद्धितार्थः । समासयुक्तेष्वपि किं पदार्थः पूर्वमुत समासार्थो वा पूर्वमिति । उच्यते । **अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात् ।** अथशब्दो विशेषाधिकारार्थः । "तद्धिताः" (पा॰ ४, १, ७६) इत्यधिकृत्य ये प्रत्यया विहितास्ते तद्धिताः । "समर्थः पदविधिः" 5 (पा॰ २, १, १) इत्यधिकृत्य ये विहितास्ते समासाः । तेषूभयेष्वपि तद्धितसमासेष्व-विशेषेणैकपर्वसु चानेकपर्वसु चैकपदेषु चानेकपदेषु च । तद्यथा । दण्ड्यः इत्येकपदस्तद्धि-तः । वार्ष्यायणिरित्यनेकपदः । अनेकानि ह्येव पदानि स्वात्मन्यन्तर्णीय प्रवर्तते । तद्यथा । वृषस्यापत्यं वार्ष्यः वार्ष्यस्यापत्यं वार्ष्यायणः तस्यापि वार्ष्यायणिरिति । एवं समासेष्व-प्येकपदेषु चानेकपदेषु चैवं निर्ब्रूयात् । यथा वक्ष्यामः । एकशेष एकपदः समासः 10 "सरूपाणामेकशेष एकविभक्तौ" (पा॰ १, २, ६४) इति । तद्यथा । पुरुषश्च पुरुषश्च पुरुषौ पुरुषश्च पुरुषश्च पुरुषश्च पुरुषा इत्येवम् ।

> "द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
> पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥"

एतेऽनेकपदाः समासाः । तत्र । "संख्यापूर्वो द्विगुः" (पा॰ २, १, ५२) । पञ्चपूली 15 पञ्चरथी दशरथी इत्येवमादि । "चार्थे द्वन्द्वः" (पा॰ २, १, २९) । स च पुनर्विभाषये-कवद्भवति । तद्यथा । प्लक्षन्यग्रोधौ अहिनकुलं भीमार्जुनवासुदेवा इत्यादि । उपसर्ग-निपातपूर्वकोऽव्ययीभावः । तद्यथा । उपमथितम् अनुसमुद्रम् व्यभ्रम् इत्येवमादि । तुल्यविभक्तिलिङ्गयोरुभयोः पदयोः समानाधिकरणः कर्मधारयः । तद्यथा । कृष्णमृगः

---

1. *a.* अतद्धितेषु युक्तेषु पदेष्वसमासयुक्तेषु च etc., *b. m.* om. च, *d.* अतद्धिते युक्तेषु. 2. *bi.* adds तानि after निर्वक्तव्यानि. 3. *m.* om. पदेषु; *bi.* पूर्वपदार्थो for पूर्वं पदार्थो; also तद्धितार्थसमास° for तद्धितार्थः समास°. 7. *a. b. d.* omit च after एकपदेषु; *b.* and *m.* omit it also after अनेकपदेषु; after अनेकपदेषु *m.* adds इत्यधिकृत्य ये विहितास्ते तद्धितसमासाः (mistake); *m.* इत्येतत्पदः वार्ष्यायणस्तस्यापि for इत्येकपद°. 8.–10. *m.* omits अनेकानि ह्येव etc. to निर्ब्रूयात् 'through error in copy.'; *m.* एकपदसमास. for °पदः स°. 15. *bi. b. m.* read पाणिनेः सूत्रम् for तत्र of *a. d*; *b. m.* read तत्र after सूत्रम्; *bi.* पञ्चमूली for पञ्चपूली of all others. 16. *bi.* adds सूत्रम् after इत्येवमादि. 17. *b.* reads प्लक्षन्यग्रोधम्; *b. m.* इत्येवमादि for इत्यादि. 18. *m.* अपमथितम्

रक्ताश्वः श्वेतपताका इत्येवमादि । एतेष्वेकपर्वसु चानेकपर्वसु च तद्धितसमासेषु पूर्वं पूर्वमेव निर्ब्रूयादपरमपरमेव प्रविभज्य विगृह्येत्यर्थः । पूर्वं तद्धितार्थं निर्ब्रूयात्पश्चात्पदार्थम् । समासेष्वपि पूर्वं समासार्थं पश्चात्पदार्थम् ।

तदेतत् उदाहरणेनैव दर्शयति तद्यथा । **दण्ड्यः पुरुषो दण्डपुरुषो दण्डमर्हतीति वा दण्डेन संपद्यत इति वा ।** दण्ड्य इत्येष तद्धितः पुरुषशब्दविशेषणम् । पूर्वं तावत् तद्धितार्थं निर्वक्ष्यति ततः पदार्थं निर्वक्ष्यति । कस्मिंश्चिदपराधे दण्डमर्हतीति दण्ड्यः दण्डेन वा कार्षापणादिना यः संपद्यते संयुज्यते स दण्ड्यः । अधुना पदार्थनिर्वचनम् । **दण्डो ददतेर्धारयतिकर्मणः**--ददतेर्धारयत्यर्थे वर्तमानस्य । धार्यते ह्येषोऽपराधेषु राजभिः ।

आह । ददः पुनः क्वनित्प्रयोगो ददतेर्धारयत्यर्थे इति । उच्यते । दृष्टो वेदे लोके च । वेदे तावत् ।

"विश्वे देवाः पुष्करे त्वा ददन्त ।"

इति । तथा लोके

"अक्रूरो ददते मणिम्"

इत्यभिभाषन्ते अक्रूरो नाम राजा वृष्ण्यन्धकाधिपतिः स ददते मणिं स्यमन्तकनामानं शिरसा । लोकेऽप्येवं ददतिर्धारणार्थे भाष्यते ।

**दमनादित्यौपमन्यवः ।** दमनाद्दण्ड इत्येवमौपमन्यव आचार्यो मन्यते । तेन ह्यदान्तो दम्यते राजभिः । "तेनादान्तान् दमयेत्" इत्युक्तम् । लोके हि प्रसिद्धम् । यः

1. *bı.* रक्तोश्वः for रक्ताश्व· of all. 2. *m.* पूर्वं for पूर्वमेव 4 *m.* adds दण्डपुरुषो after दण्ड्यः पुरुषो; *a b d.* read the प्रतीक as दण्ड्य पुरुष इति. 6. *bi.* निर्वक्ति for निर्वक्ष्यति and omits ततः पदार्थं निर्वक्ष्यति, we read with all our Mss 8. *a. b. d. omit* the प्रतीक दण्डो ददते etc. *read by bı* ; *a. b. d. m.* add दण्डो before ददते. 10. *bı* omits प्रयोगो read by all our Mss. 14. *a b d. m.* omit अक्रूरो etc. read by *bı*. 15. *a b, d, m.* add इत्यभिभाषन्ते after मणिम्, which is omitted by *bı* 16. *a d.* read धारणार्थे ददति.; *b.* भाषन्ते for भाष्यते 17. *a. b.* omit the प्रतीक; *a. b. d. m.* add दमनाद्दण्ड इत्यौपमन्यव before आचार्यो, omitted by *bi*. 18. *bı.* प्रसिद्धो for प्रसिद्धम् of *a. b. d. m*; *a d.* add दान्तो before यः.

12. The quot. is from RS. VII. 33. 11.

18. Possibly तेनादान्तान् etc. is a quotation from memory from some धर्मसूत्र.

कश्चिद्दान्तो भवति तमधिकृत्य वक्तारो भवन्ति । दण्डमस्याकर्षेतेति गर्हायाम् । दण्डमस्याकर्षेत हे समाचर । तेन संयमनामयं ततो दान्तो भविष्यतीत्येवमयं गर्हायां दृष्टः । एवं च दमनाद्दण्ड इत्यौपमन्यव आचार्यो मन्यते ।

तद्धितस्यैव द्वितीयमुदाहरणम् । कक्ष्या रज्जुरश्वस्य इति । कक्ष्या इत्येष तद्धितः । आह । का पुनरियं कक्ष्येति । उच्यते । याश्वस्य संनाहरज्जुः सा कक्ष्येत्यु- 5
च्यते । एवं कक्ष्याशब्दस्य तत्त्वमुक्त्वाधुना तद्धितार्थं ब्रवीति । कक्षं सेवते । सा हि कक्षं सेवते । कक्षसंयुक्ता भवति कक्षे भवा वा कक्ष्या । अधुना पदार्थं निर्वक्ति । कक्षो गाहतेर्विलोडनार्थस्य । कक्षयोरेव हि बलेन विलोडयति स्त्री दध्यादि द्रव्यम् । अत्र पुनः क्स इति नामकरणः । सर्वमन्यच्छब्दान्तनिर्वचनादि यथोपदर्शितं यथा- संभवं योज्यं तत्र तत्र । ख्यातेर्वानर्थकोऽभ्यासः ककारः कख्यः सन् कक्ष इत्यु- 10
च्यते । अर्थवानेव वा ककारः । कथम् । किमस्मिन् ख्यानमित्येवम् । किम- स्मिन् ख्यापनीयमस्ति । न किंचिदपि । अदर्शनीयत्वाद्गूहनीयमेवमित्यर्थः । स एव एवं कृत्वा किंख्यः सन् कक्ष इत्युच्यते । कषतेर्वा नित्यचलं ह्यसौ स्वेदशीलत्वात्कण्डूं ददाति ततो नखैः कष्यते यतस्तस्मात् कषणक्रियायोगात् कक्ष इत्युच्यते । तस्यामा-

---

1. a. d. omit the प्रतीकः m. reads °कर्षेतेति for °तेति. 2. a. omits इति before एवम्. 3. bi. omits च after एवम् read by all our Mss. 4. m. एष for इत्येष. 5. bi. कः for का of a. b. d. m.; d. पुनरयम् for पुनरियम्. 6. m. ब्रवीति for ब्रवीति; a. d. omit सा हि कक्षं सेवते. 7. a. omits वा after भवा. 8. bi. omits बलेन and reads द्रव्यम् for स्त्री दध्यादि द्रव्यम्, bi. gives other variants as स्त्रीरेध्यादि द्रव्यम् and स्त्री दध्यादि- द्रव्यम्. Even as it is in the text the reading is very doubtful, yet we accept it as it makes some sense in the absence of anything better. 9. a. d. यथोपदर्शितं for यथोपदर्शितम्. 10. b. adds कथम् before तत्र तत्र; a. d. read योज्यम् । तत्र ख्यातेः etc.; m. adds ख्यातेरनर्थकोऽभ्यासः after कख्यात्, and reads ख्यः for कख्यः. 11. a. omits वा after अर्थवानेव; bi. reads ख्यान- मिति । एवं किमस्मिन् etc., a. d. read एव for एवम्. 13. bi. स्वेद° for स्वेद°. 14. m. कृष्यते and कर्षण° for कष्यते and कषण°; a. d. omit इत्युच्यते.

---

7. The word कक्ष्या is formed according to शरीरावयवाद्यत् (Pāṇ. IV. 3. 55.)

8. गाहतेः–धा० पा०–भ्वादि (630)

न्यान्मनुष्यकक्षः । स्त्रीकक्षस्य सामान्यात् मनुष्यकक्षोऽपि कक्ष इत्युच्यते । बाहुमूलसामान्यादश्वस्य । अश्वस्यापि यो बाहुमूलप्रदेशः स कक्ष इत्युच्यते । तं सेवत इति कक्ष्या ।

अन्ये तु ब्रुवते । पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात् । पूर्वं पदं पूर्वमेव
5 प्रविभज्य निर्ब्रूयात् अपरं पदमपरमेवेति । एतस्मिन्नर्थे कल्प्यमाने पदानामेव पौर्वापर्यम् । निर्वचने तद्धितसमासयोस्त्वनियमः पूर्वं वा पश्चाद्वेति । पूर्व एव त्वर्थः साधीयान् ॥३॥

राज्ञः पुरुषो राजपुरुषो राजा राजतेः पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य ।

यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
10 वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥

इत्यपि निगमो भवति ॥

विश्वकद्राकर्षो वीति चकद्र इति श्वगतौ भाष्यते । द्रातीति गतिकुत्सना कद्रातीति द्रातिकुत्सना चकद्राति कद्रातीति सतोऽनर्थकोऽभ्यासस्तदस्मिन्नस्तीति विश्वकद्रः ॥ कल्याणवर्णरूपः कल्याणवर्णस्ये-
15 वास्य रूपं कल्याणं कमनीयं भवति वर्णो वृणोतेः रूपं रोचतेः । एवं

---

2 *a. b.* omit अश्वस्य in the प्रतीक, *m.* स for तम्. 4 *a. b. d. m.* add इति after निर्ब्रूयात्. 5 *a. d.* एतस्मिन्नेवार्थे, *bi. m.* पौर्वापर्य° for °पर्यम्. 6. *b. d. m.* read वा after पूर्वम्, *a. bi.* omit it. 9 The text is accented by B1. B. and A though with a few mistakes; B. C. D. do not accent it, A. Bi. read किंचित् for कश्चित्. 11. A. B1. conclude II. i. 5. after निगमो भवति 12, 14 B1 विश्वकद्रा°, and विश्वकद्र·.

---

1 The reading स्त्रीकक्षस्य etc is very doubtful and looks to be inconsistent. तद्° can hardly refer to स्त्रीकक्ष which is nowhere spoken of in the text, but rather to मनुष्यकक्ष as is seen from the context and expressly stated next in the text बाहुमूलसामान्यादश्वस्य.

9. This verse is quoted by Rāmānuja as a variant in काठकोपनिषद्. It, however, occurs in S'wetās'watara ( III. 9. ) where it is not marked with accents.

तद्धितसमासांश्च निर्ब्रूयात्। नैकपदानि निर्ब्रूयान्नावैयाकरणाय नानुपस-
न्नायानिदंविदे वा। नित्यं ह्यविज्ञातुर्विज्ञानेऽसूयोपसन्नाय तु निर्ब्रूयाद्यो
वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा॥ ३॥

यस्मान् परमपरं वा न किंचिदस्ति यस्माच्च न किंचिदणीयो ,नापि ज्यायोऽन्यदस्ति स एव सर्वमित्यभिप्रायः । वृक्ष इव स्तब्धो नित्यमसंकोचविकाशधर्मा दिवि द्योतनवति स्वात्मनि सर्वर्द्धिभावेन तिष्ठति यस्तेन पुरुषेणेदं पूर्णं सर्वं जगदिति ।

समासस्यैव द्वितीयमुदाहरणं **विश्वकद्राकर्ष** इति । विश्वकद्रमाकर्षतीति विश्व-5कद्राकर्षः ।

आह । कः पुनरयं विश्वकद्र इति । **वीति चकद्र इति श्वगतौ भाष्यते ।** वीति चकद्र इति शब्दद्वयं श्वगतौ भाष्यते । श्वभिः साकं यो गच्छति मनुष्यस्तस्मिन् भाष्यते । **द्रातीति गतिकुत्सना ।** अत्र पुनर्द्रातीति गतिकुत्सना । 'द्रा कुत्सायाम् गतौ'—इत्युक्तम् । इदं हि तस्य कुत्सितगतित्वं यदस्य श्वभिः सह गमनम् । **कद्रातीति** 10 **द्रातिकुत्सना ।** इदानीं कद्रातीति द्रातिकुत्सना कुत्सितकुत्सनेत्यर्थः । इदमेव तावत्तस्य कुत्सितत्वं यदसौ श्वभिः सह गच्छति । इदमपरं कुत्सिततरं यद् गत्वा श्वभिः सह निहन्ति तस्मात्कद्रातीति कुत्सितकुत्सनेत्युच्यते । **चकद्राति कद्रातीति सतो-नर्थकोऽभ्यासः ।** अथेदानीं च इत्येव कद्रातीति एवमेव सतः शब्दस्वरूपस्यानर्थक एवाभ्यासः । यदेवोक्तं भवति कद्रातीति तदेव चकद्रातीति । **तदस्मिन्नस्तीति** 15 **विश्वकद्रः ।** तदस्मिन् द्वितयमप्यस्ति—कुत्सितत्वं कुत्सिततरगतित्वं च नानाप्रकारमिति विश्वकद्रः श्वजीवनः पुरुषः । तमपराधे कस्मिंश्चिद्दृतेमायमन्यो [illegible] आकर्षति स विश्व-कद्राकर्षः ।

अन्ये [illegible] ब्रुवते । श्वैव विश्वकद्रः । अस्यैव हि स्वभावत एव हिंसत्वाद्गतिः कुत्सिता । स च पुनः पादविकलः । अतस्तस्य कुत्सितकुत्सितत्वम् । वीत्युभयोरर्थयोर्भेत्यर्थः । तमा-20 कर्षति यः पुरुषः स विश्वकद्राकर्षः ।

---

1. *m.* adds इति निगमो भवति before यस्मात् and reads तस्मान् for यस्मान्; *a. b. d.* किंचिदप्यस्ति for किंचिदस्ति 2. *bi.* reads नित्यसंकोच°. 3. *bi.* reads सर्वविभा-वेन; *m* om. पूर्णं. 4. *bi.* here as well as below reads विश्वकद्र for विश्वकद्र of all our mss. 6, 8. *a. d.* omit the प्रतीक 9. *bi* om. गतौ after कुत्सायाम्, *a. d.* read गमनम् for द्राति of *bi.*, *b. m.* यदसौ for यदस्य, and गच्छति for द्राति of *bi.*, *a. d.* omit the प्रतीक 10. *bi.* omits इदमेव तावत् तस्य कुत्सितत्वं यदसौ श्वभिः सह गच्छति read by all our Mss. before इदमपरम् 11 *b.* कुत्सिततरत्वम् for °तरम्; *d* omits सह. 12. *b. d.* add स्वस्थानि before निहन्ति. 12, 14. *a. d.* omit the प्रतीक. 15. *d.* विश्वकद्रम् for °कद्र. 16. *bi.* reads अन्योन्य for अन्यो य of all our mss., *m.* अकर्षति for आक°. 18. *a b. d.* तस्यैव for अस्यैव, *d.* वयम् for च 19 *m.* reads इति for वीति.

---

8. द्रा-धा० पा०-अदादि ( 44 )

अधुना रूपसमासं दर्शयति कल्याणवर्णरूपः कल्याणवर्णस्येवास्य रूपम्।
कल्याणवर्णं सुवर्णम् । तस्येव यस्य रूपं स कल्याणवर्णरूपः । अग्निरन्यो वा कश्चित् ।
कल्याणादिशब्दान् विग्रहप्रसक्तान् निर्ब्रवीति । कल्याणं कमनीयं भवति ।
प्रार्थ्यते हि तत् सर्वेणैव । वर्णो वृणोतेः । आवृणोति हि स आश्रयम् । रूपं
रोचतेः । तद्धि रोचिष्णु भवति । एवं तद्धितसमासान्निर्ब्रूयात् इत्युपसंहारवचनम्॥ 5
नैकपदानि निर्ब्रूयात् प्रकरणोपपदरहितानि सन्ति केवलान्येव परेणाभिद्रोहबुद्ध्या
पृच्छ्यमानानि न निर्ब्रूयात् न निर्वक्तव्यानीति । किं कारणम् । तेषां प्रकरणादुपपदाद्वार्थः
शक्यनैवधारयितुम् । सोऽसौ प्रकरणानभिज्ञोऽन्यथैव निर्ब्रूयात् ततश्च प्रत्यवायेन योगाद-
पहारश्च स्यात् । तद्यथा ओहेत्येतदेकं पदं प्रकरणोपपदरहितं न विज्ञायते किं हन्तेरुत
"ओहाक् त्यागे" इत्यस्य धातोः स्यादिति । तत् पुनरेतत् "मा न एकस्मिन्" इत्ये-10
तस्यां पूर्वस्यामृचि यदेतन्मा वधीरिति पदमेतस्मादृस्यते हन्तेः स्यादिति। किं कारणम्।
विज्ञातप्रकरणोपपदस्य हि समग्रमर्थकरणं न्याय्यमित्येवमनवगतसंस्काराणामेकपदानां
प्रकरणादर्थावधारणमुपपदाद्वा शक्यते कर्तुम्। अत इदमुक्तं नैकपदानि निर्ब्रूयादिति ॥
नावैयाकरणायेति । उक्तं निर्वचनलक्षणम् । अधुना यस्मै निर्वक्तव्योयमुक्त-
निर्वचनलक्षणः समाम्नायस्तस्य लक्षणं वक्तव्यमिति तदर्थमिदमारभ्यते नावैयाकरणाय।15

---

1. *a. b. d.* read कल्याणवर्णरूपः only in the प्रतीक. 4 *b₁*. omits हि after प्रार्थ्यते read by all our Mss. 5 *b₁*. adds तद्धि रोचते after the प्रतीक. *bi*. रोचिष्णु for रोचिष्णु 6. *b₁*. °विहितानि for °रहितानि. *b₁* adds तानि after सन्ति, and its variant gives सहितानि instead, *d* अभिद्रोहि° for अभिद्रोह°. 7. All Mss., except *m*, and printed editions read पृच्छमानानि which is grammatically incorrect. 9. *b* योगादपहारस्य° for योगादपहार°. The reading of the text hardly makes any meaning though supported by the Mss. and the editions. If possibly °दप° in *b* be read as °द्युप° some sense is made out. *b₁*. इत्येकं for इत्येतदेकम्. 10. The Mss. and *b₁*. do not read the whole verse as read by Jivânanda. 11. *bi*. om. पूर्वस्यां°. 12. *a. d.* read सुपाकरणम्, *m*. सपाकरणम्, *bi*. सर्पकरणम्, and the variant shown by *b₁*. सपाकरणम्; *b*. reads समग्रस्य यथार्थ व्याकरणं न्याय्यम् which perhaps makes better sense, but it is not introduced in the text as it is supported by no other Mss.

---

10 द्रा–वा० पा०–खुदोत्यादि ( 8 )
For quot. *vide* VIII. 45 34:—

मा नु एकस्मिन्नागसि मा द्वयोरुत त्रिषु ।
वधीर्मा शूर भूरिषु ॥

यस्तावदवैयाकरणस्तस्मै न निर्वक्तव्योयं समाम्नायो न ह्यसावलक्षणज्ञत्वात् श्रुत्वापि निरुच्यमानमेतद्बुध्येत् । ततो व्यर्थ एव श्रमः स्यादिति ।

किं च **नानुपसन्नाय** । किमतिमहदद्भुतमनेन कृतं यद्व्याकरणमधीतमित्येतावता गौरवेण वैयाकरणायापि न निर्ब्रूयात् । धर्मो हि सर्वथैवापरित्याज्यः । तस्माद्वैयाकरणा-
5 यापि सम्यगुपसन्नाय परां शिष्यवृत्तिमास्थितायैव निर्ब्रूयात् ।

नैवमेव । किं च **अनिदंविदे वा** । वैयाकरणोपि जडः कश्चिदसमर्थ एव वेदितुं स्यात् यत्तु वेदितव्यमध्यात्मं देवतादि किंचित् । तस्मै वैयाकरणायापि इदं वेदितुमसमर्थायानिदंविदे नैव निर्ब्रूयात् । अथवा । इदमित्यात्मपर्यायत्वाच्च । इदंविदे आत्मविदे योगिने । स ह्यात्मज्ञानविधूतकल्मषोल्पेनैव यत्नेन योद्धुं सूक्ष्मानर्थान् शक्त इतीदंविदे
10 निर्ब्रूयात् । अथवा यत्किंचिच्छास्त्रमिदमिति निर्दिश्यते । येन ह्यन्यत्किंचिदश्रुतपूर्वं शास्त्रं तस्मै न निर्ब्रूयादिदं निरुक्तशास्त्रमनास्फालितहृदयकुड्मलाय ।

किं कारणम् । **नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया** । यो हि न विजानाति नावबुध्यते तस्याविज्ञातुर्नित्यकालमेव विज्ञाने असूया । स ह्यनवबुध्यमान आत्मीयं दोषमाचार्य एवावसृजति स्वयमेव तावदयं नावबुध्यते किमस्मान् बोधयिष्यतीति । एतस्मात्का-
15 रणादश्रुतपूर्वान्यशास्त्राय खिन्नमनसे नेदं निर्ब्रूयात् ॥

**उपसन्नाय तु निर्ब्रूयात् यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा** । य एव तु मेधावी स्यात् अन्यजन्मान्तरानुभावितया प्रज्ञया युक्तो यो वा तपस्वी कामं ताभ्यामवैयाकरणाभ्यामपि निर्ब्रूयादेव । न हि तयोरसाध्यं किंचिदस्ति । तपसा हि स्वयमपि वेदार्थः प्रादुर्भवेदेव यथा मन्त्राः प्रादुरभूवन् पूर्वेषामृषीणाम् । मेधाव्यपि च
20 स्वयमुत्प्रेक्षितुं शक्नुयात्किमुतोच्यमानमवबोद्धुम् । यो वान्यः कश्चिदलं पर्याप्तो विज्ञातु-

---

3. *a. d.* किमपि for किमति°. 5 *m.* उपपन्नाय and a variant of *bi.* उपपन्नाय. 6. *bi.* अवैयाकरणो for वैयाकरणो. 7–8. *a. d.* first read तस्मै to निर्ब्रूयात् and then अनिदंविदे [illegible] किंचित्, which is not correct 10. *bi.* अश्रुतं पूर्वं शास्त्र for अश्रुतपूर्वं शास्त्रम् of all our Mss. 11. *a. b d.* apparently add मनास्फालितहृदयकुड्मलाय after °कुड्मलाय. 14. *a. b.* अवसज्जति, *d m.* अवसज्जति, *bi.* अवसृजति; *bi.* न बुध्यते for नावबुध्यते. 15 *a d.* apparently अखिन्नमनसे, *bi.* अखिन्नमनसे, *m.* खिन्नमनसे. 19. *bi.* omits यथा मन्त्राः प्रादुरभूवन् read by all our Mss.

मेनच्छात्रं मवेद्दृढग्राही स्थिरबुद्धिस्तस्मै निर्ब्रूयादेव सर्वथा । अनुपसन्नाय नैव निर्ब्रूयाद्यपि तपस्वी मेधावी दृढग्राही वा । उक्तं हि

> "यथान्यायेन निर्ब्रूयाद्यश्चान्यायेन पृच्छति ।
> तयोरन्यतरो मृत्युं विद्वेषं वाधिगच्छति" ॥ ३ ॥

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि । 5

असूयकायानृजवेऽयताय न मां ब्रूया वीर्यवती तथा स्याम् ॥

य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन् ।

तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्चनाह ॥

अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।

यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥ 10

यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।

यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥

इति । निधिः शेवधिरिति ॥ ४ ॥

अथाप्येतमर्थमधिकृत्योदाहरन्ति। विद्या ह वै ब्राह्मणमाजगामेति। विद्या किल कामरूपिणी भूत्वा विद्याधिदेवता वा संयतात्मानं विदितवेदाङ्गवेदार्थं ब्राह्मणं प्रति कंचिदा- 15

---

1. a. d. add यतात्मानं विदितवेदाङ्गवेदार्थं ब्राह्मणम् after सर्वथा, b. adds यतात्मने विदितवेदाङ्गाय वेदार्थं ब्राह्मणाय, d. reads अनुपसन्नाय नैव निर्ब्रूयात् । 2. m. omits उक्तं हि. 5. et. seq. This text, known as विद्यासूक्त, is not found elsewhere in the vedas. According to the custom of the Vedic students it is generally recited without accents. B. does not accent it, C. D. do so imperfectly, leaving generally second lines without accents, A. accents it but not very correctly; R. Bi. accent it but the last line is not accented. We print accents according to these, but it seems that these accents are musical and not grammatical. 13. A. Bi. conclude sect. 7 after शेवधिरिति and then read इति द्वितीयाध्यायस्य प्रथमः पादः. 14. m. उदाहरति for °हरन्ति and reads प्रतीक up to स्याम्. 15 bs. omits वा after विद्याधिदेवता, b. adds तम् after वा, b. °वेदार्थब्राह्मणम्.

जगाम। तमेत्य प्रह्वीभूतोवाच। किमिति। **गोपाय मा**–रक्ष माम्। ततः **ते** अहं गुप्ता सती **शेवधिः** भविष्यामि सुखनिधानमित्यर्थः। आह। कुतः पुनस्त्वां रक्षामि। **असूयकायानृजवेऽयताय।** असूयकः–परापवादशीलः। अनृजुर्यस्य मनोवाग्देहेष्वसमाः प्रवृत्तयः। अयतो–विप्रकीर्णेन्द्रियः यत्किञ्चनकार्यशुचिः। एवंलक्षणाय **न मा**
5 **ब्रूयाः** त्वम्। किं तथा भविष्यति। **वीर्यवती तथा** अहं तव **स्यां**–भवेयमित्यर्थः।

**य आतृणत्त्यवितथेन कर्णौ।** अधुना शिष्योपदेशमाह। य आतृणत्ति–आभिनत्ति अपिहिताविव सन्तौ कर्णौ विवृणोति। अवितथेन सत्येन ब्रह्मणा। कथं पुनरातृणत्ति। **अदुःखं कुर्वन्नमृतं संप्रयच्छन्।** यो हि किंचिदातृणत्ति स दुःखयति। अयं पुनः सुखमातृणत्ति। किं च अमृतत्वप्राप्तिहेतु ज्ञानं संप्रयच्छन् य आतृ-
10 णत्ति तस्मै किमिति। उच्यते। **तं मन्येत पितरं मातरं च** नेतरौ मातापितराविति अभिप्रायः। उक्तं च

" उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् " ॥

**तस्मै** मातापितृभूताय गुरवे **न द्रुह्येत् कतमच्चनाह**–कदाचिदपि आपद्यपि
15 कष्टायामित्यभिप्रायः।

अधुना इतरान् दुष्टशिष्यानभिशपन्ती विद्या इदमाह। **अध्यापिता ये गुरुं नाद्रियन्त** इत्यादि। अध्यापिताः सन्तो ये गुरुं प्रति नाद्रियन्ते आदरं कुर्वन्ति। के पुनस्त इति। उच्यते। **विप्राः**–मेधाविनः सन्तो गृहीतविद्याः। कथं पुनर्नाद्रियन्ते। **वाचा मनसा कर्मणा वा।** आह। किं तेषामिति। उच्यते। **यथैव ते** तस्य **गुरोः न**
20 **भोजनीयाः**–न भोज्या न भोजनार्हाः **तथैव तान् तत् श्रुतम्** अपि **न भुनक्ति** न पालयति श्रुतफलेन न संयुनक्तीत्यर्थः।

---

2 *d. bi.* सेवधि°; *b. m.* कथम् for कुतः; *b. m.* add उच्यते after रक्षामि. 3. *m.* omits the प्रतीक. 4. *m.* विप्रकर्ण° for विप्रकीर्णे°; *bi.* यत्किञ्चन काया शुचि°, we read with our Mss.; *b. d.* read माम् for मा 6. *d.* omits कर्णौ, *m.* reads the प्रतीक to कतमच्चनाह 8. *d. m.* read अदुःखं कुर्वन् only in the प्रतीक. 9. *m.* °हेतुम् for °हेतु 13. *a. d.* read प्रेत्य चेह च विप्रस्य ब्रह्मजन्म हि शाश्वतम्. 16 *a. d.* read विद्याभिशपन्ती आह; *a. d.* omit the प्रतीक. 17. After कुर्वन्ति, *b. m.* read–आह कतमस्ते इति उच्यते. 19. *m.* omits वा after कर्मणा, *d.* अथैव for यथैव; *a* omits तस्य 20. *b. m.* omit न भोज्या. 21. *bi.* पालयन्ति, *b. m.* read श्रुतं फलेन for श्रुतफलेन.

---

13. For the quot see मनुसंहिता. II. 146.

अधुना यस्मै वक्तव्या तस्य लक्षणं ब्रवीति। यमेव विद्याः–आनीयास्त्वं शुचिमप्रमत्तं यर्मानियमेषु। मेधाविनं च ब्रह्मचर्येणोपपन्नम्। किं च यस्ते न द्रुह्येत् –न द्रोहमुपगच्छेत्। कतमच्चनाह–कदाचिदपि सर्वास्वप्यापत्सु गोपायमानः। तस्मै मा ब्रूयास्त्वं निधिपाय–गोप्ते ब्रह्मन्।

आह निधिः क इति। उच्यते। शेवधिरिति। शेव इति सुखनाम सुखनिधानमित्यर्थः। ब्रह्मलोको हि निधिः सुखानां कृत्स्नस्य जगतो यज्ञद्वारेण अत इदमुक्तं निधिः शेवधिरिति ॥ ४ ॥ 5

अथातोनुक्रमिष्यामः। गौरिति पृथिव्या नामधेयं यद्दूरं गता भवति। यच्चास्यां भूतानि गच्छन्ति। गातेर्वौकारो नामकरणः। अथापि पशुनामेह भवत्येतस्मादेव। अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति। 10

"गोभिः श्रीणीत मत्सरम्"।

इति पयसः। मत्सरः सोमो मन्दतेस्तृप्तिकर्मणो मत्सर इति लोभनामाभिमत्त एनेन धनं भवति। पयः पिबतेर्वा प्यायतेर्वा। क्षीरं क्षरतेर्घसेर्वेरो नामकरण उशीरमिति यथा।

"अंशुं दुहन्तो अध्यासते गवि"। 15

इत्यधिषवणचर्मणः। अंशुः शमष्टमात्रो भवत्यननाय शं भवतीति वा। चर्म चरतेर्वोच्चृत्तं भवतीति वा। अथापि चर्म च श्लेष्मा च।

"गोभिः संनद्धो असि वीळयस्व"।

इति रथस्तुतौ। अथापि स्नाव च श्लेष्मा च।

"गोभिः संनद्धा पतति प्रसूता"। 20

इतीषुस्तुतौ। ज्यापि गौरुच्यते गव्या चेत्ताद्धितमथ चेन्न गव्या गमयतीषूनिति ॥ ५ ॥

---

1. *Bi.* तम् for तस्य. 3. *Bi.* omits गोपायमानः after आपत्सु read by *a. b d. m.* 4. *a. b. d.* मम् for मा. 5. *d.* here as well as in the following lines reads सेवधिः. 6. *a. d* read ब्रह्मकोशो हि निधिः सुखानाम् ( better ). 13. A. D. पतेन for एनेन. 16. B. marginally reads शमिष्टमात्रो.

'समाम्नायः समाम्नातः स व्याख्यातव्य' इति प्रतिज्ञातम् । सा च पुनरियं व्याख्या सामान्या वैशेषिकी च । तत्र सामान्या सर्वेषां नाम्नामिदं सामान्यलक्षणमिदमाख्यातानामिदमुपसर्गाणामिदं निपातानामिति । सोऽयमनयैवप्रकारया व्याख्यया कृत्स्नः समाम्नायो व्याख्यातः । तदनुपयुक्तान्येव च शास्त्रारम्भप्रयोजनान्युक्तानि । आगमश्च परिशोधितः ।
5 वेदो वेदाङ्गव्यूहश्च सप्रयोजन उक्तः । निघण्टुसमाम्नायनिरचना चोपदिष्टा प्रकरणत्रयविभागेन । निर्वचनलक्षणं चानेकप्रकारमुक्तम् ।

अथेदानीं विशेषव्याख्यया प्रतिपदमयं समाम्नायो व्याख्यातव्यः । तदधिकारार्थोऽयम् अथशब्दः । अतःशब्दः क्रमे हेतौ वा । सामान्यव्याख्यानादनन्तरं विशेषव्याख्यानमेवावसरप्राप्तमित्येवं क्रमे । अथवा हेतौ । यस्मात् सामान्यतः समाम्नायो व्याख्यातोऽत
10 इदानीं विशेषतोऽनुक्रमिष्यामः आनुपूर्व्येण क्रमिष्यामो–वर्णयिष्यामः । व्याख्ययेति शेषः ।

आह । किंलक्षणा पुनरसौ व्याख्येति । उच्यते । तत्त्वपर्यायभेदसंख्यासंदिग्धसंदिग्धोदाहरणतन्निर्वचनविभागेन यदाख्यानं सा व्याख्या नैघण्टुके प्रकरणे । तद्यथा । तत्त्वम् 'गौरिति पृथिव्या नामधेयम्' इत्येवमादि । पर्यायवचनं–प्रसिद्धेनाभिधानेनाप्रसिद्धस्यार्थस्य ख्यापनम् । तद्यथा । पृथिव्या नामधेयं गौरिति । भेदो–व्युत्पत्तिरिति समानार्थः ।
15 तद्यथा । 'यद्दूरं गता भवति' इत्येवमादि । संख्या । तद्यथा । 'पृथिवीनामधेयान्येकविंशतिः' । संदिग्धः 'तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा सा पृथिव्या संदिह्यत' इत्येवमादि । संदिग्धोदाहरणं 'य ईं चकार' इत्येवमादि ।

---

1 *d m.* read अथातोऽनुक्रमिष्यामः before समाम्नाय, *d* ज्ञातम् for प्रतिज्ञातम् 2. *d m* सर्वनाम्नाम् for सर्वेषां नाम्नाम् 3 *b₁* अनयैव प्रकारया, *a d* यथप्रकारया. 5. *d m* वेदवेदाङ्ग° for वेदो वेदाङ्ग° of others, *d* चोदिष्टा for चोपदिष्टा, and °प्रविभागेन for °विभागेन 10. *m* omits क्रमिष्याम, *b b₁* व्याख्ययेति, *a d. m.* व्याख्यायेति 11. *a b d m.* omit °संदिग्ध° after °संख्या°, 12. *b₁ m.* नैघण्टुप्रकरणे for नैघण्टुके प्रकरणे of *a b. d*; *m.* यथाख्यानं for यदाख्यानं; *m.* omits तत्त्वम्.

---

1. प्रतिज्ञात in Nir. I. 1.

2. The लक्षण of नाम and आख्यात in Nir. I. 1., उपसर्गलक्षण in Nir. I. 3, and that of the निपाता in Nir I 4–11,

4. प्रयोजनानि in Nir I. 12–14, आगमशुद्धि Nir. I. 15–16.

5. उक्तः in Nir. I. 17–19, प्रकरणत्रयविभागः Nir. I. 20

6. उक्तं Nir. II 1–4

15. ff. For the quotations after संख्या see Nir. II, 7–8.

प्रहृतासुपगतम् । शृतशीतेन तृतीयसवने वा पूतभृत्याशिरेण ततोऽनतिक्रान्तकालं जुहुत । एवं मन्त्रविधानादशक्यत्वाच्च गोभिः श्रयणस्य गव्येन पयसेति गम्यते ।

**मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः ।** तृप्यन्ति ह्यनेन देवताः ।

शब्दसामान्यप्रसङ्गप्रसक्तमुच्यते । **मत्सर इति लोभनामाभिमत्त एनेन धनं भवति ।** तेन ह्याविष्टो धनाभिमुख्येन मत्तो भवति ।

पर्यायाख्यानप्रसक्तं निरुच्यते । **पयः पिबतेर्वा** पानार्थस्य । पीयते हि तत् । **प्यायतेर्वा** वृद्ध्यर्थस्य । तेन हि वर्धन्ते प्राणिनः ।

प्रसक्तानुप्रसक्तं निरुच्यते । **क्षीरं क्षरतेः**श्चोतनार्थस्य श्चोतते हि तद्घसः । **घसे-र्वैरो नामकरणः ।** अदेर्घस्लृ आदेशः क्रियते अतस्तेनैव सिद्धरूपेण निर्दिश्यते । धात्व-
10 न्तरमिति वा केचित् । ज्ञापकं च ददाति । **उशीरमिति यथा ।** वश कान्तौ तस्य कृतसम्प्रसारणस्य ईरप्रत्ययेनोशीरमिति भवति । तद्धि सौगन्ध्यात्कान्तं भवति ।

**अंशुं दुहन्तो अध्यासते गवीत्यधिषवणचर्मणः** सूक्तवदभिधायकः ।

"ते सोमादो हरी इन्द्रस्य निंसतेंऽशुं दुहन्तो अध्यासते गवि ।
तेभिर्दुग्धं पपिवान्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते ॥"

15 एषा जगती । अर्बुदो नाम काद्रवेय ऋषिस्तस्यार्षम् । ग्रावस्तुतौ विनियुक्ता । त एते ग्रावाणः सोमादः—सोमभक्षयितारो यदाभिषवकर्मणि प्रवर्तन्ते अथ तदा हरी—इन्द्र-स्याश्वौ यज्ञागमनार्थमेनेषां शब्दमुपश्रुत्य संस्कृत सोम मन्वानो रथे योगमिच्छन्तावास्मन

---

1. *b1* °प्रहाणामुपगतम् for °प्रहृतामु°, ■ *m* °संवेनेन for °सवने; *b1* जुहुत for जुहुन 2 *a d*, एव for एवम् 8. *m* reads from पयस to उशीरमिति यथा as the प्रतीक before मत्सर 4. *a b d* omit the प्रतीक 8 *m* तद्घस . 9. *a*. *d* नामकरणप्रत्ययः for नामकरण , *b* घस् for घसृ ; *a b*. *d m* add घसेर्वैरो नामकरणे इति after निर्दिश्यते. 10 *a*. *b d m* omit यथा 11 *b1*. *m* सौगन्ध्याकान्तम्, ■ *d*. सौगन्ध्यात्कान्तम् 15 *a b d m* add सर्पे before ऋषि . *m*. omits ते. 16. ■ अभिषवण° for अभिषव° .17. *a*. omits यज्ञा° of यज्ञागमनार्थम्

---

6. पिबते.-धा० पा०-भ्वादि ( 950 )
7 प्यायते-धा० पा०-भ्वादि ( 489 )
8. क्षरते-धा० पा०-भ्वादि ( 876 )
10 वश-धा० पा०-अदादि ( 70 ).
13. The quot. is RS X. 94. 9.

ऋजीषं मक्षयिष्यन्ताविन्द्रं च सोमं पाययिष्यन्तो स्वयमेव निंसते–नीचैर्नमेते । सुता-
वानां हे इन्द्र गच्छ यज्ञायतनं संस्कृतः सोम इति । तदेव च ऋत्विजोऽपि त्वरमाणा-
इन्द्रोपस्थानकालमभ्यर्णं मन्वानाः अंशुं–सोमांशमभिषुत्य दुहन्तः–प्रपूरयन्तः । गवि
अधि–गोरुपरि गोरवयवेविषयवणचर्मणि एतत्कर्म कुर्वाणा इन्द्रं प्रतीक्षमाणा आसते ।
अथ स इन्द्र एत्य तेभिर्दुग्धमृत्विग्भिः प्रक्षारितं पपिवान्–पीतवान् सोम्यं मधु–सोम- 5
मयं । तेन तृप्तस्ततोनन्तरं वर्धते वीर्येण प्रथते च शरीरेण विस्तीर्यते विस्तीर्णश्च स्वेन
वीर्येण मेघं विदार्य वृषायते वर्षं प्रवर्तयते । तदिदं सर्वमपि वर्षादि जगदनुग्राहकमैन्द्रं
कर्माभिषवद्वारेण सोमाभिषवप्रवाधीनमित्येवं भावस्तुतिः ।

निगमप्रसक्तं निरुच्यते । अंशुः शमष्टमात्रो भवति । व्याप्तमात्रो हि स यज-
मानेन तस्यैव शं भवति–सुखो भवति । इष्टसोमो ह्यनृणोहमिति विगतमनोदुःखो 10
भवति । अननाय शं भवतीति वा । अननाय–जीवनाय शं सर्वेषां भूतानां
भवति सुखो भवतीति वा । यज्ञो हि वर्षे प्रवृत्तिहेतुस्ततश्च सर्वभूतानि सुखं जीवन्ति ।

व्याख्यानप्रसक्तं निरुच्यते । चर्म चरतेर्वा चरितं हि तत्सर्वस्मिन् शरीरे गत-
मित्यर्थः । उच्चृत्तं भवतीति वा । उच्चृत्तं–उत्कर्तितं शरीरादिति वा ।

अथापि चर्म च श्लेष्मा च गोशब्देनोच्यत इति शेषः । गोभिः संनद्धो 15
असि वीळयस्वेति रथस्तुतौ । स हि चर्मणावनद्धो भवति श्लेष्मणा च तस्या-
रादयः संश्लेषिता भवन्ति ।

---

1. *a. b d.* नमेते, *bı* नामेने, *m.* नमते; *bı* सुको आयाहि इन्द्र for सुतावानां हे इन्द्र of all our Mss. 2. *a. d* तथैव for तदेव. 3. *bı* इन्द्रो स्थान° for इन्द्रो-पस्थान°, ■ *b d. m.* अभ्यग्र, *bı.* अभ्यर्णं°, for अभ्यर्णम्, *a. m* सोमांशुम् and *b.* सोमा-शुम् for सोमांशम्. 5. *b. m.* प्रक्षालितं, *bı* प्रचारितम्. *a. d.* प्रक्षारितम् 6. *a. b, d m* तत्पानानन्तरम् for ततोनन्तरम्; *bı* वर्धते वीर्येण । अथ तेन च शरीरेण प्रथते विस्तीर्यते for वर्धते वीर्येण प्रथते ■ शरीरेण विस्तीर्यते of *a. b. d. m*; *d.* वीर्येभिः for वीर्येण; *b* विस्तार्यते for विस्तीर्यते 7 *m* मेघम् for मेघम् 8. *bı.* °मिषवोप्र° for °मिषवप्र° of *a b. d m* 9. *a. b. d.* read स. after हि; *bl.* omits it. 10. *bı.* reads सुखी for सुखो. 11. *a. d. m.* omit the प्रतीक. 12. *m.* सुखा for सुखो, ■ *b. d.* वर्षप्रवृत्ति° for वर्षे प्रवृत्ति°. 13. *a b. d. m.* omit the प्रतीक 14. *b.* वर्त्कानितम् for वल्कतितम्. 16. *d.* तस्य अरादयः. 17. *a. d.* सश्लेष्मका for संश्लेषिता

---

15. The quotation occurs in RS. VI. 47. 26, VS. XXIX. 52; and AS. VI. 125. 1:—

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥

अथापि स्नाव च श्लेष्मा च गोशब्देनोच्यत इति शेषः। "गोभिः संनद्धा पतति प्रसूता" इतीषुस्तुतौ सा हि स्नाव्ना वेष्टिता भवति श्लेष्मणा च संश्लेषिता।
ज्यापि गौरुच्यते। सा पुनश्चेद्यदि गव्या तद्धितमभिधानम्। अथ पुनर्न चेद्गव्या गमयतीषूनिति गोरन्यद्द्रव्यमपि ॥ ५ ॥

"वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः प्र पतान् पुरुषादः।"

वृक्षे वृक्षे धनुषि धनुषि वृक्षो व्रश्चनाद्वृत्वा क्षां तिष्ठतीति वा। क्षा क्षियतेर्निवासकर्मणः। नियता मीमयद्गौः शब्दं करोति मीमयतिः शब्दकर्मा। ततो वयः प्रपतन्ति पुरुषानदनाय। विरिति शकुनिनाम वेतेर्गतिकर्मणः। अथापीषुनामेह भवत्येतस्मादेव। आदित्योपि गौरुच्यते।

"उतादः परुषे गवि।"

पर्ववति भास्वतीत्यौपमन्यवः। अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यमादित्यतोस्य दीप्तिर्भवतीति। "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः" इत्यपि निगमो भवति सोपि गौरुच्यते "अत्राह गोरमन्वत" इति तदुपरिष्टाद्व्याख्यास्यामः। सर्वेपि रश्मयो गाव उच्यन्ते ॥ ६ ॥

---

1 *a b d m* omit इति शेष, *m* reads संश्लेषिताथो° for श्लेष्मा च गो°. 3. *a b d m* omit चेत् 4. *d* omits न चेत्, *a b d* अन्यद्द्रव्यमपि, *m.* अन्यतरद्द्रव्यमपि, *b₁* अन्यद्द्रव्यमपि. 6. B C. D R *m.* read व्रश्चनाद् वृत्वा क्षां तिष्ठतीति वा। क्षा क्षियतेर्निवासकर्मण। नियता &c, B₁ A omit it 9. A. reads °पि परुना° for °पीषुना° 13. B₁ सुषुम्ण, B. C D R सुषुम्न 16. B C. D. R. conclude section ॥ ६ ॥, A. B₁ section ॥ २ ॥ after उच्यन्ते

---

1 The quot occurs in RS VI 75 11; and VS. XXIX. 48:—

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥

15 व्याख्यास्याम—in Nir. IV. 25.

" वृक्षेवृक्षे नियता मीमयद् गौस्ततो वयः प्रपतान् पूरुषादः ।
अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत् ॥"

वसुक्रस्यैन्द्रपुत्रस्येदमार्षम् । त्रिष्टुबैन्द्री । महाव्रते मरुत्वतीये शस्यते । इन्द्रो भगवानैश्वर्ययोगात् संग्रामेष्वनेकबाहुर्भूत्वानेकानि धनूंष्यादत्ते तानि मन्त्रदृगृषिराह । वृक्षे-वृक्षे-वृक्षावयवे धनुषि धनुषि यावन्तीन्द्रेण गृहीतानि धनूंषि तेषु सर्वेषु प्रत्येकं नियता निबद्धा गौः गव्या गमयित्री वा शराणामिन्द्रबाहुकृष्टा मीमयत् । मीमयति -शब्दं करोति । जात्यभिप्रायेणैकवचनं ततः शब्दकरणानन्तरमेव प्रपतान्-प्रपतन्ति वयः । अथवा ततस्तस्मो धनुषो वयः पक्षवत्त्वसम्बन्धात् इषवोऽपि वयः -पक्षिणः । अथवा वेवेर्गतिकर्मणः गत्यर्थादेव इषवो वयो न गुणवृत्त्या । ते प्रपतान् -प्रपतन्ति पुरुषादनाय-भक्षणाय । ते ह्यसूना प्राणान्भक्षयन्ति । अथायमे- 10
वमतिप्रभाव इन्द्र इति ज्ञात्वा विश्वं-सर्वं भुवन-भूतजातं यावत्किंचिदवस्थितं कर्मणि भयाते-बिभेति । अथ बिभ्यत् किं करोति । इन्द्रायेन्द्रार्थं सुन्वदभिषवमुचिते काले कुर्वत् ऋषये च-ऋत्विजे शिक्षत्-दक्षिणां ददाति । इन्द्रोऽस्मत्सकाशादपहरिष्यतीति सर्वमन्यद् परिहाय । य एवंप्रभाव इन्द्रस्तं वयमभिमतार्थसिद्धये स्तुमः ।

निगमप्रसक्तं निराह वृक्षो व्रश्चनादिति । स हि वृश्च्यते छिद्यत इन्धनार्थम् । 15
मन्त्रव्याख्याने गवार्थत्वात् शेषो विव्रियते । एवं तावदेकदेशे कृत्स्नवदभिधानं भवतीति प्रदर्शितम् ।

अथेदानीमन्येष्वर्थान्तरेषु गोशब्दोऽभिवर्तत इति [illegible] दर्शयति । एतद्दैकपदिके वक्तव्यमिह तु गोशब्दप्रसक्तमुच्यते । आदित्योऽपि गौरुच्यते एतस्मिन् मन्त्रे 20

---

1. m. reads प्रतीक from वृक्षे to स्तुमः before the Rik. 3. a. b. d. °पुत्रस्येषमार्षम् 4. d. m. मन्त्रदृक् for मन्त्रदृगृ 5. a. d. add वृक्षे before वृक्षावयवे 6. m. निबद्धानि for निबद्धा 7. a. d. m. omit प्रपतत् 8. b omits ततः; b. m. इषवो for इषवोऽपि 9. a. d. m. तेन for ते. m. प्रपतन for प्रपतान् 11. a. b. d. अतिक्रान्त. b. अतिक्रान्त 12-13 m. सुन्वते and कुर्वते for सुन्वत् and कुर्वत् 13. m. ऋत्विजम् for ऋत्विजे; b. ददते for ददाति of a. b. d. m. 14. m. परिहारात् for परिहाय. 16. b. m. मन्त्रव्याख्याने, a. d. मत्र व्याख्याने, for मन्त्रव्याख्याने of b; m. विशेष for शेषः. 18. a. d. add अपि after अन्येषु 19. b. एतद्दैक°, b. एतद्दैक°, for एतद्दैक° of others; m. reads the प्रतीक आदित्योऽपि etc. to [illegible].

---

1. The quot. is RS. X. 27. 22.

" उतादः परुषे गवि सूरश्चक्रं हिरण्ययम् ।
न्यैरयद्रथीतमः ॥

भरद्वाजस्येयमार्षम् । गायत्री । पौष्णी । पूषा पुनरादित्यो नैरुक्तानां दृष्टा ह्यन्यत्र इयं वै पूषेति भूमिरुच्यते । उतादः । उत 'अपि अथ इति छन्दसि समानार्थाः । 5 अपि चक्रमीरयति । अपि रसानादत्ते । अपि तमांस्यपहन्ति । अदः—अमुष्मिन्नादित्य-मण्डले परुषे—पर्वभिस्तद्वति । अथवा भास्वति—भासा तद्वतीति । 'अहोरात्रादि पर्व तद्वतीत्यौपमन्यवः । 'गवि -गमनशीले मुहूर्तमप्यनवस्थायिनि 'सूरः—सूर्यः अवस्थितः पूषादित्यमण्डलान्तःपुरुषः । तदेव पर्ववद्भास्वद्वा । चक्रं—चकनं 'क्रमणं वा गमनशीलं मण्डलं हिरण्ययं तेजोमयं चक्रं चक्राकृति न्यैरयत् नियतगमनवृत्तिना 'मार्गेण नित्य-10 कालमीरयन्नुदयास्तमयमध्यंदिनकालोपलक्षणार्थम् । अथवामुष्मिन् मण्डलेवस्थितः 'पर्ववति मण्डलान्तःपुरुषः सूर्यो भगवान् चक्रं लवक्षणनिमेषत्रुटिमुहूर्ताहोरात्रार्धमास-मासर्त्वयनसंवत्सरलक्षणं कालचक्रं सर्वभूतहारि हिरण्यं हिरण्मयं सर्वभूतविनाशस्थिति-हेतु न्यैरयन्नित्यमीरयति । कीदृशः पुनः स सूर्यो य ईरयति । रथीतमः अन्येपि रथिनः सन्ति अयं तु मुहूर्तमप्यनवस्थितरथ इत्यतो रथीतमः । यः एवंगुणयुक्तः पूषा तं 15 वयमभिप्रेतार्थसिद्धये स्तुमः ।

'अथाप्यस्यैको 'रश्मिश्चन्द्रमसं प्रति दीप्यते । एको रश्मिरादित्यस्य सुषुम्णो नाम चन्द्रमसि प्रत्यवस्थितो दीप्यते । तदेतेन मन्त्रार्थविदा मन्त्रानुपेत्ये-

3. *a. b d. m*, पौष्णे सूक्ते for पौष्णी of *bi*. 4 *m* अद for अथ; *m* समानार्थं. 5. *m* ईरयत् for ईरयति, *bi*. अपिचक्रमीरयः for अपि चक्रमीरयति 6 *bi*. परुषि for परुषे, *a*. reads वर्तीति अहोरात्रादि पर्वभिस्तद्वति. *b d*. पर्ववति अहोरात्रादिपर्व-भिस्तद्वति, *m* पर्वणि for पर्ववति otherwise like *b. d*; *a. d* भासा तद्वतीत्यौपमन्यवः. 7. *b m*. पर्ववती° for पर्व तद्वती°. 8. *d* पूषाभ्यादित्य° for पूषादित्य°. 9. *a b. d*. read हिरण्ययम् for हिरण्ययम्, *bi* चक्राकृतिः for °कृति of *a b d. m*.; *b. d*. °गगन° for °गमन°. 10 *m* मण्डलेनवस्थितः 11. *a. d*. क्षणलव° for लवक्षण°. 12. *bi* काल चक्र for कालचक्रम् of *a. b. d. m*.; *m* omits हिरण्ययम्; *b* reads हिरण्मयं हिरण्मयमयम् for हिरण्ययं हिरण्ययम्, *d*. apparently agrees; *bi*. °स्थितिहेतु for °स्थितिहेतु of *a b d. m*. 13. *d*. सः for यः, *m* omits यः. 14. *bi*. स for यः. 16. *m* takes प्रतीक upto भवतीति. 17. *bi* चन्द्रमसम् for चन्द्रमसि of *a. b. d. m*; *m* सुषुम्न for सुषुम्णो

1. The quot. is RS. VI. 56. 3.

क्षितव्यं-द्रष्टव्यम् । येयमस्य चन्द्रमसो दीप्तिः-ज्योत्स्ना इयमादित्यरश्म्यनुमहादेवास्य भवति । अम्मयं हि चन्द्रमसो मण्डलं तत्तेजःसंबन्धाद्दीप्तिमद्भवति । ततः सर्वा दिशः प्रकाशयति ।

यथा चैतदेवं तथा **सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति** राष्ट्रभृत्सु । अप्ययमप्यन्ये बहव इत्यपिशब्दः । **सुषुम्णः** सुष्ठुसुख इत्यर्थः । सर्वाणि भूतानि नित्यमसौ ह्लादयति । कोसाविति । **सूर्यरश्मिः** सूर्यान्निःसृत्य चन्द्रमसं प्रति गतः । **चन्द्रमा गन्धर्वः** । सति सुषुम्णगमने गोशब्दवाच्यता । तस्य गन्धर्वस्य सतः चन्द्रो धारयिता गन्धर्वः । स हि तस्य प्रतिष्ठा । स न इदं-सोऽस्माकमिदं ब्रह्म क्षत्रं च पातु-रक्षतु । किं च तस्मै सुषुम्णाय सूर्यरश्मये स्वाहा सु-शोभनमिदमाभिमुख्येनाहुतं हविराज्यलक्षणमस्तु । स चेदं वाट्-वेतु पिबत्वित्यर्थः ॥ 10

सोऽपि सुषुम्णो रश्मिरेक एव **गौरित्युच्यते** यथासौ गौस्तथेदमुदाहरणमत्राह **गोरमन्वतेति** । तत् पुनरेतत् **उपरिष्टात्** ऐकपदिके **व्याख्यास्यामः** ।

**सर्वेऽपि रश्मयो गाव उच्यन्ते** । यथैतदेवं तथेयमृगुदाहरणम् ॥ ६ ॥

---

1-2. *b.* सेयमस्य for येयमस्य of *a. b. d.*, *m.* इत्यय for इयम्; *b.* आदित्यत आदित्यस्य मनुमहादेव for आदित्यरश्म्यनुमहादेव, and अस्मदुपरि यत् for अम्मय हि of *a. b. d.* 5. *m.* reads pratika upto गोरुच्यते. *b m* add इत्यमहहोमे after राष्ट्रभृत्सु; *b m.* add सुष्ठुसुम before सुष्ठुसुखः. 6. *d.* सर्वभूतानि. 7. *a.* om सति सुषुम्ण°......धारयिता गन्धर्वः. 8. *b.* गन्धर्वसहितस्य for गन्धर्वं स हि तस्य of *b d. m.* 9 all omit सु before शोभनं, *a. d.* read आहा before हविः, *b. m.* आहु. 10. *m.* चेदं for चेद. 13. *b.* उदाह्रियते for उदाहरणम्.

---

4. The full text is as follows :—

सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ।
स नं इदं ब्रह्मं क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ VS. XVIII. 40

7. The sense of the commentary as it stands here from सति सुषुम्णगमने to प्रतिष्ठा is not clear even as read by *b.* As I understand it, I believe it should read गोशब्दवाच्यस्य सतः for गंधर्वस्य सतः here, or the words should be left out altogether. Either way the sense becomes clear and consistent. I suspect there is some omission here.

"ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥"

तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृङ्गा बहुशृङ्गाः । भूरीति बहुनो नामधेयं प्रभवतीति सतः । शृङ्गं श्रयतेर्वा शृणातेर्वा 5 शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वा । अयासोऽयनाः । तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि । पादः पद्यतेस्तन्निधानात्पदम् । पशुपादप्रकृतिः प्रभागपादः । प्रभागपादसामान्यादितराणि पदानि । एवमन्येषामपि सत्त्वानां संदेहा विद्यन्ते । तानि चेत्समानकर्माणि समाननिर्वचनानि नानाकर्माणि चेन्नानानि-10 र्वचनानि यथार्थं निर्वक्तव्यानि इतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि । तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा । सा पृथिव्या संदिह्यते तयोर्विभागस्तस्या एषा भवति ॥ ७ ॥

ता वां वास्तूनीति । दीर्घतमस आर्षम् । वैष्णवी । त्रिष्टुप् । यूपावधाने विनियुक्ता सोमातिरेकशस्त्रे च । वामिति दम्पती अभिप्रेत्य द्विवचनम् । ता—तानि वां—युवा-15 भ्यामर्थाय वास्तूनि—निवासस्थानान्युश्मसि—कामयामहे गमध्यै—गमनाय यत्र—येषु स्थानेषु । किम् । गावो—रश्मयः । भूरिशृङ्गाः—बहुशृङ्गाः—बहुदीप्तयः । अयासः—अयनाः—मुहूर्तमप्यनवस्थायिनः । किं च अत्राह—तेषु स्थानेषु तत् पदमुरुगायस्य

1. B does not accent the text, all others do. 2. B. C. D. R. add भूरिशृङ्गा before बहुशृङ्गा. Bi. omits it. 7. Bi. marks a variant as पशुपाद प्रकृति which is inadmissible. 12. A. Bi conclude II. ii. 3 after भवति 13. m. reads pratika upto अवभाति भूरि and omits इति; m यूपाभिधाने for यूपावधाने. 14 a. m. दंपती अभि°, b. दम्पत्यभि°; b. द्विवचनम्, a b. d. m. omit ता and वां. 16. a. b. d. m. read बहुदीप्ताः for °दीप्तय, and omit बहुशृङ्गा 17 a d स्थानेषु तेषु.

1. The verse is Rv. I. 154. 6.

–उरुगमनस्य महागतेर्भगवतो वृष्णो–विष्णोः परमं पदमादित्यमण्डलस्थानम् । स्थाने हि पदसंज्ञा । पदस्य इति लोकेऽपि वक्तारो भवन्ति । अवभाति–अर्वागिदं सर्वं कृत्वा भाति–दीप्यते । भूरि–बह्वित्यर्थः । इति समस्तार्थः ।

अथैकपदनिरुक्तम् । भूरीत्येतद्बहुनो नामधेयम् । प्रभवति हि तद्बहुधापि दीयमानम् । शृङ्गं श्रयतेस्तद्ध्याश्रितं भवति शिरसि । शृणातेर्वा हिंसार्थस्य तेन हि 5 हिनस्ति । शिरसो निर्गतमिति वा शृङ्गम् । परमेऽर्धे स्थितं पराध्यर्धस्थम् । अथवा परमर्द्ध्यां युक्ते स्थाने स्थिते पराद्ध्यर्धस्थम् । पादः पद्यतेर्गत्यर्थस्य । पद्यते हि तेन । तन्निधानात् पदम् । यदुत्पन्ने तत्सरूपमेव पांसावन्यत्र वा तत्पदमित्युच्यते पशोर्मनुष्यस्य वा । पशुपादप्रकृतिश्चतुर्भागसामान्यात्प्रभागपादो दीनारादिपादः । प्रभागपादसामान्यादितराणि पदानि ग्रन्थपदानि क्षेत्रपदानि वा । विभागो हि 10 तेष्वपि समान एव । प्रसक्तानुप्रसक्तमिदमुक्तम् ।

अधुनोपसंहरति । एवमन्येषामपि सत्त्वानां संदेहा विद्यन्ते न केवलं गोशब्दे पदशब्दे वा । तेषु हि स्वेतरौत्सर्गिकं निर्वचनलक्षणं द्रष्टव्यम् । तानि चेत् समानकर्माणि–यदि सामान्यक्रियया युक्तानि ततः समाननिर्वचनान्येव कर्तव्यानि । अथ पुनर्नानाकर्माणि ततो नानानिर्वचनानि । एवं यथार्थं 15 निर्वक्तव्यानीति ।

अधुनैवमुक्त्वोदाहरणैरेव तत्र संदेहपदान्यनुक्रम्य मन्त्रेष्वेव दर्शयन्नाह । इमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि । तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा । लोकेषु हीदं सर्वं भूतजातमन्तर्भूतं यदभिधानानि यदाश्रयक्रियावचनाश्च शब्दा निघण्टव उच्यन्ते तेषां च पृथिवी प्रथमा तस्मात्तत आरम्भः । एक- 20

---

1. *a. d. m.* omit वृष्ण°, *b.* reads महागते वृष्ण° कामानां वर्षितुः भगवतो विष्णोः; *a. d.* omit °स्थानम्; *b.* reads °मण्डलस्थानम्. 3. *b.* omits इति समस्तार्थः. 4. *b.* भवति for प्रभवति; *b. m.* omit अपि after बहुधा. 5. *m* omits हि 6. *a. b. d* पराध्यम् for पराध्यर्धस्थम्; *b. d. m.* परमपद्ध्यां for परमर्द्ध्यां 7. *a. d.* पराधेस्थम् for पराध्यर्धस्थम्, *m.* reads the प्रतीक from पाद- to पदम् 9. *a. d* read पशुपाद° प्रकृतिः; *m.* दिनारा°. 10. *m.* adds प्रभागपादः before प्रभाग°, *a. b d.* omit पदानि after इतराणि. 12. *a. b. d.* add यानि नामानि तेषु after सत्त्वानाम् while *m.* adds the same after विद्यन्ते. 13 *a. d.* omit हि; *bi.* निर्वचनं लक्षणम्, *m.* °लक्षणान्; *a. b d.* omit चेत्समानकर्माणि. 15. *m.* reads प्रतीक to the end before अथ. 17. *b. m* °नुक्रमय्य मन्त्रेषु for °नुक्रम्य. 19. *bi* लोके for लोकेषु and सर्वभूत° for सर्वं भूत°. 20 *a.* omits प्रथमा

विंशतिरिति संख्या । पृथिवीनामधेयानि स्वार्थे धेयप्रत्ययः । नामैव नामधेयम् । अनुक्रान्तान्यानुपूर्व्येण पठितानीत्यर्थः । एकविंशतिर्यान्यनुक्रान्तान्येभ्योन्यान्यपि यानि कानिचित् स्युस्तान्युपलभ्य निर्वक्तव्यानि । तद्यथा । [illegible] इत्येतदसमाम्नानं पृथिव्या नामधेयम् । उक्तं हि—

5 "नाग्निचिन्नरकं याति न सत्पुत्रो न कुम्भदः"

इति । तत्रेमस्मिन्नेकविंशके नामगणे निर्ऋतिरित्येतदभिधानं निरमणात् । निविष्टानि रमन्तेस्यां भूतानीति निर्ऋतिः—पृथिवी रमेर्धातोः । ऋच्छतेरितरा कृच्छ्रापत्तिः दुःखसंज्ञका निर्ऋतिः—पाप्मा । सा पुनरियं समाननामधेयत्वात्समानश्रुतित्वात्पृथिव्या संदिह्यते । तयोः समाननामधेयत्वेपि सति एव कर्मकृतो भेदो विभागः । एका 10 निविष्टानां भूतानां रमयित्री एका पुनः कृच्छ्रमापादयित्री । एवं नानाकर्माण्यभिधानानि निर्वक्तव्यानि ।

तस्याः कृच्छ्रापत्तेः पृथिव्या अपि एषा निर्वाचिका ऋग् भवति ॥ ७ ॥

"य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् ।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश ॥"

15 बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजका वर्षकर्मेति नैरुक्ताः । य ईं चकारेति करोतिकिरती संदिग्धौ वर्षकर्मणा । न सोस्य वेद मध्यमः । स एवास्य वेद मध्यमो यो ददर्शादित्योपहितं स मातुर्योनौ मातान्तरिक्षं निर्मीयन्तेस्मिन्भूतानि योनिरन्तरिक्षं महानवयवः परिवीतो वायुना-

2 [illegible] परितानि for पठितानि 3 m reads यान्ति for यानि, a d सद्धारि for सत्पुत्रो 6 b. m एकविंशतिके for °विंशके, b. गणे for नामगणे of a b. d m 8. a दुःखसंज्ञिका for °संज्ञका 9. b omits भेदो before विभागः read by a b d m, d. omits अपि before सति, and reads एव for एव. 12 a d omit अपि.

1 भागरूपनामभ्यो धेयः. ( Vār. on Pāṇ. V. 4. 25. )

13. The quot. is RS. I. 164. 32.

यमपीतरो योनिरेतस्मादेव परिवृतो भवति । बहुप्रजा भूमिमापद्यते वर्षकर्मणा ।

शाकपूणिः संकल्पयांचक्रे सर्वा देवता जानामीति । तस्मै देवतोभयलिङ्गा प्रादुर्बभूव । तां न जज्ञे । तां पप्रच्छ विविदिषाणि त्वेति । सास्मा एतामृचमादिदेशैषा मद्देवतेति ॥ ८ ॥　　5

य ईं चकार इति । दीर्घतमस आर्षम् । त्रिष्टुप् । महाव्रते वैश्वदेवे शस्त्रे शस्यते । अयं स शिङ्क्ते इतीयमप्यनयैव समानार्थविनियोगा । जगती । द्वे अप्यंते अस्यवामीये । कश्चित् बहुप्रजाः—बह्वपत्यो दरिद्रः पुरुषः स दुष्पोषत्वादपत्यानां व्यापन्नत्वात् कृच्छ्रं—दुःखमापद्यते । सा या तस्य कृच्छ्रापत्तिः सैवैनस्यामृचि निर्ऋतिशब्देनोच्यते । इत्येव परिव्राजकाः परिव्राजकानामस्यामृचि संक्षेपार्थः ।　　10

स एष विस्तरेण प्रदर्श्यते । यश्चकार—करोति ईं—गर्भं न सोऽस्य गर्भस्य तत्त्वं वेद केवलं त्वसौ कामार्तः पुत्रार्थी वा करोत्येव गर्भम् । य ईं ददर्श—यश्चैनं पश्यति हिरुगन्तर्हितमेनमेतस्मिञ्जठर एनस्मिन्वा शरीरे जन्तुम् । तस्मात् तस्यैवैष गर्भो याथात्म्यतः प्रत्यक्षो भवत्यध्यात्मशास्त्रदृष्ट्या नेतरस्य गर्भकर्तुः । स पुनरेष गर्भो मातुर्योनौ—गर्भाशयस्थाने अन्तरुदरे पुष्यति मातुरशितपीतलीढभक्षितेन चतुर्विधा- 15 हारपरिणामेन । ततः परिवीतो—जरायुणा परिवेष्टितो यथाकालं जायते । अथैवं बहुप्रजाः—बहुशः प्रजायमानः स गर्भकर्ता गर्भतत्त्वमजानानो निर्ऋतिं—दुःखमाविवेश—आविशतीत्यर्थः । एवं गर्भतत्त्वापरिज्ञानाद्यो गर्भं करोति स दुःखमापद्यते यस्त्वन्या-

---

3. A reads जानानीति　5. B. reads तस्या for सास्मा, ABi. conclude II. ii 4 after मद्देवतेति.　6. m. °देवशस्त्रे for °देवे शस्त्रे.　7. a b, d m. अनयैव for तयैव of li　8. a, b d m. omit बहुप्रजा.　9. a, b. d m. दुःखं कृच्छ्रं for कृच्छ्रं दुःखम्; m. स वै तस्याम् for सैवैनस्याम्　10. a b d. m. omit परिव्राजकाः. li. संक्षेपोऽर्थः for संक्षेपार्थः of a, b. d. m　11. a. b. d m omit चकार ईम्; a. d. read गर्भश्च for गर्भस्य　13. bi. reads ईं नु before जन्तुम्　14. m. omits °शास्त्र° and स; a d. read एवम् for एष, b reads एव and m. omits it. 15 We omit स as it is superfluous after पुष्यति, some Mss. omit स before पुनरेष, according to a. स may be retained as it omits ततः.　15–16. a. d. चतुर्विधाहारेण, b. m. चतुर्विधाहारपरिणामेन, bi. °हारपरिणामे; a. omits ततः before परिवीतो; a b. d. m. omit बहुप्रजा

रमदृष्टया गर्भतत्त्वं वेद स गर्भकर्मणो निवर्तते स निर्ऋतिं नाप्यते । एवमस्याशुचि निर्ऋतिनिर्देशनेनैव परिव्राजकार्थः ।

अन्ये तु ब्रुवते । यः करोति गर्भं स गर्भभूतो जन्मान्तरेषु बहुधा प्रजायमानो जन्ममरणसंतानानुबद्धां निर्ऋतिमाविशति । यो रेतः सिञ्चति स भूयो भूयो जन्मान्तरेषु 5 बहुशः प्रजायमानो जन्ममरणसंतानाननुभवतीत्युक्तम् ।

**वर्षकर्मेति नैरुक्ताः** । वर्षकर्मैतदुच्यते । निर्ऋतिश्चात्र भूमिरुच्यते । एवं नैरुक्ता मन्यन्ते । यः करोति वर्षं यो वा किरति—क्षिपति । कः पुनरसौ । मेघः । स हि वर्षस्य कर्ता विक्षेप्ता वा । मेघाद्धि वर्षं प्रवर्तते । किं तस्य । न सोऽस्य वर्षस्य तत्त्वं वेद । कुतोऽप्येतदुदकं मय्यागच्छति यन्मया विसृज्यते किं वोदकस्य तत्त्वमिति । केवलं त्वसौ 10 विसृजत एवोदकम् । य ईं ददर्श—य एव पश्यत्येनद्वर्षं दिविगतं तस्मादन्तर्हितमन्तरिक्षलोके । तस्मात्तस्येत्यर्थः । तस्यैव प्रत्यक्षं तथात्म्यतो वर्षं नेतरस्य मेघस्य मध्यस्थानस्य । स एव ह्यस्य वर्षस्य तत्त्वं वेद यो ददर्श—यः पश्यत्यादित्यरश्म्यन्तर्गतं वर्षमनभिव्यक्तम् । कश्चासौ इन्द्रः । असावपि हि मध्यम एव । तत इदमुक्तं न सोऽस्य वेद मध्यमो मेघः स एवास्य वेद मध्यम इन्द्र इति । स एव महानुदकसंस्त्याय इन्द्र- 15 स्त्वसौ मातुरन्तरिक्षलोकस्योदकाभिव्यक्त्याधारस्थाने परिवीतः—परिवेष्टितः सौर्येण रश्मिजालेन वायुना च मेघोदरान्तर्गतः प्रावृट्काले वर्षभावेनाभिव्यक्तो बहुप्रजाः—बहुधा प्रजायमानो निर्ऋतिं—भूमिमाविशतीति समस्तार्थः ।

अथैकपदनिरुक्तम् । **करोतिकिरती संदिग्धौ** धातू **वर्षकर्मणा** संबध्येते । उभयथा ब्रुवन्तं यः करोति यो वा क्षिपति । **मातान्तरिक्षमेतस्मिन् हि भूतानि** 20 **निर्मीयन्ते** । एतद्वचनकाशदानेन विशिष्टमुपकारं करोति । भूतानां जायमानानां **योनिरन्तरिक्षमाकाशस्यैव** प्रदेशविशेषः कश्चित् । स वायुसंयुतः समुद्रकयोनिभावं पुष्णाति । तदेतद्वायुना तस्य संयवनं श्लोके परिवृतो भवतीति । मध्यस्थानस्य प्रकृत-

---

2 m देवदेवैरेष्टत्व for देवनेत्येव  4 b1 संतानानुभवविद्वाम् for संतानानुबद्धाम् of a b d m  4-5. a d. read यो रेतः सिञ्चति तद्रूप एव भवतीत्युक्तम्। b. m स भूयो for तद्रूपो of b1; b m. "संतानान्यनुभव" for "संतानाननुभव" of b1. 8 b1. omits कुतोऽप्येतदुदक ....to तत्त्वं वेद. 14. b1. omits इन्द्रः to मेघोदरान्तर्गतः. 18. m reads the प्रतीक upto वर्षकर्मणा 19. a. b. d. add अपि after उभयथा. 20 d. एतदव° for एतद्वच°. 22. b1. संयवन्तम् for संयवनम् of a b d; a. b d परिवृतो for परिवीतो of b1. m

---

3. For this view cf Sāyaṇa's Bhāṣya on the verse which gives it as the आत्मविदां मतम्.

मुच्यते। अपमपीतरः स्त्रीयोनिरेतस्मादेव। असावपि परिप्लुत एव भवति शाम्ना-मांसेन-च।

एवमेतस्मिन्मन्त्रे नैरुक्तानां निर्ऋतिशब्देन भूमिरुच्यते परिव्राजकानां कृच्छ्रापत्तिः। तदेवं मन्त्रेषु शब्दगतिविभुत्वादुभयमप्युपपद्यत एव। तद्यथा। दधिक्राव्णो अकारिषमि-त्येष मन्त्रोऽन्युस्थानेष्विनहोते। अयमेव चाग्निष्टोमे 5

"दधिक्राव्णो अकारिषमित्याग्नीध्रीये दधिद्रप्सान्प्राश्न"

इति दधिभक्षणे। तथा चाश्वमेधे "दधिक्राव्णो अकारिषमित्युत्थितायां सर्वा जपन्ति" इत्यश्वसंनिपातेन पत्न्यो जपन्ति महिष्यामुत्थितायाम्। तत्रैवं सति प्रतिविनियोगम-स्यान्येनार्थेन भवितव्यम्। त एते वक्तुरभिप्रायवशादर्थान्यत्वमपि भजन्ते मन्त्राः। न ह्येतेष्वर्थस्येयत्तावधारणमस्ति। महार्था ह्येते दुःपरिज्ञानाश्च। यथाश्वारोहवैशिष्ट्यादश्वः 10 साधुः साधुतरश्च वहत्येवमेते वक्तृवैशिष्ट्यात् साधून् साधुतरांश्चार्थान् स्रवन्ति।

तत्रैवं सति लक्षणोद्देशमात्रमेवैतस्मिञ्छास्त्रे निर्वचनमेकैकस्य क्रियते। क्वचिदाध्या-त्माधिदैवाधियज्ञोपदर्शनार्थम्। तस्मादेतेषु यावन्तोऽर्था उपपद्येरन्नधिदैवाध्यात्माधियज्ञा-श्रयाः सर्व एव ते योज्या नात्रापराधोऽस्ति।

---

4. *b.* तस्मादेव for तदेवम् 6 *d* अकार्षं for अकारिषं; *m.* आग्नीध्रीये for आग्नीध्रे of *b*₁. *a. b. d.*; *a. d.* omit दधि° after आग्नीध्रे. We read the text here according to Ās'. S'r. Sū. 7. *d.* इत्युत्थायाम् सर्वा जपन्ति. 8. *d. m.* पत्न for पत्नं; *m.* जपन्ति for जपन्ति; *m.* °विनियोगस्य for °विनियोगमस्य; 9. *a. d.* अन्येनान्येन for अन्येन; *b*₁. °वशादन्यत्व for °वशादर्थान्यत्वम्; *b.* य एते for त एते 10. *m* °मास्ते for °मस्ति; *a. d.* वैशेष्याद् for वैशिष्ट्यात्. 12–13. *m.* °मात्रमेत° for °मात्रमेवैत°; *d.* °मेकैकस्य for °मेकैकस्य; *a. b. d. m.* अध्यात्म° for आध्यात्म° and °पदर्शनार्थम् for °पदर्शनार्थः of *b*₁; *m. a. b. d.* अधि-दैव° for आधिदैव° of *b*₁. 13–14. *m.* °यज्ञाश्रया: for °यज्ञाश्रयाः, *a. d.* omit ते; *d.* नात्रापराधोऽस्ति.

---

6. The full text is:—

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत्॥ Rs. IV. 39. 6.

This text is prescribed by Ās'. S'r. Sū. II. 12 as दधिक्राव्णोमकारिष-मादिषिका: सम्मा पञ्चकृतीः।

7. Vide Ās'. S'r. Sū. VI. 12.

8. महिषीमुत्थाप्य सुरभा दधिक्राव्ण इत्यादुः (Kāty. S'r. Sū. XX. 6. 21.)

Cf. also S'atapatha Br. XIII. 5. 2. 9. The exact text as quoted above is not available in either of these books.

एतमेव संदेहाधिकारमुपजीव्याह। शाकपूणिः संकल्पयांचक्रे सर्वा देवता जानामीति। शाकानि यः पूणयति संहन्ति स शाकपूणः तस्यापत्यं शाकपूणिराचार्यः। स संकल्पयांचक्रे–संकल्पं कृतवान्। किमिति। सर्वा देवता जानामीति। तस्मै संकल्पमेवं कृतवते देवतोभयलिङ्गा–स्त्रीपुंलिङ्गा अथवा मध्यस्थान-
5 लिङ्गा द्युस्थानलिङ्गा च प्रादुर्बभूव। तां पुरस्तादवस्थितां सतीं न जज्ञे–न ज्ञातवान् किमियं स्त्री स्यादथवा पुरुष इति। अथवा किमियं मध्यस्थानाथवा द्युस्थानेति। तामजानन् पप्रच्छ विविदिषाणि त्वा–वेदितुमिच्छामि त्वा किमसि पुरुषः अथवा स्त्रीति। अथवा किमस्यन्तरिक्षस्थानाथवा द्युस्थानेति। सा एवं पृष्टा सत्यस्मै शाकपूणये एतामृचमादिदेशादिष्टवती। किमिति। एषा मद्देवतेति। अस्यामृचि,
10 अहं देवतेति त्वं च नैरुक्त- मामेतस्या ऋचः सकाशादर्थावगत्यावधारयेति॥ ८॥

अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता।
सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत॥

अयं स शब्दायते येन गौरभिप्रवृत्ता मिमाति मायुं शब्दं करोति मायुमिवादित्यमिति वा। वागेषा माध्यमिका ध्वंसने मेघेऽधिश्रिता।
15 सा चित्तिभिः कर्मभिर्नीचैर्निकरोति मर्त्यं विद्युद्भवन्ती प्रत्यूहते वव्रिम्। वव्रिरिति रूपनाम वृणोतीति सतः। वर्षेण प्रच्छाद्य पृथिवीं तत्पुनरादत्ते॥ ९॥

---

1 *a d* एतमेव for एतमेव of *b*, *m* संदेहोधिकार°, *m* reads the प्रतीक to मद्देवतेति. 3 *m* omits स. 4. *a b d* add द्विलिङ्गा after उभयलिङ्गा; *b* एव for एवम्. 5. *a. d.* omit द्युस्थानलिङ्गा, *m* omits स्त्रीपुंलिङ्गा and adds स्त्रीपुंलिङ्गा द्विलिङ्गा after मध्यस्थानलिङ्गा, and reads द्युस्थानलिङ्गा च; *a b. d m.* add प्रादुर्भूतवती after प्रादुर्बभूव 7 *a b d m.* omit त्वा 8. *m* किमस्यन्त° for किमस्यन्त°. 9. *a d* add सा after आदिदेश. 10. *m* नैरुक्त for नैरुक्त, *a d* अर्थगत्या for अर्थावगत्या. 11. Bi. R. read ध्वसना°, A. B C D *m* ध्वसना°. 15. Bi. reads सा चित्तिभिर्निकरोति. We give the reading of B C D. R *m*. 17. A. Bi. conclude II. ii. 5 after आदत्ते and after that adds इति द्वितीयाध्यायस्य द्वितीयः पादः।

---

11 The quot is RS. I. 164. 29.

कतमा पुनरसावृगिति । उच्यते । **अयं स शिङ्क्ते** इति । **अयं स**–**मेघः शब्दायते**–शब्दमिव करोति । न च तावदसौ शब्दं करोति । अयं च तावन्माध्यमिकायां वाचि तत्स्थायां शब्दं कुर्वत्यां तत्साहचर्याद्विज्ञायते स एव शब्दं करोतीति । येन मेघेन किं कृतमिति । **येन गौरभीवृता** । येन माध्यमिका वागभिप्रच्छादिता सती **मिमाति मायुं**–निर्मिमीते निर्वर्तयति मायुं शब्दं करोतीत्यर्थः । **'मायुः काकुत्'** 5
इति च वाङ्नामसु पठितम् । अथवा मायुरादित्यो भवति सर्वभूतनिर्माता । तमिवात्मानं निर्मिमीते । अवस्थिता । **ध्वंसने**–उदकध्वंसने उदकस्रंसने मेघे **अधिश्रिता** । अयं तावदर्थो मेघान्तर्वर्तिन्या वाचोनभिव्यक्तविद्युद्रूपाया अभिधायको मेघरूपत्वात् पुरुषत्वाभिप्रायः । अथ चायमुत्तरः स्त्रीत्वाभिप्रायः । यैवंलक्षणा वाग् मेघरूपा मेघशरीरा वा ।
**सा चित्तिभिः**–स्वैश्चटचटाशब्दकर्मभिः । **नि हि चकार**–नीचैः करोति **मर्त्यं**–10
मनुष्यम् । सर्वो हि बिभ्यत्तस्या आसीदति अवनमति च । कदा पुनर्निकरोति मर्त्यमिति । उच्यते । **विद्युद्भवन्ती**ति । विद्युदात्मना व्यास्येनाभिनिर्वर्तमाना । तदा हि दारुणश्चटचटाशब्दो भवतीति विशेषेण भयंकरो न तथा विद्युद्रहितः । सैवमात्मानमाविष्कृत्य विद्युद्रूपेण विक्षिप्य सर्वासु दिक्ष्वात्मानं वर्षेण प्रच्छाद्य पृथिवीम् । ततो वर्षव्युपरमे **प्रति
औहत**–**ऊहते वव्रिम्**–प्रत्युपसंहरति रूपमात्मीयमदृश्यं करोतीत्यर्थः । **वव्रिरिति** 15
**रूपनाम** तदुपावृत्य स्वमाश्रयं वर्तते । यस्मिंस्तु पक्षे मध्यस्थानलिङ्गा द्युस्थानलिङ्गा

---

1–2. *b₁* अथ स शब्दायते स एव मेघ शब्द करोति for अयं स मेघः etc. to शब्द करोतीति read by *a. b d m.* 5. *d.* निवर्तयति for निर्वर्तयति; *a.* काकुद् for काकुत्. 7. *d.* निर्मिमीयते for निर्मिमीते, *b₁.* क्वावस्थित. for क्वावस्थिता of *a. b. d. m*; and *a. b. d. m.* अध्याश्रिता for अधिश्रिता of *b₁.* 8. *b₁* वाचो व्यक्त° for वाचोनभिव्यक्त° of *a. b. d. m.*; *m.* °रूपाभि° for °रूपाया अभि°. 9. *b₁.* अथवा° for अथ चा°; *m.* °मुत्तरत् for °मुत्तरः; *b₁.* येवंलक्षणा वा कर्मस्वरूपा for येवंलक्षणा वाङ्मेघरूपा of *a. b. d. m.* 10. *b₁.* omits स्वै after चित्तिभि॰ read by *a. b d. m.* 11. *d.* तस्या आसीदिति for तस्या आसीदति; *b.* reads असंजयति for आसीदति; *a. b. d. m.* वा for च. 12. *a. d* अभिनिवर्तमाना for अभिनिर्वर्तमाना; and *a.* reads हि तदा for तदा हि; *d.* adds च after दारुणः. 13. *b₁.* भयंकरम् for भयकरः of *a. b. d. m.* 14 *d.* दीक्षात्मानाम् for दिक्ष्वात्मानम्; *m.* माविष्कृष्य for माविष्कृत्य. 15. *a. b. d. m.* omit औहत. 16. *a. b. d m.* तदुपावृत्य, *b₁.* तदुपावृत्या. Probably it should be तदुपावृत्य; *m. b* समाश्रयम् for स्वमाश्रयम्; *a. d.* omit तु and read च for वा of *b₁.*

---

6. मायुः–Nigh. I. 11.
15–16. वव्रि –Nigh. III. 7.

चेति तस्मिन् पक्षे मेघरूपत्वमविवक्षितं मेघवाचो विद्युद्रूपत्वं च क्विलेतावद्विवक्षितम्। मेघाश्रया शब्दवती भूत्वा माध्यमिका वाग्विद्युदात्मना स्थित्वा वर्षेण प्रच्छाद्य पृथिवीं तद्वर्षमुदकरूपमृतं जलाशयेभ्यश्चादित्यात्मना स्थित्वा पुनरादत्ते विद्युदात्मना मध्यस्थाने स्थित्वा वर्षन्त्यादित्यात्मना द्युस्थाने स्थित्वा पुनरादत्त इत्यभिप्रायः । वक्ष्यति हि

5 "तमकृर्वंस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवि"

इति ।

सेयमेकैव देवता मध्यस्थाना विद्युद्रूपा द्युस्थाना चादित्यरूपेत्ययमेवंलक्षणो देवतातत्त्वसंदेह अपेक्षितव्यो मन्त्रदर्शनाच्च निर्वक्तव्य इत्ययं मन्त्रसंक्षेपार्थः ।

अपि पृथिव्या संदिग्रत इत्यनेन संदेहसामान्येनोदाहनमिदमत्र मतं शाकपूर्णेरित्येवमादि । 10 अनुक्रमणं स्वविकल्पनम् । तस्मिन् गोशब्द एको निरुक्तः प्रकारोपदर्शनार्थम् । इतराण्यप्यस्मिन् निर्वक्तव्यानि—तद्यथा—ज्मा गमनात् । अस्यां गच्छन्ति भूतानि । ज्मा जमनात् । जमन्ति गच्छन्त्यस्यां भूतानीत्येवमादि ।

नैघण्टुकांस्तु याञ्छब्दान् प्रत्यर्थं गणशः स्थितान् ।
छन्दोभ्योऽन्विष्य तत्त्वार्थान् निर्ब्रूयाद् योगतस्तु तान् ॥ १ ॥

15 **हिरण्यनामान्युत्तराणि पञ्चदश । हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृदयरमणं भवतीति वा हर्यतेर्वा स्यात् प्रेप्साकर्मणः ॥ अन्तरिक्षनामान्युत्तराणि षोडश । अन्तरिक्षं कस्मादन्तरा क्षान्तं भवत्यन्तरेमे इति वा शरीरेष्वन्तरक्षयमिति वा । तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण संदि-**

---

1 *a d m* अविवक्षितमेव वाचो for अविवक्षितं मेघवाचो of *bi* . *a.* एतावक्षितम्, *d.* एतावक्षितम्, for एतावद्विवक्षितम् of *bi*  5. *bi.* omits तमकुर्वन् read by *a b. d, m.*  7. *bi.* मध्यस्थाना for द्युस्थाना.  11. *bi* omits अपि after इतराणि read by *a. b. d. m*; *a.* adds इति after भूतानि but *d.* इति न्या after भूतानि. 13 *bi* प्रत्यर्थगणसंस्थितान् for प्रत्यर्थं गणशः स्थितान् of *a. b. d. m*  16. B. C. D R. after भवतीति वा, add हृदयरमणं भवतीति वा omitted by Bi. 16 B. D षोडश for षोडश. 19. A. शरीरेष्वन्तरिक्षमिति वा for °ष्वन्तरक्षयमिति वा.

---

5. The quot occurs in Nir. VII. 28 to which may be compared Nir. XII. 19.

द्यते । समुद्रः कस्मात्समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः संमोदन्तेऽस्मिन्भूतानि समुदको भवति समुनत्तीति वा । तयोर्विभागः । तत्रेतिहासमाचक्षते देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः स शन्तनुः कनीयानभिषेचयांचक्रे देवापिस्तपः प्रतिपेदे । ततः शन्तनो राज्ये द्वादश वर्षाणि देवो न ववर्ष तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति । स शन्तनुर्देवापिं शिशिक्ष राज्येन तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति । तस्यैतद्वर्षकामसूक्तम् । तस्यैषा भवति ॥ १० ॥

हिरण्यनामान्युत्तराणि पञ्चदश । हिरण्यस्य नामान्युत्तराणि । कुतः प्रकृ- नेभ्यः पृथिवीनामभ्यः । पृथिव्यामेव हिरण्यमुत्पद्यत इत्यतः पृथिव्यभिधानानन्तरं 10 ...ग्यनामानि समाम्नातानि । कियन्ति पुनस्तानि । पञ्चदश । पञ्च च दश च पञ्चदश । ...ने समाम्नातानि । असमाम्नातान्यपि सन्ति—हाटकसुवर्णचामीकरशातकुम्भादीनि । ...नमानि पुनस्तानि समाम्नातानीति । उच्यते—'हेम चन्द्रं रुक्मम्'—इत्येवमादीनि । हितं ममेदमिति सर्व एवैतन्मन्यते तस्माद्धेम । चन्द्रं चन्दतेः कान्तिकर्मणः सर्व एव ह्येतत् कामयते । रुक्मं रोचतेर्ज्वलनार्थस्य तद्धि रोचिष्णु भवतीति एवमूहितव्यं सर्वत्र 15 निर्वचनम् ।

---

9. *d.* adds हिरण्यनामानि after हिरण्यस्य नामानि; *m.* reads हिरण्यनामानि. 10. *a. d.* omit इति before अत॰; *m.* उपपद्यते for उत्पद्यते. 11. *a. d.* omit पञ्च च दश च पञ्चदश । 12. *d. m* read °चामीकरशात°; *bi.* चामीकरणशात. 14. *a. b. d. m.* चन्दतेः; *bi.* चदते. 15. *a. b. d. m.* ज्वलत्यर्थस्य for ज्वलनार्थस्य of *bi*; *b.* तद्वि for तद्धि°; *a. b. d. m.* रोचिष्णु, *bi.* रोचिष्णुः.

---

13. For हेम etc. *vide* Nig. I. 2.

14. Dhātupātha gives the root as चदि आह्लादे (भ्वादि-68) The Mss. all read चन्दते; but *bi.* reads चदते. M. W. Dictionary derives it from चन्द् to shine. It is possible to connect the word with चदते in sense, but we follow our Mss.

आह। **हिरण्यं कस्मात्।** उच्यते। **ह्रियते आयम्यमानमिति वा।** आयम्यमानं ह्रियत एव शिल्पिभिः कटककुण्डलस्वस्तिकादिभावेन विस्तीर्यमाणम्। **ह्रियते जनाज्जनमिति वा।** तेन हि व्यवहारः क्रियते। ततस्ततैकत्रावतिष्ठते ह्रियत एव सर्वदा। **हितरमणं भवतीति वा।** यस्य हि तद्भवति तस्य हितं च 5 दुर्भिक्षादिषु तद्भवति रमणं चेति। तेन गृहीतेन मूषिकोऽपि रमते किमुत मनुष्यः। **हर्यतेर्वा स्यात्प्रेप्साकर्मणः** तद्धि सर्वैरेव प्रार्थ्यते ॥

लोकानुक्रमेणैव **अन्तरिक्षनामान्युत्तराणि षोडश।** पद च दश च षोडश कतमानि पुनस्तानि। 'अम्बर वियद् व्योम'—इत्येवमादीनि। अम्बरमम्बुमद्भवति। नानाभावेन सर्वतो वियातमिति वियत्। नानाप्रकारमेतदवति भूतानीति व्योम। 10 एवमाद्यभ्यूहितव्यम्।

आह—**अन्तरिक्षमेव** तावत् **कस्मादिति।** उच्यते—**अन्तरा** हीदं द्यावापृथिव्योरवस्थितं **क्षान्तं** च **भवति** पृथिव्यन्तमित्यर्थः। अथ **वा अन्तरा इमे** द्यावापृथिव्यौ क्षियति निवसति **इति** अन्तरिक्षम्। अथ **वा शरीरेषु** एतदेव **अन्तर्** मध्येऽवस्थितम् **अक्षयम्।** इतराणि पृथिव्यादीनि भूतानि क्षीयन्ते तस्मा- 15 दक्षयत्वादन्तरिक्षम्।

**तत्र** तस्मिन् षोडशके अन्तरिक्षनामधेयसमुदाये **समुद्रः** इत्येतदभिधानमुभयाभिधानम्। उभयाभिधायित्वात् **पार्थिवेन समुद्रेण** एतेन जलाशयेन **संदिह्यते।** एतदत्र संदेहपदम्।

आह—**समुद्रः कस्मादिति।** उच्यते—**समुद्द्रवन्त्यस्मादापो** वीचितरङ्ग- 20 शीकरादिभावेन। **समभिद्रवन्त्येनमापः** सर्वा एव ह्यापो निम्नानुसारित्वात् समुद्रमेवाभिमुख्येन द्रवन्ति स हि निम्नो भवति। **संमोदन्तेऽस्मिन् भूतानि** संहृष्यन्ति

1. m ह्रियते for ह्रियते 5 a d add हि after तेन, m. मूषकी. 6. a. b d m. read प्रेप्सार्थस्य for प्रेप्साकर्मणः; a. d omit पद. 8. m इत्यादि for इत्येवमादीनि, a b d. read अम्बुवत्. 9. a. b. d. m वियातं, bi. वियतम्; m यावत् for वियत् 11 bi. omits इति after कस्मात् 11–12. a b d. m. द्यावापृथिव्यौ इमे. 13. m क्षियति for क्षियति। 17. a d. omit उभयाभिधानम्, b reads उभयाभिधायकम् instead.

8. For अम्बर etc. vide Nig. I. 3

जलचराणि सत्त्वानि बहूदकत्वात् । समुदको भवति । उद इत्युदकनाम तदस्मिन् संहतमिति समुद्रः । समुनत्तीति वा संक्लेदयतीत्यर्थः । अतो हि प्रसृतैरम्भोभिः सर्वमिदं संक्लिद्यते । तयोर्विभागः यस्मिन्नुदाहरणे व्यज्यते तत्रेतिहासमाचक्षत आचार्याः । निदानभूतः इति हैवमासीदिति य उच्यते स इतिहासः । कतमः पुनरसाविति । उच्यते—देवापिश्चार्ष्टिषेण इत्येवमादि । देवापिश्चार्ष्टिषेणः शन्तनुश्चार्ष्टिषेण एव कौरव्यौ कुरुवंशप्रभवौ भ्रातरौ बभूवतुः । तयोरन्यो यः कनीयान् शन्तनुर्नाम स आत्मानमभिषेचयांचक्रे अभिषेचितवानित्यर्थः । सोऽभिषिक्तः सन्राजा बभूव । इतरः पुनर्ज्येष्ठो देवापिस्तपः प्रतिपेदे । स किल तीव्रेण तपसा ब्राह्मण्यमापेदे विश्वामित्रवत् । ततः तेनापचारेण ज्येष्ठातिक्रमजेन शन्तनो राज्ये-ऽस्मिन् द्वादश वर्षाणि देवो न ववर्ष । अवर्षति देवे तं शन्तनुमूचुरुक्तवन्तो ब्राह्मणा अधर्मस्त्वया चरितो—ज्येष्ठं भ्रातरमन्तरित्यातिक्रम्याभिषेचितम् । अभिषेक आत्मनः कारितो यतस्त्वया तस्मात् तेन मर्यादातिक्रमेण ते—तव राज्ये देवो न वर्षति अस्तकालं प्रतिपद्यस्वेति । स एवमुक्तः शन्तनुर्देवापिं शिशिक्ष पुनः पुनः राज्यायाभिगमितवानित्यर्थः । कथम् राज्येनाभ्युद्यतेन । अर्थ्यमानो देवापिरुवाच काममहं पुरोहितस्ते असानि भवानि याजयानि च त्वा—त्वा वार्षिकेण कर्मणा । न च राजा भविष्यामि भवानेवास्तु राजेत्यभिप्रायः ।

---

1. *a. d.* read समुद्रको for समुदको, and *a. d. m.* read उद इति for उद्र इति. 4. *m* निदानभूतं for °भूतः. 4–5. *a. d. m.* read कथ्यते for व्यज्यते. 5. *a. b. d. m.* इत्येवमादि for °मादीनि of *Bi.* 7. *m.* reads शंतनुर्नामवान् and omits स°. 9. *a. b. d. m.* read ब्राह्मणत्वम् for ब्राह्मण्यम् of *Bi.*; *m.* ज्येष्ठातिक्रम for ज्येष्ठातिक्रम; *a. d.* omit राज्ये. 10 *b. d. m.* omit तं after देवे. 11. *a. b. d. m.* omit अधर्मस्त्वया चरितो. 13. *a.* adds इति after वर्षति. 14. *b.* omits one पुन; *d.* reads पुनः पुनरराज्यायास्त्व अभिगमितवान् इत्यर्थः । 14–15 *a. b. d. m* add तेन before अर्थ्यमानो. 16. *a. b. d. m.* omit त्वा

---

1. Cf. समुद्रिणमुदकवन्तं Nir. X. 13.

4. आचार्याः—Who are exactly referred to is uncertain. Sāyaṇa refers the story to यास्क. Bi. gives a reference to Śa'ta. Br. XIII. 3. 6. 1. but it speaks of देवापः शौनक इंद्रोत and not of देवापि. Cf. बृहद्देवता VII. 155 to VIII. 6.

तस्य देवापेरेतद् वर्षकामसूक्तमाविरभूत् । तत्र तस्य समुद्राभिधानस्य संदिग्धस्य प्रविभागोपदर्शनाय एषा निर्वाचिका ऋग् भवति ॥ १० ॥

आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान् ।

स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥

5 आर्ष्टिषेण ऋष्टिषेणस्य पुत्र इषितसेनस्येति वा । सेना सेश्वरा समानगतिर्वा पुत्रः पुरु त्रायते निपरणाद्वा पुन्नरकं ततस्त्रायत इति वा । होत्रमृषिर्निषीदन्नृषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवस्तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते । देवापिर्देवानामाप्त्या स्तुत्या च प्रदानेन च देवसुमतिं देवानां 10 कल्याणीं मतिं चिकित्वांश्चेतनावान् । स उत्तरस्मादधरं समुद्रमुत्तर उद्धततरो भवत्यधरोऽधोरः । अधो न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा । तस्योत्तरा भूयसे निर्वचनाय ॥ ११ ॥

"आर्ष्टिषेण ऋष्टिषेणस्य पुत्र इषितसेनस्येति वा" । अन्यकल्पान्तरीणोऽन्यकल्पान्तरीणस्यैव शन्तनोर्वैपौत्रीये कर्मणि होतृत्वे वृतः होत्रं कर्म प्रति निषीद- 15 न्नुपविष्टवान् । ततो देवापिर्नाम नाम्ना देवसुमतिं देवानां कल्याणीं मतिमुदकसंप्र-

---

1 *a. b. d. m.* read वर्षकामस्यैतद् सूक्तम् ; *b. m.* omit एतद् ; *bi.* समुद्राभिधान-संदिग्धस्य for the text above according to *a. b. d. m.* 7 Bi omits "ऋषयोऽभवन्" after अभ्यानर्षत्त read by B. C. D. R ; Bi notes another variant as ऋषयो भवन्ति. 10. A. R. and the variant noticed by Bi. have चेतनवान् for चेतनावान्. 11. The variant given by *bi.* is भवत्यधरोऽधो न धावति &c. 13. *a. b. d. m.* read आर्ष्टिषेण इति । त्रिष्टुप् । एतया देवानस्तौत् । before आर्ष्टिषेण &c. 15 *bi.* adds अपि after तत-

---

1. Vide also अनुक्रमणी given in सायणभाष्य on Rig. Sam. X. 98.

4. *Rig Sam X. 98. 5.*

दानाभिमुखी कर्तुं चिकित्वान्—जानानः। स हि तथास्तौत् यथा देवानामुदक-
संप्रदानाभिमुखी मतिरभूत्। ततः परितुष्टेषु देवेषु स देवापिरुत्तरस्मादधरमुत्तरस्मा-
दन्तरिक्षाख्यात्समुद्रादधरं समुद्रं पार्थिवं प्रति। एष विभागः समुद्रयोः। अपो
दिव्याः प्रशस्ताः प्रस्यन्दनकारीरसृजदक्षारयत्। किंलक्षणाः। वर्ष्या वर्षभूता
अभि सर्वभूतानामुपरि। देवाप्यधिकारे वर्तमान एतदकरोदन्यस्मिन् कल्पे देवापि- 5
मेवाप्येतदेवमेवास्त्विलेतं वर्तमानेनाभिसंबध्यत इति समस्तार्थः।

अथैकपदनिरुक्तम्।—ऋष्टिरायुधविशेषस्तद्बहुला सेना यस्य सोयमृष्टिषेणः। इषित-
सेनो वा नित्यमेव प्रेषितसेनः शत्रून्प्रति। सेना सेश्वरा। इन इतीश्वरनाम तेन हि सा
नित्यमेव संयुक्ता भवति। समानगतिर्वा समानमेकमर्थमुद्दिश्य जयाख्यमेतीति सेना।
पुत्रः पुरु त्रायते बह्वपि यस्मिन्पापं कृतं भवति ततोयं त्रायत इति पुत्रः। निप-10
रणाद्वा निपृणाति ददाति ह्यसौ पिण्डान् पितृभ्य इति पुत्रः। अथवा पुदिति
नरकं नरकस्थानमुच्यते ततस्त्रायत इति वा पुत्रः। ऋषिर्दर्शनात् पश्यति
ह्यसौ सूक्ष्मानर्थान्। स्तोमान् ददर्शेत्यौपमन्यवः। मन्त्राः स्तोमाः। तानसौ तार-
केण ज्ञानेन पश्यतीत्यौपमन्यव आचार्यो मन्यते। ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति—
तद्यदेनांस्तपस्यमानान् ब्रह्म॰ इत्यादि। तदेतदुच्यते यत्कृतमृषीणामृषित्वम्।15
यद्यस्मादेनांस्तपस्यमानांस्तप्यमानान् ब्रह्म ऋग्यजुःसामाख्यं स्वयंभु—अकृतकमभ्या-
गच्छदनधीनमेव तत्त्वतो दृष्टवांस्तपोविशेषेण तदृषीणामृषित्वमित्येवं ब्राह्मणेपि

---

1. *m.* तात्यस्तौत् for तथास्तौत्. 2. *d.* ह्रति° for मति°. 2–3. *a. b. d. m.* उत्तरस्मादधरमुत्तरस्मादन्तरिक्षाख्यात्समुद्रादधरं समुद्रं पार्थिवं प्रति। *bi.* उत्तरस्मादन्त-रिक्षात्समुद्रादधरं समुद्रं पार्थिवं प्रति 5. *bi.* adds अपि after कल्पे. 6. *a. b. d. m.* °तदेवमेवास्त्वि° for तदेवास्त्वि° of *bi.*; *b. m.* अभिसंबध्यते. 8. *bi.* इनेति° for इन इति of *a. b. d.* 9. *d. m.* जयाख्यमेतीति for जयाख्यमेतीति of *bi.* 10 *bi.* त्रायति for त्रायत इति. 11. *bi.* निदृणाति for ददाति. 11–12. *bi.* पुम् इति for पुदिति of *a. b. d.*; *a b. d.* omit नरकं. 12. *d. om.* वा before पुत्रः. 13. *b. m.* add अपि after सूक्ष्मान्. 14. *a. d.* add एव after इति 15. *a. b. d, m.* इत्येवमादि for इत्यादि of *bi.*; *b. m.* omit यत्त् after तत्. 16. *m.* अपस्मात् for यस्मात्. 16–17. *b. m.* adds आविर्भूतमित्यर्थः; after अभ्यागच्छत्. 17. *m.* इत्यर्थं for इत्येवं; *bi.* ब्राह्मणोपि for ब्राह्मणेपि of *a. b. d. m.*

---

12. Cf. मनुसंहिता IX. 138—

पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा॥

वि विचार्यमाणे ज्ञायते । देवापिर्देवानामाप्त्या । हि स्तुतिभिर्देवानाप्नोति हविःसंप्रदानेन च । उत्तर उद्धततर उद्धततरो भवति–उपरिष्टादवस्थानात् । अधरोधोरः । किमुक्तं भवति अध एवासौ भवति । अधः पुनर्नधावति । तस्य ह्यधोगतित्वादेवोर्ध्वगतिः प्रतिषिद्धा ।

तस्योत्तरा भूयसे निर्वचनाय । किमुक्तं भवति । तस्यैवार्थस्य प्रकृतस्य यथोत्तरस्मात् समुद्राद्वृष्टिमयाचत देवेभ्यो देवापिर्यथा च पौरोहित्यमकरोद्यथा चाया- जयच्छन्तनुं यथार्थीयेन कर्मणा । भूयसे बहुतराय निर्वचनायोत्तरैषा ॥ ११ ॥

यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् ।
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥

10 शन्तनुः शं तनोऽस्त्विति वा शमस्मै तन्वा अस्त्विति वा । पुरोहितः पुर एनं दधति । होत्राय वृतः कृपायमाणोऽन्वध्यायद्देवश्रुतं देवा एनं शृण्वन्ति वृष्टिवनिं वृष्टियाचिनं रराणो रातिरभ्यस्तो बृहस्पतिर्ब्रह्मा- सीत्सोऽस्मै वाचमयच्छद्बृहदुपव्याख्यातम् ॥ १२ ॥

यद्देवापिरिति । यद्यस्माद्देवापिः शन्तनवे राज्ञे पुरोहितः । पुरोहितो होवाभि- 15 कर्माणि ध्याभियते । ॥ पुरोहितः सन् देवापिर्होत्राय होतृकर्मणे यथार्थीये कर्मणि वृतः

---

1 $b_1$ विचार्यमाणं for °माणे of *a. b. d. m.* 2. *a. b. d m.* add असौ after भवति 3. *a. d* read आधारः for अधोर ; *a. b. d.* read अध एवासौ भवति ( perhaps better ) $b_1$. अध एवासौ भवति. 6. *m.* probably adds एनं after वा. 7. *a. b. d. m.* शन्तनुं, $b_1$. शन्तनु ; *a. d.* add निर्वच्यवचनाय, *m.* निर्विविच्यमानय. *b.* निर्विवच्यवचनाय after निर्वचनाय, *a. m* omit उत्तरा एषा. 12 B. C. D. R. *m.* read वृष्टिवनिं before वृष्टियाचिनम् omitted by $B_1$.

---

9. Rig Sam X. 98. 7.

13. उपव्याख्यातम् i. e. in Nir. I. 7.

सन् कृपयन् कृपायमाणो राज्ञोऽदीधेदन्वध्यायद्वृष्टिर्भवेदिति । तं देवश्रुतं देवापिमेनं वृष्टिवनिं वृष्टियाचिनं रराणो ददद्बृहस्पतिस्तस्मिन्नेव कर्मणि यद्यासीद्ब्रह्मत्वेऽवस्थितः । सोऽस्मै वर्षसाधिकां वाचमयच्छद्ददादित्यर्थः । तया वाचा तदनुगृहीतया देवान् स्तुत्वा तेभ्यो वर्षमलभतेति समस्तार्थः ॥

अथैकपदनिरुक्तम् ।–शन्तनुः कस्मादिति । उच्यते–स हि कंचिद्रोगार्तं दृष्ट्वा ब्रवीति हे तनो शं तवास्त्विति ततोऽसावगदो भवति । अथ वा शमस्मै तन्वा अस्त्वित्येवमसावाशास्ते । शमिति सुखनाम । तनुः शरीरं । तदसौ नित्यं शरीरायाशास्ते । पुरोहितः शान्तिकपौष्टिकाभिचारिकेषु कर्मसु पुर एनं दधति राजानः पुरस्कुर्वन्तीत्यर्थः । देवश्रुतं देवा हि एनं स्तुतीरुच्चारयन्तं शृण्वन्तीति देवश्रुत् तं देवश्रुतम् । रराण इति रातिर्दानार्थोऽभ्यस्तः ॥ 10

बृहदुपरिष्टाद्व्याख्यातम् । " बृहदिति महतो नामधेयं परिवृढं भवति "

इति । मन्त्रनिदानद्वारेण धर्मोऽयमत्र दर्शितः । ज्येष्ठे तिष्ठति कनीयसो राज्यप्राप्तिर्धर्मातिक्रमः । धर्मातिक्रमे च देवो न वर्षतीति । निरुक्तपक्षे–ऋष्टिषेणो मध्यमः तदपत्यमयमग्निः पार्थिव आर्ष्टिषेणो देवापिः स शन्तनवे सर्वस्मै यजमानायेति योज्यम् । बृहस्पतिरिति मध्यमः । स्तनयित्नुलक्षणां वाचमित्यर्थः ॥ १२ ॥ 15

---

1. *a. b. d. m.* omit कृपयन्, *m.* reads राज्ञे for राज्ञो. 1–2. *m.* omits तं; *b m.* add after देवश्रुतं and before देवापिमेनं '—देवैः श्रुतं वृष्टिवनिं । वनु याचने । चतुर्थ्यर्थे चोमयत्र द्वितीया । देवैः श्रुत्वा [ ता ? ] य वृष्टिवनये वृष्टियाचिने । रराण । रातेर्व्यत्ययो बहुलमिति शपः श्लुः । ददद्वृष्टिमित्यर्थः । 2. *a. b d. m.* add मत्वा after वृष्टियाचिनं, *a. d. m.* add इह before ददत्; *bi.* reads अददत् for ददत्. 3. *a. b. d. m.* omit यद्यासीत्; *m.* omits सः and reads तस्मै for अस्मै *bi* अददत् for अददात् of *a. b. d. m.* 5. *b, m.* add after उच्यते—

यं यं करेण स्पृशति जीर्णं स सुखमश्नुते ।
पुनर्युवा च भवति तस्मात्तं शन्तनुं विदुः ॥

इति भारते.

5–6. *d.* किंचित् for कंचित्; *m.* omits हि after ब्रवीति; *bi.* reads ब्रवीति हि तनोः शं [illegible] &c, *a. b. d.* read ब्रवीति हे तनो शं तव &c; *b.* reads शतनो for तनो. 7. *a. b. d m.* omit अस्तु before इति. 8. *m.* शान्तिकपौष्टिकेषु. 11. *a. d.* परिवृढं for परिवृढं. 13. *a. d.* omit च before देवो; but *d.* reads अत्र instead of it; *a. d.* नित्यपक्षे and *m.* नैरुक्तपक्षे for निरुक्तपक्षे. 14. *m.* omits सः. 15. *a. b. d.* read बृहस्पतिर्बृहस्पतिरिति.

---

11. *Vide* Nir. I 7.

साधारणान्युत्तराणि षड्दिवश्चादित्यस्य च। यानि त्वस्य प्राधान्येनोपरिष्टात्तानि व्याख्यास्यामः। आदित्यः कस्मादादत्ते रसानादत्ते भासं ज्योतिषामादीप्तो भासेति वादितेः पुत्र इति वा। अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् सूर्यमादित्येयमदितेः पुत्रम्। एवमन्या-
5 सामपि देवतानामादित्यप्रवादाः स्तुतयो भवन्ति तद्यथैतन्मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येत्यथापि मित्रावरुणयोः।

आदित्या दानुनस्पती॥

दानपती। अथापि मित्रस्यैकस्य।

प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन॥

10 इत्यपि निगमो भवत्यथापि वरुणस्यैकस्य।

अथा वयमादित्य व्रते तव।

व्रतमिति कर्मनाम निवृत्तिकर्म वारयतीति सत इदमपीतरद्व्रतमेतस्मादेव वृणोतीति सतोऽन्नमपि व्रतमुच्यते यदावृणोति शरीरम्॥ १३॥

15 लोकाभिधानाधिकारेणेदमुच्यते—साधारणान्युत्तराणि षड् दिवश्चादित्यस्य चेति। समानं धियन्ते इति साधारणानि नामानीत्यधिकारो वर्तत एव। उत्तराणि

---

3. A. adds च after अल्पप्रयोगं. 4–5. B. C. D R. read आदित्येयमदितेः पुत्रम्। एवमन्यासामपि; A. Bi. read आदित्येयमन्यासामपि. 12–13. Bi. reads व्रतमिति कर्मनाम वृणोतीति सत इदमपीतरद्व्रतमेतस्मादेव निवृत्तिकर्म वारयतीति सतोऽन्नमपि &c. we read with A. B. C. D. R. Durga follows Bi. in his commentary, but the reading given above is supported by all mss and is the traditional reading, and I believe it makes better sense than the one preferred by the commentator. R. reads निवृत्तिकर्म Bi. notes variants as निवृत्ति कर्म। A. Bi. conclude II. iv. 1. after शरीरम्. 15. m. reads the whole section for प्रतीक. 16. a. b. d. m. read वर्तत एव, b. वर्तते अत एव

---

2. व्याख्यास्यामः i. e. in Nir. XII. 12. et seq.

प्रकृतमपेक्ष्य । किं चात्र प्रकृतम् । अन्तरिक्षनामानि तेभ्य इमान्युत्तराणि । कियन्ति पुनस्तानि । षट् । कयोः पुनः साधारणानि । **दिवश्चादित्यस्य च** । कतमानि पुनस्तानि । 'स्वः पृश्निः नाकः'–इत्येवमादीनि । "**यानि त्वस्यादित्यस्य प्राधान्येन** वर्तन्ते प्रधानस्तुतिभाञ्जि नामानि–**सविता भगः सूर्यः पूषा** इत्येवमादीनि **तान्युपरिष्टाद्व्याख्यास्यामः**" सप्तदशेऽध्याये । इमानि तु नैघण्टुकानि 5 संस्तवनाणि च तुनामभिः साकमित्यत इह नैघण्टुकप्रकरणे निरुच्यन्ते ॥

**आह–आदित्य एव तावत् कस्मादिति** । उच्यते–शृणु । **आदत्ते** ह्यसौ **रसान्** रश्मिभिरित्यादित्यः । **आदत्ते भासं ज्योतिषां** तदुदये हि चन्द्रादीनां प्रभानाशो भवत्यन्यमहापेक्षमेतत् । **आदीप्तो भासेति वा** सर्वतो ह्येष भासा आदीप्त आवृतो भवति । **अदितेः पुत्र इति वा** । अदितिर्देवमाता तस्याः पुत्रः सोयमादितेयः 10 सन्नादित्य इत्युच्यते ।

**अल्पप्रयोगं त्वस्यैतदार्चाभ्याम्नाये सूक्तभाक् सूर्यमादितेयमिति** । अल्पप्रयोगमल्पविषयम् । तुशब्दो विशेषणार्थः । एतदेवाल्पप्रयोगविषयमितराणि सवितृभगपूषादीनि बहुप्रयोगविषयाण्यस्यादित्यस्य । इदमल्पप्रयोगविषयम् । **आर्चाभ्याम्नाये** । ऋचो यस्मिन्नभ्युर्स्युराम्नाताः सोयमार्चाभ्याम्नायो दाशतयः । तस्मिन्नल्प- 15 प्रयोगविषयम् । एतददितेः पुत्रत्वाभिप्रायमभिधानम् । आदितेय इति । **सूक्तभागेव**

---

3. *a d.* omit तु before अस्य. 4. *a. d.* omit सूर्यः. 5. *b.* omits तु after इमानि. 7. *a. b, d. m.* read आदित्यः for इति after कस्मात्. 9. *a. b. d. m.* read भवति । अत [न्य *b. m.*] महापेक्षमेतत् । *bi.* भवत्येव । महापेक्षं°; *a. d.* आदत्तो for आवृतो 12. *a. d* अल्पप्रयोगविषयं and *m.* °प्रयोगस्य विषयम् for अल्पप्रयोगं अल्पविषयम् 14. *a. d* °पूषाप्रभृतीनि for °पूषादीनि. 14–15. *m.* अर्चाभ्या° for आर्चाभ्या°. 15. *a. d.* add आम्नाये after यस्मिन्. 16 *m.* °प्रायाभिधानम्.

---

3. For स्वः etc. *Vide* Nigh. I. 4.

5. सप्तदशेऽध्याये, *i. e.*, the 12th adhyāya of Nirukta. Some writers as also *Durga* number the adhyāyas of Nirukta in continuation to those of Nighantu which is in five chapters. Hence the 17*th* chapter means the 12*th* of the Nirukta.

10. अदितिर्देवमाता. *Vide* Nir. IV. 22.

चैतदभिधानं न हविर्भाक् । न ह्यादितेय इत्यनेन नाम्ना हविराध्वर्यवे चोदितपूर्वमस्ति । यथा त्वेतत् सूक्तमेव नैघण्टुकवृत्त्या भजते तथेदमुदाहरणम्-सूर्यमादितेयमिति

" यदेदेनमदधुर्यज्ञियासः "

इत्यस्यामृचि । अन्ये तु मन्यन्ते-आदित्य इत्येतदेवाल्पप्रयोगमिति । तत्र त्वेतद्
5 विरुद्ध्यते-सूक्तभागिति । हविरपि ह्यनेनाभिधानेन चोद्यते—

" आदित्यं बहुरूपमालभत "

इति ।

" तस्य च पशोरेतत् चक्र्वेमादित्यो देव उदगात् पुरस्तात् "

इति । अथ चैवमन्यथा वाक्यद्वयविभागेन स्यात्-अल्पप्रयोगं त्वस्यैतदाचार्याभ्याम्नाय
10 आदित्य इति हविर्भाक् सूक्तभाक्च । अल्पं हविः सूक्तभाग्विषयमित्यर्थः । इदं त्वन्यत्-सूक्तमेव नैघण्टुकवृत्त्या भजते न कदाचिदपि हविः । तद्यथा-" सूर्यमादितेयम् "-इति ॥

आदित्यशब्दप्रसक्तमाह-एवमन्यासामपि देवतानामिति । देवताभेदपक्षमपेक्ष्येदमुच्यते-आदित्याभिधानप्रवादाः स्तुतयो भवन्ति । तद्यथैतदुदा-
15 हरणजातं-मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्य इति " ।

---

1 m आदितेयमित्यनेन 2. a. d. यथाचैतत् for यथा त्वेतत्; d. तथेतदुदाहरणम्. 6. m आलभेत. 8. a. b. d. m. चक्र्वं; m. उदागात् for उदगात्. 9. अथ-चैवम् for अथ चैवम् and a. d. °द्वयप्रविभागेन. 10. a b. d. m. read after हविर्भाक्, सूक्तभाक्च [ b m. च न भ ] ल्पहविः सूक्त [ b. भाक्, m. भाक् ] विषयमित्यर्थः । bi. न सूक्तभाक् । अल्प इति. सूक्तभाग्विषयमित्यर्थ. । Both these are not clear, but the former makes some sense and hence I adopt it in the text. 11 bi omits न before कदाचिदपि. 12. m. इत्यर्थः for इति 13 b. देवानां for देवतानाम् 13–14. bi. देवताप्रवादमपेक्ष्य for देवताभेदपक्षमपेक्ष्य of a b. d, m. देवताभेदमपेक्ष्य.

---

4. इत्यस्यामृचि–Vide Nir. VII. 29. RS. X. 88. 11. The full text is as follows:—

यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् ।
यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन्भुवनानि विश्वा ॥

6. The quot. is not traced.
8 "

अथापि मित्रस्यैकस्यादित्यप्रवादा स्तुतिर्भवति । तद्यथा—

“ प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।

न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ” ॥

अयमप्यन्ये बहवो निगमा इत्यभिप्रायः । प्र स मित्रेति विश्वामित्रेण दृष्टं त्रिष्टुप् ।
5 मैत्रस्य पशोः पुरोनुवाक्या । प्र अस्तु—प्रकर्षेणास्तु भवतु । हे मित्र आदित्य-
अदितेः पुत्र । स मर्तः—स मनुष्यः ‘ प्रयस्वान् ’ अन्नवान् । यः किं करोति । यः ते-
तुभ्यं शिक्षति—ददाति व्रतेन—कर्मणा निर्वपणावेक्षणादिना संस्कृत्येदं हविर्लक्षणम् ।
किं च एवमतिप्रभावस्त्वं येन स मर्तो यस्तव यद्य त्वोतः—त्वदभिप्रेते वर्तमानः त्वया
रक्षितः न केनचित् प्रत्यनीकभूतेनातिबलेनापि शत्रुणा हन्यते—हिंस्यते । न चाप्यसौ
10 सन् जीयते—अभीभूयते केनचित् । न च केवलं शत्रूणामनाधृष्यः । न एनं त्वोतं
सन्तम् अंहः अपि पापमपि अश्नोति—व्याप्नोति यत् अन्तितः—अन्तिकात् समीपात् यत्
स्वशरीरेणैव प्राज्ञातशेषा-मितामुपगते पापं तदुत्पत्तिसमकालमेव त्वदनुग्रहाद्दग्धत्वात्
त्वत्प्रेतं न व्याप्नोति । न च केवलं यदस्मिन् उत्पद्यते तदेवैनं न व्याप्नोति । किं
तर्हि । यदपि दूरात् पुत्रभ्रातृभार्यादिद्वारेणेभ्यास्कन्दति तदपि न एनमभिव्याप्नु
15 यादिति त्वोतं सन्तम् । एवं महानुभावस्त्वं तस्मात्त्वां स्तुम । इत्यभिप्रायः ॥

अथापि वरुणस्यैकस्यादित्यप्रवादा स्तुतिर्भवति । तद्यथा—

---

4. *d.* adds अपि before अयम्; *m.* omits प्र स मित्रेति. 5. *m.* reads मित्रस्य for मित्र and omits आदित्य. 6. *a. b. d. m.* omit ते. 7. *b. m.* add यागकालेन after कर्मणा; *m.* संस्कृतेनेदं for संस्कृत्येदम्. 8. *a. b. d. m.* त्वदभिप्रायदारे; *a. b. d.* read मर्त्यो for मर्तो; *m.* omits स मर्तो. 9. *m.* प्रत्यनीकभूतेनशत्रुणा हन्यते etc.; *a. d.* न चासौ for न चाप्यसौ; *b. m.* न चासौ. 10. *bi.* सन् for सन् of *a. b. d. m.*; *a. b. d. m.* omit च after न; *a. b. d. m.* add च after न and before एनं. 11. *a. b. d. m.* add न before व्याप्नोति. 13. *a.* reads तदस्यैनं, *b.* तदस्यैव न; *b. m.* तदस्यैनं नः *d.* तदेवैनं for तदेवैनम्. 14. *bi.* एनं before अभ्यास्कन्दति for एनं of *a. b. d. m.*

---

3. The quot. is RS. III. 59. 2.

" अथा वयमादित्य व्रते तव " इति ।

" उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।

अथा वयमादित्य व्रते तवानागसो अदितये स्याम " ॥

अनया त्रिष्टुभोपाकृतः शुनःशेपो वरुणं स्तुतवानात्मानं मोचयिष्यन् । वरुणप्रघासेष्ववभृथेष्टौ वारुण्यामिष्ट्यां हविषः पुरोनुवाक्येयम् । हे वरुण त्रिषु स्थानेषु—अधो मध्ये उपरिष्टाच वयं त्वया बद्धाः स्वैः पाशैर्यतोतो भूमः ।—स्तुत्या हविषा चोपसन्नस्त्वमस्माभिरतस्तावत् उत्तमं पाशमुपरिष्टादवस्थितमस्मदस्मत्तः उदश्रथाय—ऊर्ध्वं श्रथय । उच्छ्रूय्य च विमुञ्चास्मानपीडयन् । योपि चायं अधमस्ते पाशोऽस्मासु वर्तते एनमप्यवाश्रम् अव श्रथय—अवमुञ्च । तथा च योप्ययं मध्यमस्ते पाशोऽस्मन्मध्ये वर्तते एनमपि तथैवावस्थितस्तमभिसर्पयन् ऊर्ध्वमधो वा अदुःखयन्नस्मात् वि श्रथय—विमुञ्च । अथैवं त्वया वयं सर्वविमुक्तपाशाः सन्तो हे आदित्य—अदितेः पुत्र वरुण अनागसोपापाः संशुद्धसर्वकिल्बिषाः । एतदेव हि योऽस्माकीनं पाशत्रयमागस्तेनावमुक्ताः सन्तस्तवैव व्रते—तवैव परिचरणकर्मणि अदितये—चात्मनोदीनत्वाय अनुपक्षयायादरवन्तः स्थिताः स्यामेत्याशीः ।

निगमप्रसक्तमुच्यते ।—व्रतमिति कर्मनाम वृणोतीति । एवं कर्तरि कारके सतः वृणोतेः । तद्धि कर्म शुभं च कृतं सदावृणोति कर्तारम् । इदमपीतरद्व्रतमे-

1. *m.* omits अथा वयमादित्य व्रते तव इति. *d* reads उदुत्तम वरुणेति अनया त्रिष्टुभा etc. 4–5. *a. d* omit वरुणप्रघासेषु, and *a b d m* read वरुणस्य निष्कासहविष for वारुण्यामिष्ट्याम्. 6. *bi.* omits त्वया after वयम्; *d.* omits अतो. 7. *d.* अतस्पाशदुत्तमं । 7–8. *a. b. d m.* उत श्रथय ऊर्ध्वं [*a. b. d* एव] च [*m.* च] श्रथ । उच्छ्रूय्य. 8. *bi.* उच्छ्रित्य for उच्छ्रूय्य; *d.* अधमस्ते for अधमस्ते. 9 *a. b. d. m.* एनमप्यवाश्रम् for एनमवाश्रम् of *bi*, and *d. m.* अव for अव. 10. *a b. d.* एवं for एनम् *bi.* अभिसर्जयन् for अभिसर्पयन् of *a. b. d. m.* 13. *b. d m.* तेन विमुक्ता for तेनावमुक्ता of *bi*; *d.* तत्र for तव in both places. 14. *b.* adds च after अनुपक्षयाय, *d.* reads अनुपक्षया-. 16. *a. b. d. m.* शुभमशुभं वा कृतम् for शुभं च कृतम् of *bi.*

3. The quot is RS. I. 25. 15

4 मोचयिष्यन्—Vide Ait Br. XXXIII. 4.

तस्मादेव निवृत्तिकर्म यमनियमाख्यं बहिर्वैदिकमान्तर्वैदिकं वा यदभिसन्निधायोपेयते तत्पुनः वारयतीति एवं सतः तद्विपयेषु प्रवर्तमानं पुरुषकृत्यादिषु वारयति तदनुसृत्य ॥ पुरुषो निवर्ततेऽवकीर्णी भविष्यामीत्येतस्माद्भयात् । अन्नमपि व्रतमुच्यते यदावृणोति शरीरम् । रसशोणितमांसमेदोमज्जास्थिभावेन विपरिणममानम् ।
5 आदित्यशब्दप्रसक्तानुप्रसक्तमिदमुक्तम् ॥ १३ ॥

स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान्स्वृतो भासं ज्योतिषां स्वृतो भासेति वैतेन द्यौर्व्याख्याता ॥ पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्प्रष्टा रसान्संस्प्रष्टा भासं ज्योतिषां संस्पृष्टो भासेति वाथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ॥ नाक
10 आदित्यो भवति नेता रसानां नेता भासां ज्योतिषां प्रणयोऽथ द्यौः कमिति सुखनाम तत्प्रतिषिद्धं प्रतिषिध्येत ।

न॒ वा अ॒मुं लो॒कं ज॑ग्मु॒षे॒ किं॑च॒ नाक॑म् ।

न वा अमुं लोकं गतवते किंच नासुखं पुण्यकृतो ह्येव तत्र गच्छन्ति ॥ गौरादित्यो भवति गमयति रसान् गच्छत्यन्तरिक्षेऽथ द्यौर्यत्पृथिव्या अधि
15 दूरं गता भवति यच्चास्यां ज्योतींषि गच्छन्ति ॥ विष्टबादित्यो भवत्याविष्टो रसानाविष्टो भासं ज्योतिषामाविष्टो भासेति वाथ द्यौराविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ॥ नभ आदित्यो भवति नेता रसानां नेता भासां ज्योतिषां प्रणयोऽपि वा भन एव स्याद्विपरीतो न न भातीति वैतेन द्यौर्व्याख्याता ॥ १४ ॥

---

1 *m.* अभिवृत्ति° for निवृत्ति°, and adds वा before बहिर्वै°. *d* बहिर्वै° for बहिर्वै°, ▮ उपपद्यते for उपेयते. 2. *a* ▮ वर्तमानं for प्रवर्तमान. 2–3. *a d.* अनुस्मृत्वा, *b. m* अनुस्मृत्य, *bi* अनुसृत्य, *b.* अवकीर्णो for अवकीर्णी°. 4 *a. b. d* तदस्यास°, *m.* तदस्याद°, *bi.* तदाद्°   5. *a d m* आदित्यशब्दे for °शब्द°. 8 Bi notes variant as संस्पृष्टा   10. A. Bi. omit नेता रसानां before नेता भासां read by B. C D. R.   12. A. Bi. read जग्मुषे for गतवते of B. C. D. R   17 A. Bi omit नेता रसानां before नेता भासां read by B C D R.   18. A reads प्रणयोऽपि for प्रणयोऽपि A. Bi. conclude II iv. 2. after द्यौर्व्याख्याता.

अधुना प्रकृतमेवोच्यते—स्वरादित्यो भवति । सु अरणः—सुगमन इत्यर्थः । अथवा सुष्टु तमांसि ईरयति नाशयतीत्यर्थः । अथवा विशेषणविशेष्यभावेनैते वाक्ये स्याताम् । किमुक्तं भवति—सु अरण इति । उच्यते—सु ईरणः इत्येव । स्वृतो रसान् सुष्टु रसानादातुमृतो भौमानान्तरिक्षांश्च । स्वृतो भासं ज्योतिषां सुष्टु ग्रह-नक्षत्रादीनां ज्योतिषां भासमादातुमृतो—गतः । स्वृतो भासेति वा सुष्टु परिगतो 5 भासेति वा सर्वतो ह्येष परिगतो दीप्त्या भवति ॥

एतेन द्यौर्व्याख्याता । उक्तं हि "तानि चेत् समानकर्माणि समाननिर्वचनानि"—इति । सापि हि सु अरणा शोभनगमना भवति शोभनं वा अस्यामर्यत इत्येवमादि यथासंभव योज्यम् ॥

पृश्निरादित्यो भवति । आह—कस्मात् । उच्यते—प्राश्नुत एनं वर्ण इति 10 नैरुक्ताः । प्राश्नुते—प्रकर्षेण व्याप्नोति एनमादित्यं वर्णः प्रोज्वल इति नैरुक्ता मन्यन्ते । संस्प्रष्टा रसान्—स हि नित्यकालमेव रसानां संस्प्रष्टा भवति । तस्य तदेव कर्म । वक्ष्यति— "अथास्य कर्म रसादानम्" इति । संस्प्रष्टा भासं ज्योतिषाम् । आदित्यसंस्पर्शादेव ग्रहनक्षत्रचन्द्रमसो भासो भवन्ति । संस्प्रष्टो भासेति वा—दीप्त्या ह्येष सर्वतः संस्पृष्टो भवति ॥ 15

आह—अथ द्यौः कस्मात्पृश्निः । उच्यते—सापि हि संस्प्रष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ॥

---

1. m. omits अधुना प्रकृतमेवोच्यते and takes the whole section as *pratika*; a. d. add इति after भवति. 2. a b. d. m. add नाशयति after ईरयति; bi. omits it; b. वाक्येन for वाक्ये. 3–4. a b. d m. इत्येवं for इत्येव; a. d सुष्टु रसानादातुम् । स्व गतो । भौमान् &c. b. m. सुष्टु रसानादातुमृतो गतो भौमान् &c. 5. a. d. omit भासम्. and read गतिः for गतः. 8. a. d. शोभनगमना for शोभनगमना 11. m. आदित्यवर्णः for आदित्यं वर्णः. 12. a. d. omit एव after नित्यकालम्; a. b. d. m. add हि after तस्य. 16. bi. omits अथ before द्यौः; d. adds इति after पृश्निः.

---

7. For तानि चेत् etc. *vide*, Nir. II. 7.

13. वक्ष्यति *i. e.* in Nir. VII. 11.

नाक आदित्यो भवति । आह-कस्मात् । उच्यते-नेता भासां सर्वासु दिक्षु । ज्योतिषां च प्रणयः । अस्यैव हि भगवतो रश्मिजालप्रान्तोपलग्नं ज्योतिश्चक्रं बंभ्रमीति ॥

अथ द्यौः कस्मान्नाक इति । उच्यते-कमिति सुखनाम । आह ततः किमिति । 5 शृणु-तत्प्रतिषिद्धं सत्पुनरपि प्रतिषिध्येत । किमिति । उच्यते-तत्प्रतिषिध्यमानमकं भवति असुखमित्यर्थः पुनरपि च प्रतिषिध्यमाने नाकं भवति । द्विः प्रतिषेधः प्रकृतमापादयति । ततो नाकमित्युक्ते सुखमिति प्रतीयते । ब्राह्मणमपि चैतस्मिन्नर्थे भवति-न वा अमुं लोकं जग्मुषे किंच नाकम्-इति । आह-किमुक्तं भवति । अमुमेव लोकं-द्युलोकं जग्मुषे-गतवते न किंचन किंचिदकं नासुखमित्यर्थः । किं 10 कारणम् । य एव हि पुण्यकृतो भवन्ति त एव हि तत्र गच्छन्ति न च पुण्यकृतां दुःखेन भवितुं न्याय्यम् ॥

गौरादित्यो भवति । आह-कस्मात् । उच्यते-गमयति ह्येष रसानात्मानं प्रति उपक्षयं वा गमयति । किं च गच्छत्यन्तरिक्षे स एवात्मना ॥

अथ द्यौः कस्माद् गौरिति । उच्यते-यत् यस्मादियं द्यौः पृथिव्या अधि- 15 उपरि दूरमध्वानं गता भवति । किं च यत्-यस्मात् च अस्यां ज्योतींषि-ग्रहनक्षत्रतारकादीनि गच्छन्ति तस्माद्गौः ॥

विष्टबादित्यो भवति । आह-कस्मात् । उच्यते-आभिमुख्येन हि एष रसान् भौमानान्तरिक्षांश्च आविष्टः-प्रविष्टो रश्मिभिरादातुम् । किंचाभिमुख्येन आविष्टो भासं ज्योतिषां ग्रहादीनाम् । अथवा अयमेवाभिमुख्येन आविष्टो भासेति 20 वा-सर्वतो ह्येष सदीप्तो भवति ॥

---

1. a. b. d. m. उच्यते नेता भासां ज्योतिषाम् । नेता भासो भासां सर्वासु दिक्षु etc. 3. a b. d. m. बभ्रमते for बंभ्रमीति. 5 a b. d. m. read प्रतिषिध्यते for प्रतिषिध्येत and a. b. d. m. add आह before किमिति; a. d. किमिदं for किमिति. 7. m. adds चैव after अर्थे. 9. a. b. d. m. omit लोकं before द्युलोकम्. a. b d. न किंचन नाकं किंचिन्नासुखमित्यर्थः; m. किं च नाकं किंचिन्नासुखमित्यर्थः; bi. किंच किंचिद् नाकं नासुखमित्यर्थः; the reading given above is conjectural from all these. 14. a. b. d. omit यत्; bi. reads गौः for द्यौः of a. b. d. m. 18. a. d. विष्टः for आविष्टः. 18–9. a d. विष्टः for आविष्टः and a. b. d. m. add प्रविष्टो after it and before भासम्.

अथ द्यौः कस्माद्दिष्टिविति । उच्यते–इयमपि हि आविष्टा ज्योतिर्भिः ग्रह-नक्षत्रादिभिर्ये चान्ये पुण्यकृतस्तैश्च तस्माद्दिष्टिविति ॥

नभ आदित्यो भवति । आह–कस्मात् । उच्यते–नेता ह्येष भासां सर्वासु दिक्षु ज्योतिषां च प्रणयः व्याख्यातमेतत् । अपि वा भन एव स्याद्वि-परीतः । भनः–भासनः सन्नम इत्युक्तो विपर्ययेण । न न भातीति वा । 5
न न भाति भात्येवेति नभः ॥

"एतेन द्यौर्व्याख्याता" इति आदित्यवत्सैषो भासामित्यादि योज्यम् ॥ १४ ॥

रश्मिनामान्युत्तराणि पञ्चदश रश्मिर्यमनात्तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः ॥

दिङ्नामान्युत्तराण्यष्टौ । दिशः कस्माद्दिशतेरासदनादपि वाभ्य-10
शनात् । तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति काष्ठा दिशो भवन्ति क्रान्त्वा स्थिता भवन्ति काष्ठा उपदिशो भवन्तीतरेतरं क्रान्त्वा स्थिता भवन्त्यादित्योपि काष्ठोच्यते क्रान्त्वा स्थितो भवत्याज्यन्तोपि काष्ठोच्यते क्रान्त्वा स्थितो भवत्यापोपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति स्थावराणाम् ॥ १५ ॥ 15

आदित्यसंबन्धेनैव रश्मिनामान्युत्तराणि पञ्चदश । रश्मिर्यमनात् उद-कस्याश्वानां वा । तेषां पञ्च यान्यादितस्तानि साधारणानि अश्वरश्मिभिः । कतमानि पुनस्तानि । "खेदयः किरणाः"–इत्येवमादीनि । खे दयन्ते–खे गच्छन्तीति खेदयः । किरणा विक्षिप्ता भवन्ति ॥

---

1. *a. b. d. m.* add आह before अथ द्यौः. 2. *d.* ये वान्ये for ये चान्ये; *m.* सुपुण्य° for पुण्य°. 5. *m.* omits न न भातीति वा. 7. *m.* omits हि. *d.* इत्येवमादि. 11. B. C. D. R. add नाम after सत्त्वस्य, Bi. omits it. 15. A. Bi. conclude II. v. 1. after स्थावराणाम्. 18. *a. b. d.* read दयन्ति for दयन्ते. 19. *a. b. d. m.* add ते हि after किरणाः.

---

18. For खेदयः किरणाः etc. *vide* Nigh. I. 5.

दिङ्नामान्युत्तराण्यष्टौ । आदित्योपलक्षणा एव हि दिश इत्यादित्यनामभ्यः उत्तराणि दिङ्नामानि । कियन्ति पुनस्तानि । अष्टौ । कानि पुनस्तानि । "आताः आशाः उपराः "–इत्येवमादीनि । आता आगता ह्येतास्तं तमर्थं प्रति भवन्ति । आशा अभ्यश्नुवते ह्येताः सर्वमेव यदस्ति किंचित् । उपराः सर्वमेव ह्येता उपगम्य रता भवन्ती-
5 त्युपराः ॥

आह–दिशः कस्मात् । दिशतेरतिसर्जनार्थस्य । अतिसृज्यन्ते ह्यासु हविरादीनि देवतानाम् । अथवा आसदनात् तं तमर्थं प्रत्येता आसन्ना भवन्ति अपि वाभ्यशनात् । अभ्यश्नुवते ह्येतास्तं तमर्थम् ॥

तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य भवति । तत्र तस्मिन्नष्टके दिङ्-
10 नामगणे काष्ठा इत्येतन्नामानेकस्यापि सत्त्वस्य भवति । तद्यथा–काष्ठा दिशो भवन्ति । आह–किं कारणमिति । उच्यते क्रान्त्वा स्थिता भवन्ति क्रान्त्वा ह्येतास्तं तमर्थं प्रति गत्वा स्थिता भवन्ति न हि तदस्ति यत्रैता न सन्ति । काष्ठा उपदिशो भवन्ति । इतरेतरं क्रान्त्वा स्थिता भवन्ति । ता अपि हीतरेतरं क्रान्त्वा दिग्भिः सार्कं स्थिता भवन्ति । आदित्योऽपि काष्ठोच्यते । क्रान्त्वा स्थितो
15 भवति । असावपि स्वस्थानं क्रान्त्वा गत्वा स्थितो भवति । आज्यन्तोऽपि काष्ठोच्यते क्रान्त्वा स्थितो भवति । आज्यन्तोऽपि शरपर्यान्तः काष्ठोच्यते असावपि स्वप्रदेशं क्रान्त्वा गत्वा स्थितो भवति । आपोऽपि काष्ठा उच्यन्ते । ता पुनर्द्वय्यः–स्थावराश्चास्थावराश्च । तत्र क्रान्त्वा–गत्वा अवकाशमेताः स्थिता

1. *a d. m*, read एव for एते *of bi*, *b*. reads इव. *m* omits हि. 2. *m*. omits अष्टौ कानि पुनस्तानि. 4. *a*. *b d*. *m*. यावत् for यत्; *a b. d m*. अपगम्य, *bi* अपरम्य 6. *m*, अतिसृजन्ते for अतिसृज्यन्ते 8. *a. d*. add प्रति after तं तमर्थम् 9–10 *b m* add नाम after सत्त्वस्य *bi*. omits तत्र तस्मिन्नष्टके दिङ्नामगणे काष्ठा इत्येतन्नामानेकस्यापि सत्त्वस्य भवति, read by *a b d. m*. before तद्यथा. 11. *a. d*. omit क्रान्त्वा स्थिता भवन्ति. 12. *a. b. d. m*. यत्रैता for यत्रैमा. 13. *a. d* omit इतरेतरं क्रान्त्वा स्थिता भवन्ति. 14. *a. d*. omit क्रान्त्वा स्थितो भवति. 15. *b* adds च after असावपि; *d*. reads स्वस्थानं for स्वस्थानम्, *b*. omits गत्वा. 16. *d*. omits the प्रतीक. *m*. omits क्रान्त्वा स्थितो भवति. 18. *m*. द्वय्यौ for द्वय्य; *b*. omits गत्वा.

3. For आताः etc, *vide* Nigh. I. 6.

भवन्तीति स्थावराणां काष्ठात्वम्। अस्थावराणां पुनः क्रामन्ते चैताः। न क्वचित् तिष्ठन्तीति काष्ठा मेघ्या आपः ॥ १५ ॥

मन्त्रोऽपि चैतस्मिन्नेवार्थे भवति—

"अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः" ॥ 5

अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः। शरीरं शरीरं शृणातेः शम्नातेर्वा। वृत्रस्य निण्यं निर्णामं विचरन्ति विजानन्त्याप इति दीर्घं द्राघतेस्तमस्तनोतेराशयदाशेतेरिन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः। तत्को वृत्रो—मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर इत्यैतिहासिका अपां च 10 ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्त्यहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च विवृद्ध्या शरीरस्य स्रोतांसि निवारयांचकार तस्मिन्हते प्रसस्यन्दिर आपस्तदभिवादिन्येषर्ग्भवति ॥ १६ ॥

---

1. *a. b. d m.* क्रामन्त्येवैता. for क्रामन्ते चैता. 2. *d.* मेघ्या, all others मेध्या. We have followed *d.* above, as its reading suits the context better. 7. A. B. C. read मेघः शरीरं शरीरं शृणातेः. D. agrees with the text of Bi. which has only one शरीरं. Bi. gives another variant as मेघशरीरं शृणातेः; A. omits निण्यं before निर्णामं. 8. A. reads °राशयदाशयते. 10. A. omits त्वाष्ट्रोऽसुर इत्यैतिहासिकाः. 13. B. C. D. R. read प्रसस्यन्दिर; Bi. प्रपस्यन्दिर. 14. A. Bi conclude II. v. 2. after भवति.

---

5. The quot. is RS. 1. 32. 10.

अतिष्ठन्तीनामिति । हिरण्यस्तूपस्यैतदार्षम् छान्दसीत्रिष्टुप् च । त्रिष्टुभावेते । अग्निष्टोमे निष्केवल्यं नाम शस्त्रं तत्र निविद्धानीयमेतत् सूक्तम् । तत्र द्वे अपि शस्येते । न तिष्ठन्तीत्यतिष्ठन्त्यः । तासामतिष्ठन्तीनां मेघोदरान्तर्गतानामपाम् । ता हि मेघे गच्छति गच्छन्त्येव तदाधारत्वात् । अनिवेशनानामनिविशमानानां न हि ताः 5 क्वचिन्निविशन्ते यावज्जलाशयं नाप्नुवन्ति । तासामेवंविधानां काष्ठानां मध्ये- ऽवस्थितानां वाह्यतो मेघाख्यं निहितमनस्थायिनं धात्रा शरीरमावृत्य अपस्तासामेव गुप्तये । ताः पुनरापस्तस्य वृत्रस्य मेघस्य निण्यं निर्णामं येनाशौ नीचैर्नमति तं प्रदेशं विजानन्ति [illegible] । यदस्तेन प्रदेशेन विचरन्ति प्रचरन्ति निम्नानुसारिण्यो हि ताः । असावपि वृत्रस्तासु प्रसरन्तीषु तत्प्रसरणनिरोधं चिकीर्षुः स्वशरीरविस्तृत्या 10 दीर्घं तमः । स हि तमः सतत एव धूमादिप्रभवत्वात् । यावन्तं प्रदेशं निम्नमनु- सरन्त्यो मेघस्य ताः छूना भवन्ति निर्भिन्दन्त्यस्ततो बहुतरमसौ यत्नेन तदवष्टभ्यया एवं दीर्घं तम आवृत्य आशायदाशेत इत्यर्थः । कः पुनरेवमाशयत् । इन्द्रशत्रुः इति समस्तार्थः ॥

अथैकपदनिरुक्तम् ।—शरीरं शृणातेर्हिंसार्थस्य । हिंस्यते हि तत् । शाम्नातेर्वा 15 हिंसार्थस्य । दीर्घं द्राघतेः वृद्ध्यर्थस्य । वृद्धं हि तद्भवति । तमस्तनोतेः । तेन [illegible]

2. *m.* omits एतत् before सूक्तम् and reads शस्यते for शस्येते. *a. b. d.* add एते after तत्र and read एतत् सूक्तम् for एतत् सूक्तम्. 3. *b.* reads मेघोदरगतानाम्. 4. *a d.* अनिविशमानानाम् for अनिवेशनानाम्. 6. *m.* अविस्थितानाम् for अवस्थितानाम् read by others. The reading of *m.* perhaps brings out the sense of काष्ठानां better; *m.* आवृत्त for आवृत्य. not good, *b.* आपः for अपः. 7. *a, b, d* omit आपः; *a. d.* read मेघस्य वृत्रस्य. *b. m.* omit तस्य after आपः; *d.* यत्रासौ for येनाशौ and *m.* सः for तम्. 9. *a. b. d. m.* प्रसरन्तीषु for प्रचरन्तीषु of *bi*; *a. b d. m* प्रसरण° for प्रचरण° of *bi*. 10. *a d.* तमः सततः; *bi. m.* तमः स्वत एव 11. *b d.* ताः भूताः; *m.* तौ स्ताः. *bi.* ताः स्तनाः; *m.* निर्भिन्दन्त्य- स्यन्ततो for निर्भिन्दन्त्यस्ततो 12 *a. d.* आवृत्य; *m.* आवृतं; *bi.* आवृत्य. 13. *m* omits इति. 14. *a. d. m.* add एव after हिंसार्थस्य. 15. *a. d.* add हि after वृद्धम्.

5–7 तासामेवं.........तासामेव गुप्तये । Durga appears to put a very tortuitous construction on the words of Yāska here. This sentence is, however, the most unsatisfactory, and makes hardly any reasonable sense.

धर्ममेव ततं भवति । आ शयत् आङ्पूर्वस्य शेतेः । इन्द्रशत्रुः इन्द्रोऽस्य शमयिता वा—हन्तेत्यर्थः शातयिता वा—हन्तैव । घातन्यत्समर्थैकत्वम् ॥

इह मन्त्रे वृत्र इत्येतच्छ्रुतं तदेतन्निगमानुप्रसक्तं विचार्यते इत्युपयुक्तस्तच्छब्दः । आह—को वृत्रः । उच्यते—मेघ इति नैरुक्ताः त्वाष्ट्रोऽसुर इत्यैतिहासिकाः । निरुक्तमधीयते विदुश्च ये ते नैरुक्ताः । आह—यदि मेघो वृत्रो य एष मन्त्रेषु संग्रामः 5 श्रूयते तत्र कः समाधिरिति । उच्यते—अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति । अपां च मेघोदरान्तर्गतानां ज्योतिषश्च वैद्युतस्योद्भूतस्तैर्मिश्रीभावकर्मणो वर्षकर्म जायते तेन हि वैद्युतेन ज्योतिषा वायुवेष्टितेन इन्द्राख्येनोपनाप्यमाना आपः प्रस्यन्दन्ते—वर्षभावाय कल्पन्ते । तत्र एवं सत्युदकतेजसोरितरेतरप्रतिद्वन्द्वभूतयोरुपमार्थेन रूपकल्प- 10 नया युद्धवर्णा भवन्तीति युद्धे रूपकाणीत्यर्थः । न तत्र यथाभूतं युद्धमस्ति न हीन्द्रस्य शत्रवः केचन सन्ति । मन्त्रोऽपि चैतस्मिन्नर्थेऽस्ति नेन्द्रस्य शत्रवः—

" यद्चरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु ।

मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न नु पुरा विवित्से ॥"

वामदेवपुत्रस्य बृहदुक्थस्यार्षम् । त्रिष्टुप् । व्यूढस्याष्टमेऽहनि निष्केवल्ये शस्यते । 15 यद् अचरः त्वं नानाप्रकारं तन्वा वावृधानः—शरीरेण विवृद्धवान् भूत्वा वावृधानः—

---

2. *a. b. d.* हन्तेव; *m.* हन्तेव; *bi.* हन्ता वा. *a. b. d.* omit वा after शातयिता. 3. *a. b. d. m.* तदेव तन्निगमानुप्रसक्तं. *bi.* तदेतन्नैगमानुप्रसक्तम्. 4. *a. d.* add तत् before को. *b. m.* add इति after वृत्रः. 5. *bi.* omits विदुश्च ये ते after अधीयते read by *a. b. d. m.*; *m.* पृषु for एष. *bi.* reads यत्र after मन्त्रेषु; *a. d.* omit it, *m.* reads तत्र instead. *m.* संग्राम for संग्रामे of *bi.* 6 *a. b. d.* तत्र तत्र for तत्र. 9. *bi.* उपताप्यमाना. *a. b. d.* उपताप्यमाना. *m.* उपतप्यमाना; *m.* प्रस्पन्दन्ते for प्रस्यन्दते of *bi.* 10. *a. b. d.* कल्पन्ते for कल्प्यन्ते of *bi.* 11. *a. d.* युद्धरूप° for युद्धे रूप°. 15. *a.* बृहदुक्थस्य° for बृहदुक्थ°.

---

6. श्रूयते-*Cf.* Ait. Br. XII. 9. The verses celebrating this are too many to refer to.

14. The quot. is RS. X. 54. 2.

पुनः पुनर्वर्धमानः । कथं पुनरचरः । बलानीन्द्र प्रब्रुवाणो जनेषु । बलानि-आत्मीयानि वीर्याणि हे इन्द्र प्रब्रुवाणः इव-प्रकथयन्निव । क । जनेषु । किं त्वं तथैव । न । मायेत्सा ते यानि युद्धान्याहुः । यानि युद्धान्याहुरैतिहासिका नानारूपाण्युपप्रदर्शयन्तः सा अपि च ते-तव माया इत् मायैव । किं कारणम् । नाद्य शत्रुस्तवास्ति प्रत्यनीकभूतः
5 न नु पुरा-नापि पुरा कश्चिदासीत् । यावद्वीर्यं किंचित्-कश्चिदीस्ति सर्वं तत्त्वमेव । "वीर्यं वै प्राणो वीर्यमिन्द्र इति ह विज्ञायते" । क ते शत्रुर्येन सार्कं युयोधिथ । एतत्त्वमपि विवित्से-वेत्स्येव न केवलमहमेवेत्यभिप्रायः । एवमेतस्मिन्मन्त्रे मायामात्रमेव युद्धमिति श्रूयते । विज्ञायते च "तदाहुर्नैतदस्ति यद्देवासुरमिति" । तस्मात्साधूक्तम् अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते
10 तत्रोपमार्थेन युद्धवर्णा भवन्ति ॥

आह-किं ब्रूतवदेव युद्ध-रूपाणि भवन्ति । नेत्युच्यते-अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च । तुशब्दः समुच्चयार्थो द्रष्टव्यः । वृत्रवधाहिवधेति मन्त्रवर्णा मन्त्र-

---

1 *b*. कथमूतत् for कथम्. 2. *a*. adds प्रपयन्निव, *a b d. m*. प्रकथयन्निव, after प्रब्रुवाण इव, *bi* does not read it. 3. *a. b. d. m*. add after युद्धान्याहु -माया सा तव ऐश्वर्ययोगात्तथा वाऽन्यथा वा भवति । न ते तव निजरूपं एवं [ *b m*. omit ] अवधृतमस्तीत्यभिप्राय· ।, *a b d*. read यानि च यानि and *m* यानि च यु° for यानि यु° of *bi* 4. *a. b d. m*. omit ते; *a. b. d. m*. omit माया इत्. 5. *d*. omits कश्चित्; *m*. reads प्राणोवीर्य for प्राणो वीर्यं of all the Mss; *m*. reads वर्णम् for वीर्यं; *a. b*. omit तत्. 6. *bi*. *d*. युद्धयेथा for युयोधिथ. 7. *a b. d* add च after एतत् and omit एव after अहम्; *m*. अहंखल्य° for अहमेवेत्य° of *bi*; *a. b. d. m*. कुतः for क of *bi*.; *a*. मायामात्रमेव for एवमेतन्मन्त्रे मायात्मैव of *bi* 8. *b. m*. एतस्मिन्मन्त्रे neither. 9 *a d* read वर्षं and *b*. वर्षकर्म before जायते, Jîvânanda's edition has तस्मादाहु for तदाहुः. 11. *a. b d. m*. युद्धरूपाणि for रूपाणि of *bi*. 12. *a. d*. read तुशब्द·, *m*. च, *bi*. च·, before समुच्चयार्थो; *a b d. m*. add मन्त्रलिङ्गानि after मन्त्रवर्णा°, *bi*. omits it.

---

6 विज्ञायते-Ait.-Br. ?
8. विज्ञायते च ?

लिङ्गानि ब्राह्मणवादाश्च शाखान्तरेषु भवन्ति तदप्युपेक्षितव्यम् । तस्मिन्नहिनाख्ये मेघे हते प्रसस्यन्दिरे प्रस्यन्दितवत्य आपः ।

तदभिवादिनी एषर्ग्भवति । तदभिवादिन्येषा तस्यार्थस्याभिमुख्येन वादिनी एषा ऋग्भवति ॥ १६ ॥

"दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥" 5

दासपत्नीर्दासाधिपत्न्यो दासो दस्यतेरुपदासयति कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ताः । अहिरयनादेत्यन्तरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति । निरुद्धा आपः पणिनेव गावः । पणिर्वणिग्भवति पणिः पणनाद्वणिक् पण्यं नेनेक्ति । अपां बिलमपिहितं 10 यदासीत् । बिलं भरं भवति बिभर्तेर्वृत्रं जघ्निवानपववार तद्वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा । यदवृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते ॥ १७ ॥

दासपत्नीरहिगोपा अतिष्ठन्निति । दासपत्नीरापः । अहिगोपा मेघगोपा 15 अतिष्ठन्निपतवत्यो निरुद्धास्ता दासपत्नीरापः । यथा केनचित्पणिना वणिजा

---

1. *a. b. d. m.* शाखान्तरेषु. *bi.* शाखान्ते *a. b d. m* तस्मिन्नहिनाख्ये for तस्मिन्नहिनाख्ये of *bi.* 2. *a. b. d. m* add प्रस्यन्दितवत्यः after प्रसस्यन्दिरे, *h.* omits it. 3. *bi.* तदभिवादिनी एषा and omits the following up to ऋग्भवति in the next sentence. 14. A. Bi. conclude II. v. 3. after विज्ञायते. 15. *bi.* दासपत्नीति । अपां यद् बिलं निर्गमद्वारं for दासपत्नीरहिगोपा etc. to निर्गमनद्वारम्.

---

6. The quot. is RS. I. 32. 11.

कस्मिंश्चिद्द्वीपान्तरे विक्रयार्थं गावो निरुद्धास्तिष्ठेयुरेव स्थितवत्यस्ताः पुनरेव निरुद्धाः सत्यस्तेन मेघेन । तासामपां बिलं निर्गमनद्वारमपिहितमासीत् तेन मेघेन तत् यदा इन्द्रस्तं वृत्रं मेघं जघन्वान् निजघ्निवानहन् हत्वा च अपववारा- पावृतवान् । अथ तदा तस्मिन्निहतेऽपावृते च द्वारे ता आपः प्रसस्यन्दिरे वर्षभावेनेति 5 समस्तार्थः ।

अथैकपदनिरुक्तम् ।—दासपत्नीर्दासाधिपत्न्यो । दासः कर्मकरस्तं हि ता अधिष्ठाय पान्ति रक्षन्ति । स हि कर्मणा श्रान्तस्तासु पीतासु विश्रान्त आप्यायितो भवति । विग्रहप्रसक्तं निरुच्यते—दासो दस्यतेः । स हि उपदासयति—उपक्षपयति कृष्यादीनि कर्माणि । अहिगोपाः अहिना गुप्ताः । अहिः कस्मात् । उच्यते— 10 अयनात् । एति असौ अन्तरिक्षे । शब्दसामान्यान्निरुच्यते—अयमपीतरोऽहिः— सर्पः एतस्मादेव । असावपि हि एति । अथवा निर्ह्रसितोपसर्गः स्यात् । कथम् । आहन्ति—असौ भोगेनेत्यादि । आङ्पूर्वस्य हन्तेः । स पुनरयमुपसर्गं निर्ह्रस्य ह्रस्वं कृत्वा अहिरुच्यते । पणिर्वणिग्भवति—इति पर्यायेण तत्त्ववचनम् । पणिः पणनात् पणिति असौ व्यवहारं करोति । पर्यायप्रसक्तं निरुच्यते—वणिक् 15 पण्यं वणिजो यद्द्रव्यं तत्पण्यं तदसौ नेनेक्ति—निरयुक्तार्थं शुचीकरोति मूल्यार्हं स्यादिति । बिलं भरं भवति बिभर्तेर्धातोः भृतं हि तदुदकादिभिः । वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा—इत्येषां धातूनामन्यतमस्य । ब्राह्मणमपि चैतस्मिन्नर्थे भवति— यदवृणोत् अन्तरिक्षमुदकं वा महाभाव तद्वृत्रस्य वृत्रत्वमिति एवं ब्राह्मणेऽपि विज्ञायते विचार्यमाणे ज्ञायते । अथवा यदवर्तत इन्द्रेण हतो वृत्रो मेघोऽपां बिलेऽपावृते- 20 ऽपो वृष्टिभावेनावर्तयत्प्रावर्तयत् तद्वृत्रस्य वृत्रत्वम् । अथवा यत् अवर्धत असावतिमात्रमात्मानं तद्वृत्रस्य वृत्रत्वं स्यादिति ॥ १७ ॥

---

3. *a b d m.* मेघं वृत्रं for वृत्रं मेघम्; *a b d. m* omit जघन्वान्; *d.* अहन्, *m.* अहनत्, *b₁.* अहत 4 *a. d* प्रसस्यन्दिरे, *b. m* प्रसस्य°, *b₁* प्रस्य°. 8. *a. b d.* भवति, *b₁.* भवन्ति; *a. b d.* उपक्षपयति, *b₁* उपक्षयति. 12. *m* उपसर्गो for उपसर्गम्. 13. *b* omits निर्ह्रस्य 14 *a d.* पणाति, *b₁* पणिति. 16. *a.* reads ध्रियते for भृतम्. 17. *b. m.* इत्येतेषां for इत्येषाम्. 18. *b₁* ब्राह्मणोऽपि for ब्राह्मणेऽपि of *a b. d m.* 19. *b₁* विचार्यमाणो for विचार्यमाणे of *a b. d m*; *b. m.* add after यदवर्तत and before इन्द्रेण हतो :—तद्वृत्रस्य वृत्रत्वमिति । त्वष्टा इन्द्रशत्रुर्वर्धस्वेत्यनेनाऽऽलभ्यमान सोमो यस्मादसुररूपेण [ *m.* न ] वर्तत [ *m.* ते ] [ *m.* अथवा ] यदवर्तयत् ।

रात्रिनामान्युत्तराणि त्रयोविंशतिः । रात्रिः कस्मात्प्ररमयति भूतानि नक्तंचारीण्युपरमयतीतराणि ध्रुवीकरोति रातेर्वा स्याद्दानकर्मणः प्रदीयन्तेऽस्यामवश्यायाः ॥

उषोनामान्युत्तराणि षोडश । उषाः कस्मादुच्छतीति सत्या रात्रेरपरः कालस्तस्या एषा भवति ॥ १८ ॥ 5

"काष्ठा इत्येतदनेकस्यापि सत्त्वस्य भवति" इत्यत आरभ्य दिङ्नामप्रसक्तानुप्रसक्तमुक्तम् । प्रकृतमिदानीमुच्यते—रात्रिनामान्युत्तराणि त्रयोविंशतिः । रात्रेर्नामानि रात्रिनामानि । उत्तराणि इति प्रकृतेभ्यो दिङ्नामभ्यः । तमःसततया हि रात्रिस्तस्य च तमसो दिक्ष्वेवावभासो भवत्यतो दिङ्नामभ्य उत्तराणि रात्रिनामानि । कियन्ति पुनस्तानि । त्रयोविंशतिः । 10 त्रीणि च विंशतिश्च त्रयोविंशतिः । कतमानि पुनस्तानि । "श्यावी क्षपा शर्वरी"—इत्येवमादीनि । श्यामवर्णा हि रात्रिरिति श्यावी । क्षैः क्षेः कर्मभिरहनि क्षीणान्प्राणिन इयं स्वापेन पातीति क्षपा । अस्यां हि सुप्ताः पुनर्नवा [illegible] प्राणिनः प्रातरुत्तिष्ठन्ति । शरणमस्यां स्वापार्थं क्रियत इति शर्वरी । इत्येवमादि सर्वत्र योज्यम् ।

आह—रात्रिः कस्मादिति । उच्यते—इयं ह्यागच्छन्ती प्रकर्षेण रमयति । 15 कानि । भूतानि नक्तंचारीणि—पिशाचादीनि । तानि हि विगतेऽहनि रात्र्यामुपस्थितायां प्रहृष्टा विहाराय इति प्रकर्षेण रमन्ते । उपरमयतीतराणि ध्रुवीकरोति इतराण्यपि दिवाचारीणि सैवोपरमयति । तस्यां ह्युपस्थितायां दिवाचराणि भूतानि मनुष्यादीनि इतिकर्तव्यताभ्य उपरमन्ति । उपरम्य च स्थिरीभवन्ति निद्राय । रातेर्वा स्याद्दानकर्मणो—दानार्थस्य । आह—किमस्यां प्रदीयते । उच्यते—प्रदी- 20

---

4. B. C. D. read षोळश for षोडश. 5. A. Bi. conclude II. vi. 1. after भवति 7. *b. m* add इदम् before उक्तम् 8. *a. d.* omit रात्रिनामानि. 9. *bi.* तम सतन्त्या for तम सततया of *a. b d. m.* 11. m. omits त्रीणि च विंशतिश्च त्रयोविंशतिः. 12. m. श्यामवर्णानि for श्यामवर्णा हि. 16. *a. d.* नक्तंचराणि for नक्तंचारीणि; *a. d.* read तानिह for तानि हि

---

6. For काष्ठा इत्ये॰ etc. *Vide* Supra II. 15.

12. For श्यावी क्षपा etc. *Vide* Nigh. I. 7.

**यन्तेस्यामवश्यायाः** । अवश्यमायन्तीत्यवश्यायास्तुषारा इत्यर्थः । ते हि रात्रौ निपतन्ति ॥

**उषोनामान्युत्तराणि षोडश** । उषसो नामानि । रात्रेरेव अपरः कालः उष-आख्यो भवतीति रात्रिनामभ्य **उत्तराणि उषोनामानि** । कियन्ति पुनस्तानि । 5 षोडश षट् च दश च षोडश । कतमानि पुनस्तानि । "विभावरी सूनरी"–इत्ये-वमादीनि । विविधामियं भासं वृणोतीति विभावरी । शोभनं नराणामस्यामुत्थानं भवतीति सूनरी । इत्येवमादि निर्वचनं योज्यम् ।

आह–**उषाः कस्मादिति** । उच्यते–**उच्छतीति सत्याः** । उच्छी विवासे । विवासयति हीयं तमांसि तस्मादुच्छतीत्येवमस्या एतस्मिन्कर्मणि **सत्याः** कर्तरि 10 कारके उषा इत्येतदभिधानं भवति । आह–का पुनरियमुषा इति । उच्यते–**रात्रेरपरः कालः** स उषा इत्युच्यते । आह–कथमेतदुच्यते रात्रेरपरः काल उषा इति । उच्यते–तस्या उषसो राज्यपरकालत्वे **एषा निर्वाचिका ऋग् भवति** ॥ १८ ॥

"इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥"

15 **इदं श्रेष्ठं ज्योतिषां ज्योतिरागमच्चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत्स्थानम्** । स्त्रीयोनिरभियुत एनां गर्भः । **तस्या एषापरा भवति** ॥ १९ ॥

---

1. *a. d.* add विप्रुषः before तुषारा. 5. *a. d.* omit षोडश after च 6. *d.* त्रिविध for विविधां 8 *a d* omit इति after कस्मात्; *b m.* omit इति उच्यते 10. *b₁* add मास after कारके 11. *a d* गम्यते for उच्यते, *b* adds स after काले; *m.* एनत् for एनद् 12. *b₁* राज्यपरकालत्व । एषा निर्वाचिका for the reading given above of *a. b. d m* 18. A. B₁. conclude II. vi. 2. after भवति

---

5. For विभावरी, सूनरी etc. *Vide* Nigh I. 8.

8. उच्छी-धा० पा०-भ्वादि (216)

14. The quot. is Rs. I. 113. 1.

**इदं श्रेष्ठमिति** । आङ्गिरसस्य कुत्सस्येयमार्षम् । उत्तरा च । उभे अपि त्रिष्टुभावेते । प्रातरनुवाकाश्विनयोः शस्येते । **इदम्**-उषोलक्षणं **ज्योतिः** **श्रेष्ठ**मादित्यादीनां **ज्योतिषा**मिति निर्धारणे षष्ठी । आदित्यो हि तापकः प्रकाशकश्च । चन्द्रमा अप्यतिशीतः प्रकाशकश्च । इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकं च । इत्येवमादित्यादीनामिदमेव श्रेष्ठम् । **आगात्-आगमत्**-आगच्छतीत्यर्थः । **चित्रं**-चायनीयं पूजनीयं वा श्रेष्ठत्वादेव । **प्रकेतः-प्रकेतनं-प्रज्ञाततममजनिष्ट**-जातमित्यर्थः । जातं सदागच्छति सर्वासु दिक्षु । **विभ्वा-विभूततममिदमतिमहत्त्वाद्विभूततमं**-विस्तीर्णतममितराणि परिच्छिन्नतराणि ज्योतींष्यपेक्ष्य । किं च **यथा प्रसूता** प्रकर्षेण सूता प्रसवमनुप्राप्ता । सूतिशब्दः प्रसवार्थः । **रात्रिः सवितुः-आदित्यस्य सवाय-प्रसवाय**-आदित्योत्पत्त्यै देशो जायते । एवमेव रात्री रात्रिरुषसो जन्मार्थं **योनिं** 10 **स्थानमवकाशमुषस** आत्मलाभाय **आरैक्-अरिचत्**-आरेचयति-ददातीत्यर्थः । यथोषा आदित्यस्य जन्मतो हेतुस्तदनन्तरजन्मत्वादेवं रात्रिरुषसो जन्मनो हेतुः । इत्येवमस्यामृचि गर्भेरेवापरः काल उपःसंज्ञित इति गम्यते । स्थानं योनिशब्देनोच्यते । यद्धि यस्मिन्निर्धीयते तत्तेन साकं युतं भवति मिश्रीभूतमित्यर्थः । इयमपीतरा-**स्त्रीयोनिः** एतस्मादेव । किं कारणम् **अभियुतो हि गर्भ एनां** भवति- 15 आमिश्रीभूत इत्यर्थः । पूर्वत्र-" अयमपीतरो योनिः एतस्मादेव । परियुतो भवति "

---

1. *m.* reads आङ्गिरस° *for* आङ्गिरसस्य, and omits उत्तरा च　2. *b.* adds शस्त्रयोः before शस्येते. *m.* reads शस्यते. *a d.* add च after इदम्　3. *a.* omits प्रकाशक. to नातिशीतम् ; *b. d m.* add and *a. bi.* omit च after first प्रकाशकः and *a. d m.* अप्यतिशीतः for अथ निशीतः of *bi.*　5. *a. b. d. m.* omit आगमत्　6. *a b. d m.* add दर्शनीयम् after पूजनीयम् and omit प्रकेत ; *a. b. d. m.* add प्रकाशनम् after प्रज्ञाततमम् ; *m.* जात सत् for जातं सत्. 8 *m.* प्रसूता for सूता.　9. *a. b d m.* omit सवितुः ; *a b d. m.* omit सवाय. 10 *a. b. d. m* omit रात्री. *b d. m* add अपि after उषस .　11. *a.* उषस लाभाय, *b.* उषसः आत्मलाभाय, *d. m.* उषस आत्मलाभाय, *bi.* उषसे आत्मला°; *a. b. d. m.* omit अरिचत्.　13 *bi* रात्रेरेव वापरः for रात्रेरेवापरः of *a. b. d. m* ; *b.* उषःसंज्ञ for उषःसंज्ञित.　14. *a. d.* निधीयते, *bi.* निर्धीयते. *b. m.* धीयते. 15. *a. d.* omit from स्त्रीयोनि to परियुतो भवति.

---

9. सवाय-For the gr. &c. *Cf.* सायणाचार्य on the verse. ( सवाय, रात्री ).

16. पूर्वत्र-*Vide* Supra II. 8.

इति परिष्वजनक्रियासामान्येन निरुक्तो योनिशब्दः । इह पुनः अभियुत एनां गर्भ इति मिश्रीभावसामान्येन । उभयलिङ्गत्वं चास्योपदर्शितम्–इह स्त्रीलिङ्गं तत्र पुलिङ्गमिति । तस्या उषस एषा अपरा ऋग् भवति–अस्यैवार्थस्य दृढतायै रात्रेरपरः काल उषा उच्यत इति ॥ १९ ॥

"रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥"

रुशद्वत्सा सूर्यवत्सा रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः । सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वा । रुशती श्वेत्यागात् । श्वेत्या श्वेततेररिचत्कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः । कृष्णं कृष्यतेर्निकृष्टो वर्णः । अथैने संस्तौति समानबन्धू समानबन्धने अमृते अमरणधर्माणावनूची अनूच्याविति इतरेतरमभिप्रेत्य द्यावा वर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया सह चरत इति स्यादामिनाने आमिन्वाने अन्योन्यस्याध्यात्मं कुर्वाणे ॥

अहर्नामान्युत्तराणि द्वादश । अहः कस्मादुपाहरन्त्यस्मिन्कर्माणि । तस्यैष निपातो भवति वैश्वानरीयायामृचि ॥ २० ॥

रुशद्वत्सेति । रुशद्वत्सा रोचिष्णुवत्सा । सूर्यो हि रोचिष्णुस्तं सूर्यमस्या वत्समाह मन्त्रदृक् । साहचर्यात् । मातृसहचरो हि वत्सो भवति । अयमपि चानयो-

1. *m.* omits इह, *a.* अभियुतं for अभियुतः. 2. *m.* °पदर्शितम् for °पदर्शितम् 11 B. C. D R. *m* add अनूच्यौ after अनूची Bi omits it. *Durga* also takes no notice of it. 12 B. C. D R *m.* add सह after तया, Bi. omits it 13 B C. D. R. *m.* add आमिन्वाने after आमिनाने; Bi. omits it. 15 A Bi. conclude II. vi. 3. after ऋचि 16. *m* omits रुशद्वत्सेति, *a. b. d m.* omit सूर्यम् 17. *b.* omits हि before वत्सो

6 The quot. is Rs. I. 113, 2.

वत्सा सह चरतीत्येतस्मात्सामान्याद्वत्स उच्यते । रसहरणाद्वा । यथा हि मातुरूधसः क्षीराख्यस्य रसस्याहर्ता भवति वत्स एवमेषोऽप्यौषधिकानामवश्यायाख्यानां रसानामाहर्ता भवति रश्मिभिरित्येतस्मात्सामान्याद्वत्सत्वम् । रुशती–रोचनशीलात्मनापि । श्वेत्या श्वेततेर्धातोः । श्वेतो वर्ण एत्यस्यां सा श्वेत्या–श्वेतवर्णेत्यर्थः । या चैवंलक्षणा उषाः–सा आगादागच्छति । आगतायाश्च तस्याः आरैक्–रिचदारेचयति । 5
कृष्णा–कृष्णवर्णा रात्रिः । किमारेचयति । सदनानि–स्थानानि । अस्या उषसः । येष्वियमुषाः स्थानेष्वागता सत्यासीदति तान्यारेचयति रात्रिः । एवं तावदयमर्धर्चो रात्र्युषसोर्विभक्तस्तुतिः । अथ अनेनोत्तरार्धर्चेन पने रात्र्युषसौ संस्तौति । समानबन्धू एते रात्र्युषसौ समानबन्धने समानमनयोर्बन्धनम् । आदित्यस्येयं वस्तुमयं प्रति रात्रिर्बद्धा–रोचिष्येदयं प्रत्युषाः । एवं समानबन्धू । अमृते–अम- 10
रणधर्माणौ । न हि रात्र्युषसौ म्रियेते । अनूची इतीतरेतरमभिप्रेत्य । इतरेतरं संश्लिष्टे स्तेते । द्यावा वर्णं चरतः । ते एव रात्र्युषसौ द्यावौ द्योतनादुषा हि स्वेन प्रकाशेन द्योतते रात्रिरपि स्वेन तमोवीर्येण नक्षत्रगणेन वा स्वमधिकारं प्रति द्योतते । एवं हि द्यावेति द्विवचनम् । अपि वा तृतीयान्तमेकवचनमेतत्स्यात् । द्योतया द्यावा । "सद्युके" तया सह स्पर्धमाने चरतो–गच्छतः । कथं पुन- 15
श्चरतः । आमिनाने । आङ् अभ्यर्थे । तथा अपि रात्रेरधि आत्मानं निर्मिमीते रात्रि-

---

1. *m* सहचरीति for सहचरतीति; *a. d* add इति after वत्स. 2 *a d* read क्षीराख्यरसस्याहर्ता, *m.* क्षीराख्यस्य रसस्य हर्ता. 3 *a. d* read रोचनेशीला 4. *a. d* read श्वेतोवर्णं एतेनस्या श्वेतवर्णे त्यर्थे, *b.* श्वेतोवर्णं इत्यस्या सा श्वेत्या श्वेत्यवर्णेत्यर्थः, *m.* श्वेतोवर्णो पत्यस्या असौ श्वेत्या श्वेतवर्णेत्यर्थ, *bi.* श्वेतोवर्णं पत्यस्या श्वेतवर्णेत्यर्थः 5-6. *m d.* add आपि after तस्या; *a. b d. m* omit अरिचत् and कृष्णा. 7. *a. d.* read येष्वेव for येष्वियं. 8. *a b. d. m* read उत्तरेणार्धर्चेन for उत्तरार्धर्चेन of *bi.*; *a. d.* omit पने, *b. m.* read पते. 11. *m.* इतीतरेऽभिप्रेत्य ; *a. b. d. m.* read इतरेतरसंश्लिष्टे. 12. *d.* होते for स्तेते; *m.* वर्ण for वर्ण. 13. *b. m.* [illegible] स्वमधिकारं प्रति 14 *a. b d. m* अथवा for अपिवा. 15–16. *a. d. m.* add च after कथम् 16. *b. m* add वर्णे रूपं before आमिनाने, *j.* adds after अभ्यर्थे the reference in Nir. V. 7.

---

15. For 'सद्युके' *Vide* Pāṇ. II. 3. 19.

16. For आङ् अभ्यर्थे *Vide* Nir. V. 7. *infra* तोदस्येव शरण आ महस्य । तुदस्येव शरणेऽधि महत. इति.

रप्युषसः इतरेतरसंश्लिष्टे हीमे रात्र्युषसौ । तस्मादेवमुच्यते—**अन्योन्यस्याध्यात्मं कुर्वाणे** इति ॥

उषःशब्दतत्त्वावधारणार्थं प्रसक्तावेतौ मन्त्रावुदाहृतौ । प्रकृतमिदानीमुच्यते—**अहर्नामान्युत्तराणि द्वादश** । अह्नो नामानि अहर्नामानि । **उत्तराणि** प्रकृतेभ्य
5 उषोनामभ्यः । उषस एवानन्तरमहर्भवति तस्मादुषोनामभ्य उत्तराण्यहर्नामानि । कियन्ति पुनस्तानि । द्वादश । द्वे च दश च द्वादश । कानि पुनस्तानि । "वस्तोः द्युः भानुः"—इत्येवमादीनि । वस्ते ज्योतिषेतदिति वस्तोरित्युच्यते । यथैव हि सूत्रं मन्त्रे तथैवेह समाम्नातम् । द्युः—द्योतते ह्येतद् ज्योतिषा । भानुः—भासते ह्येतद् ज्योतिषेत्येवमादि योज्यम् ।

10 आह—**अहः कस्मात्** । उच्यते—**उपाहरन्त्यस्मिन्कर्माणि** न हि तथा रात्रावनुतिष्ठन्ति कर्माणि कर्मकरा यथाहनि । **तस्य—अहः एष निपातो भवति** नैघण्टुकस्य **वैश्वानरीयायां**—वैश्वानरदेवतायामृचि—॥ २० ॥

"अहश्च कृष्णमहरर्जुनं च विवर्तेते रजसी वेद्याभिः ।
वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥"

15 अहश्च कृष्णं रात्रिः शुक्लं चाहरर्जुनं विवर्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिर्वैश्वानरो जायमान इवोद्यन्नादित्यः सर्वेषां ज्योतिषां राजावाहन्नग्निर्ज्योतिषा तमांसि ॥

**मेघनामान्युत्तराणि त्रिंशत्** । **मेघः कस्मान्मेहतीति सतः** । **आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः** । **उपर**

---

1. *b.* reads उच्यते for उच्यते 2. *b. m.* omit इति after कुर्वाणे. 3. *m.* °वधारणार्थं. 4. *m.* om. प्रकृतेभ्य. 8. *d* भानु for भानुः; *m.* ह्येनत् for ह्येतत्. 10. *b m.* omit आह 11. *m.* निपातो भवति. 15. *bi.* notes variant as मदभिर्- 18. Bi notes variant as मेहयतीति

---

7 For वस्तो etc. *Vide* Nigh. I 9.

14. The quot. is Rs. VI. 9, 1.

उपलो मेघो भवत्युपरमन्तेऽस्मिन्नभ्राण्युपरता आप इति वा तेषामेषा भवति ॥ २१ ॥

अहःशब्दो हि रात्रिमहश्चोभयमभिधत्ते अतः संदेहपदम् ॥ तस्यैष विभागोऽस्या-मृच्युपपदविशेषात्प्रदर्श्यते–अहश्च कृष्णमिति । भारद्वाजस्येयमार्षम् । त्रिष्टुप् । पृष्ठ्यस्य षष्ठेऽहन्याग्निमारुते शस्त्रे शस्यते । अहश्च कृष्णं रात्रिः शुक्लं चाहरर्जु- 5 नम् । अर्जुनशब्दो हि शुक्लपर्यायः । विवर्तेते विपर्ययेण वर्तेते । रात्रिरतीता अहरायातम् । अहरतीतं रात्रिरायाता इत्येवम् । रजसी–रञ्जके । ज्योतिषा हि भूता-न्यहो रञ्जयति तमसा रात्रिः । वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः न हि तासां प्रवृत्तीनामन्तोऽस्ति अहनि च रात्रौ च प्राणिनामतस्ता वेदितव्या एव भवन्ति बहु-त्वात् । न हि विदिता नाम ताः कदाचित् । किं च वैश्वानरोऽग्निरवातिरद्- 10 धाहश्चपहन्ति स्वेन ज्योतिषा तमांसि । कथं पुनरपहन्ति । जायमानो न राजा–जायमान इव उद्यन्सर्वेषां–सर्वभूतानां राजा आदित्यः । यथा युधादित्यस्तमांस्यपहन्ति दिवा एवमग्निरपि रात्रावपहन्तीत्यग्निरादित्येन तमउपघातं प्रत्युपनीयते ॥

मेघनामान्युत्तराणि त्रिंशत् । मेघानां नामानि मेघनामानि तानि उत्तराणि 15 प्रकृतेभ्योऽहर्नामभ्यः । मेघा ह्यहनि च रात्रौ चाविशेषेण भवन्त्यतो रात्र्यहर्नामभ्य उत्तराणि मेघनामानि । कतमानि पुनस्तानि । 'अद्रिः ग्रावा गोत्रः'–इत्येवमादीनि ।

---

2. A. Bi. conclude II. vi. 4. after भवति. 4. *bi.* प्रदर्श्यन्ते for प्रदर्श्यते of *a. b. d. m.* 5. *bi.* reads पृष्ठस्य for पृष्ठ्यस्य of *a. d. m.* 6. *a. d.* विवर्तेते and वर्तेते, *m.* वर्तेते, for विवर्तेते and वर्तेते of *bi.* 9. *bi.* प्राणिनामन्तस्ता for प्राणिनामतस्ता of *a. b. d. m*; *m.* omits एव after वेदितव्या. 10. *bi.* विदितानामन्ताः, *a. b. d.* न हि विदिता [ना *b. d. m.*] मताः ( ता *m.* ) कदाचित्. 10-11. *a. b. d.* omit अवातिरत् and *a.* reads अपाहरत् for अवाहन्, *m.* reads अपाहरत् अपहरन्ति for अवातिरत् अवाहन् अपहन्ति; *j.* adds one more । after जायमानो. 12. *a. b. d. m.* add इव after वहन् and omit सर्वेषां. 13. *a. d.* read यथाप्युद्यन्नादित्यः; *a. b. d. m.* तमोपघातं for तमउप°. 15. *a. b. d. m.* read मेघनामानि omitted by *bi.* after मेघानां नामानि; *a. b.* omit तानि. 16. *a b. d. m.* add च after अहनि; *bi.* चाशेषेण for चाविशेषेण of *a. b. d. m.*; *a. d.* रात्र्युपोऽहर्नामभ्य.

---

17. For अद्रिः ग्रावा etc. *Vide* Nigh. I. 10.

अद्रिरादारयितव्यो भवति ह्यसावुदकार्थमित्यद्रिः । ग्रावा गृणातेर्वा गृह्णातेर्वा । गृणात्यसौ शब्दं करोति गृहीतं चोदकमनेनेति । गोर्वोगत्रेति गोत्रः इत्येवमाद्यभ्यूहितव्यम् । पर्वतनामस्वेपि यथासंभवं योज्यम् ।

आह–मेघः कस्मात् । उच्यते–मेहतीति सिञ्चत्यसौ । एवं कर्तरि कारके सतः
5 अस्यैतदभिधानं भवति मेघ इति । तेषां मेघनाम्नाम् आ उपर उपल इत्येताभ्यां प्रागुपर उपल इत्येताभ्यां यानि नामानि तानि साधारणानि पर्वतनामभिः । तदेषां प्रकरणोपपदाभ्यां विशेषोवधार्यः । आ उपर इत्येतस्मात्–इति वक्तव्ये आ उपर उपल इत्येताभ्यामित्युक्तम् । उभावपि ह्येतौ समाननिर्वचनौ शब्दावेकस्मिन् निरुक्ते निरुक्तौ भविष्यत इति रलोश्चाविशेषख्यापनार्थम् । उपर उपलो
10 मेघो भवति उपर इति च उपल इति च मेघ उक्तो भवति । उपरशब्दादारभ्य मेघनामान्येव न पर्वतनामानि ॥

आह–उपरः कस्मात् । उच्यते–उपगम्य रमन्ते अस्मिन्नभ्राणि । अथवा । उपगम्य रता आपो भवन्तीति । उपलोप्येतस्मादेव रलोरविशेषेण ॥

---

1. *a. b. d. m.* आदारयितव्यो for आदरयित° of *bi*; *d.* ह्यसौ भवति. 2. *a. d. m.* वा for च after गृहीत, *a. b. d.* add ग्रावा after अनेनेति; *a. d. m.* गोर्वोगत्रेति गोत्र, *bi.* गोत्र॰ गोर्वोगत्र. 4. *b. d. m.* omit इति after मेहति 5. *a. b. d. m.* add मेघ इति after भवति, *bi.* omits it. 6. *a. b. d. m.* omit एताभ्यां, *a. b. d. m.* read साधारणानि तानि 8. *m* omits इति after एताभ्याम्, *bi.* reads इत्येताभ्यां युक्तम्. We read with *a. b. d* 9–10. *a.* omits उपर उपलो etc. to मेघ उक्तो भवति. 10. *d.* omits च after उपर इति. 12 *a. b d. m* उपगम्य अपगम्य. 13. *a. b d. m* add अस्मिन् after उपगम्य; *a d m.* add उपरः after भवन्तीति, *d* omits इति after भवन्ति.

---

9. रलोश्चाविशेषख्यापनार्थम्—देवराजयज्वा in his comm. on Nigh I. 10. thus quotes Skanda-Swâmi on this text:–आ उपर उपल इति । आङ् अभिविधौ मर्यादायामित्यन्ये विना उपर उपल इत्येताभ्यां साधारणानीत्यर्थः । आ उपरादिति वक्तव्ये उभयोरुपादानं रलयोरविशेषप्रदर्शनार्थम् । तयोरेव निर्वचनत्वप्रदर्शनार्थमेकयोगपक्षत्वं चाङ्गीकृत्याह उपर उपलो मेघो भवति ।

आह—कथं पुनर्गम्यते उपरशब्देन मेघ एवोच्यते न पर्वत इति । उच्यते—तेषां मेघानामुपरशब्दवाच्यत्वे विशेषलिङ्गवाचिका एषा ऋक् भवति ॥ २१ ॥

"देवानां माने प्रथमा अतिष्ठन्कृन्तत्रादेषामुपरा उदायन्।
त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् ॥"

देवानां निर्माणे प्रथमा अतिष्ठन्माध्यमका देवगणाः । प्रथम इति मुख्यनाम प्रतमो भवति । कृन्तत्रमन्तरिक्षं विकर्तनं मेघानाम् । विकर्तनेन मेघानामुदकं जायते । त्रयस्तपन्ति पृथिवीमनूपाः । पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्त्यनूपा अनुवपन्ति लोकान्स्वेन स्वेन कर्मणा । अयमपीतरोऽनूप एतस्मादेवानूप्यत उदकेनापि वान्वाविति स्याद्यथा प्रागिति । तस्यानूप इति स्याद्यथा प्राचीनमिति । द्वा बृबूकं वहतः पुरीषम् । वाय्वादित्या उदकम् । बृबूकमित्युदकनाम ब्रवीतेर्वा शब्दकर्मणो भ्रंशतेर्वा । पुरीषं पृणातेः पूरयतेर्वा ॥ २२ ॥

1. *m* उपरशब्दो for उपरशब्देन; *a d.* omit इति after पर्वतः. 5. A. B. C. D. read माध्यमका, R. Bi. माध्यमिका. We read with all our mss. which are unanimous here Sāyaṇāchārya reads the word as माध्यमिका. 6. A. reads प्रथमो for प्रतमो. Bi. omits कृन्तत्रमन्तरिक्षं विकर्तनं मेघानां after प्रतमो भवति. Durga takes no note of it. Yet we read it, as the mss. and R. are unanimous. 12. Bi. notes variant as ब्रवीतेः शब्दकर्मणो. A. Bi. conclude II. पा. 5. after पूरयतेर्वा.

---

1. न पर्वत इति:—देवराजयज्वा in his commentary on Nigh I. 10. remarks that the word उपर may be met with in the sense of पर्वत and supports his statement by RS. I. 167. 3. where the word उपरा is explained by असमाच्छिला दीर्घा. by Mādhava He also quotes Mādhava for another derivation of the word:—उपरो जलवपनादिति माधवः । वपे. कृदादित्वात् अरन् द्रष्टव्यः सम्प्रसारणं च बाहुलकात् । उपरमित हि नमस्यन्ने भूमौ पर्वतश्चेति माधवः.

4. The quot. is RS. X. 27. 23.

**देवानां मान** इति । वसुक्रस्यैन्द्रपुत्रस्येयमार्षम् । त्रिष्टुप् । महाव्रते मरुत्वतीये शस्यते । देवानां दानादिगुणयुक्तानां **माने** विमाने निर्माणे । यदा देवाः सृष्टाः प्रजापतिना तदैत एव माध्यमका देवगणाः **प्रथमा** अतिष्ठन्नेतेऽपि हि दानादियोगा-द्देवा उच्यन्ते । प्रथमाः प्रतमाः प्रकृष्टतमा मुख्या इत्यर्थः । मेघाभावे हि सर्वमेवेदं 5 जगद्वर्षाभावान्न स्यात् । तस्मादेत एव प्रकृष्टतमा अतिष्ठन् स्थितवन्तः । सृष्टौ हि सर्वदेवानामेत एवाग्रे सृष्टा इत्यभिप्रायः । किं च **कृन्तत्रात्** उत्कृत्तात् प्रदेशादेषां मेघानामिन्द्रेण **उपरा आप उदायन्** आगतवत्य आगच्छन्ति च । किं कारणम् । विकर्तनेनैव हि मेघानामुदकं जायते । उपरशब्देनात्रोदकमुक्तम् । तात्स्थ्यात्तच्छब्दो मञ्चाः क्रोशन्ति इतिवत् । उपरेषु मेघेषु या आपः ता उपरा इत्युच्यन्ते । किं 10 च यदा ताभिः उपराभिरद्भिरोषधयः प्रोहिता भवन्त्यथ तदा **त्रयस्तपन्ति** । त्रयः पर्जन्यादयः तपन्ति । **पृथिवीं** पृथ्वींल्लोकम् । **अनूपाः** अनुवपन्ति लोकान्स्वेन स्वेन कर्मणा यथाकालमनुगृह्णन्ति । एतदनुवपनं लोकानां यद्वर्षादिभिः पर्जन्यादयो यथार्थमोषधीः पाचयन्ति । किं च **द्वा बृबूकं वहतः पुरीषम्** । **द्वौ** वाय्वादित्यौ **वहत** आक्षिपत इतः पृथिवीलोकाद्बृबूकमुदकम् । किंलक्षणम् । **पुरीषं** प्रीणयितृ 15 पूरयितृ वा ।

---

1 *a d* इन्द्रस्य for इन्द्रपुत्रस्य; *a. d.* omit मरुत्वतीये. 2. *a d.* omit विमाने. 3 *a b. d. m* read माध्यमका, *bs* माध्यमिका, *b.* reads एतेन for एतेऽपि. 4. *bs.* omits प्रतमाः after प्रथमाः, read by *a. b. d. m* 5. *d.* अवस्थितवन्तः for स्थितवन्तः. 6. *a.* प्रदेशादुत्कृन्तात्, *b.* उत्कृत्तात्प्रदेशात्, *m.* उत्कृष्टप्रदेशात्, *d.* प्रदेशादुत्कृत्तात्, *bs.* उत्कृत्तात्प्रदेशात्. We accept the reading of *d.* as it is correct. 7. *a. d.* read आगता for आगतवत्य. 8. *a. d.* omit एव हि before मेघानाम् and read उपराशब्देन for उपरशब्देन. *a. b. d. m.* read तात्स्थ्यात् तच्छब्द [ तच्छब्दो *d* ] मंचक्रोशनवत्. [ क्रोशन्ति इतिवत् *d.* ] 10. *a. d.* read पुरोहिता for प्रोहिता and अथ for अस्य of *bs.* 11. *d.* omits पृथ्वींल्लोकम् and reads लोकम् instead. 13. *b. m.* omit द्वौ. 15. *j.* omits पूरयितृ after प्रीणयितृ read by all others; *bs* and *j* add सत· after वा; *a. d.* do not read सत ; *b. m.* read अत· for सतः and join it with the next.

---

14–15. Durga appears to read the *Nirukta* text as प्रीणातेर्वा पूरयतेर्वा ।

अयमपीतरोऽनूपो नद्यनूपः समुद्रानूपो वा । एतस्मादेव वपतेर्धातोरथार्थात् अनूप्यतेऽनुप्रकीर्यते नित्यकालमुदकेन । अपि वा एवमन्यथा स्यात्–आप्नोतेः । अन्वाप्यतेऽसावुदकेनेति अन्वाप् । यथा पुरस्तादञ्चतीति प्राक् । तस्य अन्वा-विदित्येतस्य सतः अनूप इति एष शब्दः स्यात् यथा प्राचीनमिति प्रागित्येवं सतः प्राचीनम् । वृबूकमिति उदकनाम इति । पर्यायवचनेन तस्याभिधानम् । 5
ब्रवीतेर्वा शब्दार्थस्य शब्दकारि हि तद्भवति । भ्रंशतेर्वा । भ्रश्यति हि तस्मे-घादिति ॥ २२ ॥

वाङ्नामान्युत्तराणि सप्तपञ्चाशत् । वाक् कस्माद्वचेः । तत्र सर-स्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति तद्देवतावदुपरिष्टा-द्व्याख्यास्यामः । अथैतन्नदीवत् ॥ २३ ॥ 10

वाङ्नामान्युत्तराणि सप्तपञ्चाशत् । मेघनामप्रसक्तौ देवानां माने–इत्येष मन्त्रो व्याख्यातः । प्रकृतमिदानीमुच्यते–वाङ्नामानीति । वाचो नामानि वाङ्-नामानि । उत्तराणि प्रकृतेभ्यो मेघनामभ्यः । मेघेष्वेव हि भूयसी वाग्भवति इति मेघनामभ्य उत्तराणि वाङ्नामानि भवन्ति । कियन्ति पुनस्तानि । सप्तपञ्चाशत् । सप्त च पञ्चाशच्च सप्तपञ्चाशत् । कानि पुनस्तानि । 'श्लोकः धारा इळा'–इत्येवमादीनि । 15
श्रूयते इति श्लोकः । ध्रियते सं तमर्थमवधारयितुमिति धारा । तं तमर्थं प्रति ईट्टे गच्छतीति इळा । इत्येवमाद्यभ्यूहितव्यम् ।

---

1. *a. b. d.* omit अनूप. after इतरः 2 *d* omits हि after अपि, *a. d.* read प्रकीर्यते for अनुप्रकीर्यते; *b. m.* read अपिच for अपिवा 3. *b.* reads इत्युक्तत्वात् for इति अन्वाप्; *a. d.* add यथा before पुरस्तात्. *bi.* does not read it. 4. *a. d.* read एत for एष, *b.* reads तथा for यथा and एत for एष before सतः. 8 B. reads वचनेः for वचेः of all others Bi notices this as variant of two of his mss. 10. A. B. conclude II. vii. 1. after नदीवत्. 11. *a. d.* °प्रसक्तो, *bi.* °प्रसक्तौ 12. *d.* omits वाङ्नामानि after नामानि. 14. *bi.* ततो for मेघनामभ्य उत्तराणि of *a. b. d. m.*; *a. b. d. m* omit सप्त च पञ्चाशच्च सप्तपञ्चाशत् । 15. *bi.* कतमानि for कानि of *a b. d. m*, *a. d.* read इळा, *bi. m.* इडा. 16. *b. d.* add इदं before ईट्टे.

---

10. व्याख्यास्यामः, *i. e.*, in Nir. XI. 26-27.

15. For श्लोकः धारा etc. *vide* Nigh. I. 11.

आह–वाक् कस्मात् । उच्यते–वचेर्धातोः । उच्यतेनयेति वाक् । तत्र सरस्वतीत्येतस्य तत्र तस्मिन्सप्तपञ्चाशत्के वाङ्नामगणे सरस्वतीत्येतस्य नाम्नो नदीवद् देवतावच्च निगमा भवन्ति नद्यर्थयुक्ताश्च देवतार्थयुक्ताश्चेत्यर्थः । तत्–तत्रैवं सति यदभिधानं देवतावत् तदधिकृत्य उपरिष्टाद् व्याख्यास्यामः
5 षोडशेध्याये

"पावका नः सरस्वती"—

इत्येतस्मिन् मन्त्रे । अथ पुनर्यत् एतत् नदीवत् तद्व्याख्यायते—॥ २३ ॥

"इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमाविवासेम धीतिभिः ॥"

10 इयं शुष्मैः शोषणैः शुष्ममिति बलनाम शोषयतीति सतो बिसं बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा सानु समुच्छ्रितं भवति समुन्नुन्नमिति वा महद्भिरूर्मिभिः पारावतघ्नीं पारावारघातिनीं पारं परं भवत्यवारमवरमवनाय सुप्रवृत्ताभिः शोभनाभिः स्तुतिभिः सरस्वतीं नदीं कर्मभिः परिचरेम ॥

15 उदकनामान्युत्तराण्येकशतम् । उदकं कस्मादुनत्तीति सतः ॥ .

---

2. B₁ नाम for नाम्न of a b d m. 4. a. b. d. omit तत् 7. a. d अथ पुनर्यत्र नदीवत्, b. अथ पुनर्यन्नदीवत् 10 R. reads शुष्मेभि· for शुष्मैः of all our mss. B₁ notes this variant in the foot-note. 13. B. C D. R m read शोभनाभि before स्तुतिभिः, A B₁ omit it; so also B₁ omits नदीं after सरस्वतीं read by all others. Should सुप्रवृत्ताभिः be सुप्रवृत्ताभिः ? B₁. notes this variant in a foot-note and is supported by two mss. of दुर्गवृत्ति below. 15 B₁ reads उनत्तीति for उनत्तीति of all others.

---

7. एतस्मिन्मन्त्रे-*vide* Nir XI. 26, 27. (RS. I. 3. 10.)

9. The quot. is RS. VI. 61. 2.

नदीनामान्युत्तराणि सप्तत्रिंशत्। नद्यः कस्मान्नदना इमा भवन्ति शब्दवत्यः। बहुलमासां नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन। तत्रेतिहासमाचक्षते विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव। विश्वामित्रः सर्वमित्रः सर्वं संसृतं सुदाः कल्याणदानः पैजवनः पिजवनस्य पुत्रः पिजवनः पुनः स्पर्धनीयजवो वामिश्रीभावगतिर्वा। स वित्तं गृहीत्वा विपाट्छुतुद्र्योः संभेदमाययावनुययुरितरे। स विश्वामित्रो नदीस्तुष्टाव गाधा भवतेत्यपि द्विवदपि बहुवत्तद्यद्द्विवदुपरिष्टात्तद्व्याख्यास्यामोऽथैतद्बहुवत्॥ २४॥

इयं शुष्मेभिरिति। भरद्वाजस्यार्षम् जगती। इयं-सरस्वती नदी शुष्मेभिः-बलैः। किं करोति। बिसखा इवारुजत् यथा बिसखानकोऽबिसमनादरेणैव मृद्नुत्पाटयत्येवमियमनादरेणैव यदपि सानु भवति समुच्छ्रितं वज्रसंघातकल्पं गिरीणां सानु-शिखरं तदपि तविषेभिर्महद्भिरूर्मिभिर्बिसखानक इवानादरेणैव रुजति-भनक्तीत्यर्थः। येयमेवंगुणविशिष्टा तामेतां वयं पारावतघ्नीं-पारावारघातिनीम्। सा हि ऊर्मिभिः पारं चावारं च उभे अपि हन्ति। अवसे-अवनाय-रक्षणायात्मनः। कथं नाम रक्षेदस्मानित्येनमर्थं पुरस्कृत्य सुवृक्तिभिः-सुप्रवृत्ताभिः स्तुतिभिः स्वधीत्याद्भिर्युक्ताभिः। किं सरस्वतीमाविवासेम धीतिभिः सरस्वतीमाभिमुख्येनावस्थिताः परिचरेम धीतिभिः-कर्मभिः-स्तुतिभिश्चानेकप्रकाराभिरित्यर्थः। एष समस्तार्थः।

---

1. B1. omits इमा after नदना read by all others. 8. A. B1 conclude II. vii 2. after बहुवत्. 9. b. m. add after जगती, :-[छन्दः m.] पृष्ठ्यः षडहे चतुर्थेऽहनि निष्केवल्ये मरुत्वतीये विनियुक्तेयम्. 11. d. समुच्छृतं for समुच्छ्रितं of all others. 12. a. b. d. m. omit सानु and a. d. m. add महद्भिरूर्मिभिः after तविषेभिः omitted by b. 14. d. सह for सा हि; m. चावरं for चावारं and a. d. omit च after चावारं. 15. a. b. d. m. इत्येतमर्थं; a. b. d. m. all सुप्रयुक्ताभिः after सुप्रवृत्ताभि. 16–17. m. आभिमुख्येन स्थिताः; a. b. d. m. omit च before इत्यर्थः.

---

8. व्याख्यास्याम, i. e., in Nir. IX. 39.

अथैकपदनिरुक्तम् ।—शुष्ममिति बलनाम तद्धि शोषयतीति सतः । सत इति कारकावधारणम् । विपर्ययेणापि ह्यभिधानानामर्थो भवत्येवं मन्यमानो भाष्यकारो बलनामसु पठितमपि सदेतदभिधानमेवमाह शुष्ममिति बलनामेति । बिसं बिस्यते-र्भेदनकर्मणस्तद्धि भिद्यते । वृद्धिकर्मणो वा वर्धते हि तत् । सानु समस्तं हि तत् 5 उच्छ्रितं भवति समुन्नुन्नमिति वा । अथवा समस्तमूर्ध्वं नुन्नं प्रेरितं भवति । पारं परं भवति, अवरस्मात् कूलात् आवारम् अवरम् भवति परस्मात् कूलात् ।

अस्यामृचि तद्विशेषैरुर्मिभिः पारावतघ्नीमित्येतद्विशेष्यलिङ्गं नदीवत्त्वं पश्यता भाष्य-कारेण अथैतमदीघत्-इत्युक्तेयमृगुपात्ता सरस्वतीशब्दस्य नद्यभिधायकत्वे । इयं पुनर्मैत्रायणीयके

10 उतस्यानः सरस्वती—

इत्यस्य षडर्चस्योत्तमा । एतच्च पुनः पदर्चानुक्रमेण पश्वनुक्रमेण च

" सारस्वतीं धेनुष्टरीमालभेत यः दोग्ध्रे पशुषु वा विवदेत "—

---

3. *m.* अभिधानमेवाह. 4. *d.* तद्विभिद्यते 5. *a. d* read उच्छूनं for उच्छ्रितं, *a, b, d. m.* omit समुन्नुन्नमिति वा, *bi* अर्ध for समस्तमूर्ध्वं of *a. b d m* 6. *d.* अपरस्मात् for अवरस्मात् 7. *a. d.* विषयलिंग; *b* विशेषलिंग for विशेष्यलिंगं of *bi*. 8 *a.* reads इत्युक्ते येयमृगुपात्ता, *b.* इत्युक्तेयमृगुपात्ता ; *b. m.* तदभिधायकत्वे for नद्यभिधायकत्वे. 9. *a. d.* read मैत्रावरुणीयके. 11. *b d. m.* add षडर्च after पुन ; *bi. m.* omit पश्वनुक्रमेण after पदर्चानुक्रमेण read by *a. b. d.*; *bi.* न for च of *a. b. d. m.* 12 *b.* reads आलभते for आलभेत

---

9. मैत्रायणीय is a शाखा of Yajurveda, and the verse in question is there according to दुर्ग the last of a collection of six ṛiks beginning with उतस्यानः सरस्वती. In Rigveda, however, this verse occurs as second in VI. 61. which begins with इयमददात्. There are two verses in Ṛigveda Saṁhitā beginning with उतस्यानः सरस्वती, and hence to distinguish them one more word should be added. (1) उतस्यानः सरस्वती घोरा is VI. 61.7. *i. e.* occurring in the same Sûkta as the verse in question; while ( 2 ) उतस्यान: सरस्वती जुषाणा is VII. 95.'4. This latter is used as अनुवाक्या in सारस्वतपशु ( Âs'. S'r. Sû. III. 7. 6. )

12. The ... is

, इत्येतस्य पशोः संपद्यते । सेयमनेन प्रकारेण सारस्वतस्य पशुहविषो याज्या भवति । एवं च सतीयमपि देवतावदित्येव ह्यनुपपद्यते न त्वदेवता इज्यते। तदेवं कृत्वा भाष्यकारेण यदुक्तं तद्देवतावदुपस्थितत्वाद्व्याख्यास्यामोऽथैतन्नदीवदिति तद्विरुध्यते । तत्रोक्तः समाधिः –विभवो ह्यनुपक्षीणशक्तयो मन्त्रशब्दाः । प्रदर्शनमात्रमेतत्क्रियते । सर्वथैव मन्त्रशब्दानां योऽर्थ उपपद्यते स योज्यो यथासंभवमिति । देवतापक्षे विनियोगानु- 5
विधानाभिप्रायेण सरस्वती माध्यमिका वाक् । सा गिरीणां मेघानां सानूनि मध्यस्थूर्मिभिः पारावारे द्यावापृथिव्यौ हन्तीति योज्यम् । तद्विशेषैरूर्मिभिः महद्भिरित्येवमादि च योज्यम्। सुप्रवृत्ताभिः स्तुतिभिः सरस्वतीं कर्मभिः परिचरेम गतार्थम् ॥

उदकनामान्युत्तराण्येकशतम् । उदकस्य नामानि उदकनामानि । 10
उत्तराणि प्रकृतेभ्यो वाङ्नामभ्यः । मेघाश्रया हि वाक् मेघोत्थं चोदकं स्तनयित्नुशब्दपूर्वकं चेति वाङ्नामभ्य उत्तराण्युदकनामानि । कियन्ति पुनस्तानि । एकशतमेकं च शतं च एकशतम् । कतमानि पुनस्तानि । ‘अर्णः क्षोदः क्षद्म’–इत्येवमादीनि । अरणशीलमर्णः । क्षिप्रमुनत्तीति क्षोदः । क्षीणमद्म करोतीति क्षद्म । इत्येवमाद्यभ्यूहितव्यम् । 15

---

2. *a. d.* इयमपि for इयमपि; *a. b. d. m.* देवतावदेवेत्येतदुपपद्यते नत्वदेवता इज्यते तदेतदेवं [ *m.* तदेवं ] कृत्वा, *bi.* देवतावदित्येव ह्यनुपपद्यते etc. as the text above. 4–5. *bi.* सर्वथैतन्मन्त्रशब्दानां for सर्वथैव मन्त्रशब्दानां of *b. d. m.* 6. *a. b. d. m.* मध्यति for मध्यस्थूर् of *bi.* 6–7. *a. b. d. m.* all स्तनयित्नुभिः after ऊर्मिभिः. 8. *a. b. d. m.* omit च before योज्यम् and *a. d.* add सुप्रवृत्ताभिः after सुप्रवृत्ताभिः. 9. *m.* गतार्थो for गतार्थम् 13. *a. d.* omit एकशतम् after शतं च. 14. *a. d.* read क्षीणम् for क्षीणिम् of *bi. m. b.*

---

1. सारस्वतस्य पशुहविषो याज्या भवति, :—This, I believe, is in accordance with the directions of देवतायनीयशास्त्र. According to Rig. Saṁ. arrangement the hymn VI. 61, is otherwise used:—

इयमित्येतदाद्यं तु सूक्तं सारस्वतं जपेत् ।

द्विजः प्रातः शुचिर्भूत्वा वाग्मी भवति बुद्धिमान् ॥ Rig-vidhâna II. 23 and

स्तनयित्नुमभ्युपगम्भुतमिति प्रवदन् ( Âs'. S r. Sû. VIII. 1–12. ).

13. For अर्णः क्षोदः etc. *vide* Nigh. I. 12.

आहु–उदकं कस्मात्। उच्यते–उनत्तीति सतः। तद्धि यत्र गच्छति तत्र उनत्ति क्लेदयति। 'उन्दी क्लेदने'। सत इति कारकावधारणं पूर्ववत्॥

नदीनामान्युत्तराणि सप्तत्रिंशत्। नदीनां नामानि नदीनामानि। उत्तराणि इति प्रकृतेभ्य उदकनामभ्य उत्तराणि नदीनामानि। कियन्ति पुनस्तानि। सप्तत्रिंशत्। कानि पुनस्तानि। 'अवनयः यव्याः खाः सीराः'–इत्येवमादीनि। अवनतेन निम्नेन प्रदेशेन यान्तीत्यवनयः। यातव्या भवन्तीति यव्याः। खातव्या भवन्तीति खाः। सरन्तीति सीराः। एवमादि योज्यम्।

1–2. *a d* omit from आहु to पूर्ववत्–probably a mistake in copying. 3. *a d.* omit नदीनां नामानि 4. *a m.* omit इति after उत्तराणि. 5. *bi* reads यह्वयः. 6. *a. b d. m.* read यातव्या भवन्तीति यव्याः, *bi. j* हूयन्त्यो यान्तीति यह्वयः; *bi.* notes variant as यावयन्त्यो यान्तीति and *bi. j.* read ख्यातव्या for खातव्या as read by *a. b. m.* We follow the reading of the Mss. as it is the more general one. 7. *a. d* read सरस्वतीति for सरन्तीति

2. उन्द्–वा० पा०–रुधादि (20).

5. यव्याः–All our Mss support the reading यव्या; it is also the reading of R. in Nigh. I. 13 देवराजयज्वा the commentator of Nigh. appears, however, to explain यह्वयः and refers to यव्या as a reading found in some collections References to Rigveda are cited for both the readings and the whole would show that both the readings are allowable.

6. For अवनयः यव्याः etc. *vide* Nigh. I. 13.

7. The word whether it is to be read as यव्याः or यह्वयः is derived in the first place from the root या. Other derivations also are suggested as will be evident from the extracts of the commentary of देवराजयज्वा on Nigh I 13:—यह्वयः। या प्रापणे। शेवयह्वजिह्वाग्रीवाप्वामीवा इति निपातनात् अप्रत्ययो धातोर्ह्रस्वत्वं हुगागमश्च। बाहुलकात्.. .. ङीप् पिप्पल्यादित्वाद्द्रष्टव्यम्। याति तांस्तान्प्रदेशान् प्राप्यन्ते वा प्राणिभिः। यद्वा यह्व इति महन्नाम पूर्ववत् ङीप्। यह्वयः महत्यो नद्यः। द्विधा्वुज वा इद नाम यातेर्हेत.. . .। यान्ताश्च प्राणिभिः हूताश्च यज्ञेष्वित्यर्थः।.. ... केषुचित्कोशेषु यव्याः इतीद नाम दृष्टम्। यु मिश्रणे पृथग्भावेऽप्यस्यार्थ इति नैगमकाण्डे वियुते इत्यस्य निर्वचने स्कन्दस्वामिना प्रतिपादितः।. .. यासु मेघोदकेन मिश्रणीयाः अन्येषु सर्परानिमिराकृष्टेन पृथग्भवन्तीति वा। अथवा युज् बन्धने .... बध्यते आसु सेतुरिति यव्याः। यद्वा यवेभ्यो धान्यविशेषेभ्यो हिताः.......नदीजवेनापि वर्धन्ते यव्याः.......अनयोर्युक्तं ग्रहणं सूत्रयः.

It should be observed that the above extracts would derive यव्याः from यु rather than from या, which derivation is given for यह्वयः.. But it appears that the derivation of the reading of all our mss. here taken explains यव्याः from यातव्याः.

आह-नद्यः कस्मात् । उच्यते- नदना इमा भवन्ति-शब्दवत्यः-शब्दसंयुक्ताः । किं च बहुलमासां नदीनामन्यदेवतेषु मन्त्रेषु नैघण्टुकं वृत्तमप्रधानम् । आश्चर्यमिव प्राधान्येन क्वचिदेव नदीदेवतो मन्त्रः स्यात् । तत्रेतिहासमाचक्षते । यस्मिन्सूक्ते प्रधाना नद्य एव तत्रेमं निदानभूतमितिहासमाचक्षत आचार्याः । 5

विश्वामित्रो नाम ऋषिः । सुदासः पैजवनस्य राज्ञः पुरोहितो बभूव । विश्वामित्रः सर्वमित्रः सर्वस्यैव हि स मित्रं सर्वमेव वा तस्य मित्रमिति विश्वामित्रः । सर्वमिति किमुक्तं भवति । उच्यते-तद्धि संसृतं भवति संगतं भवत्यस्मिन् । सुदाः कल्याणदानस्तस्य हि नित्यमेव प्रशस्तं दानं भवति । पैजवनः पिजवनस्य पुत्रः । पिजवनः पुनः स्पर्धनीयजवस्तस्य हि स्पर्धार्हो जवो 10 वेगः । अथ वा अमिश्रीभावगतिर्वा न तस्य मिश्रीभूतपूर्वा गतिरन्यैर्वेगवद्भिरतिरौम्यात् । तस्य पैजवनस्य विश्वामित्रः पुरोहितो बभूव । स पौरोहित्योपार्जितं वित्तं धनं गृहीत्वा विपाट्छुतुद्र्योर्नद्योः संभेदं-संगममाययावागतवान् यत्र विपाट्छुतुद्र्यौ इतराभिः सिन्ध्वादिभिर्नदीभिः संभिन्ने एकीभूते इत्यर्थः । अनुययुरितरे-तदनुयायिनस्तस्करा वा । स विश्वामित्रस्तास्तितीर्षुर्नदीस्तुष्टाव 15 गाधाः स्वल्पोदका यूयं भवतेति एतमर्थं पुरस्कृत्य । कथं पुनस्तुष्टाव -। -अपि-द्विवत्-द्विवचनसंयुक्तैर्मन्त्रैः । अपि बहुवत्-बहुवचनसंयुक्तैर्मन्त्रैः । तत्-तत्रैवं सति यद्द्विवत्-द्विवचनवत् तत् उपरिष्टात् चतुर्दशाध्याये

---

4. *a. m.* add वदन्ति after माचक्षते and *m.* omits इति before आचार्याः read by *bi.* We omit it as it looks superfluous. 9. *m.* सुदासः for सुदाः; *m.* प्रयस्तदान. 10. *a. d.* add तस्मात्स्थानीयर इति स्पर्धनीयः शब्दो निपन्नः between स्पर्धं and नदिनजो here. Probably it is a marginal note added in body through the mistake of the copyist. This shows by the bye *a.* and *d.* are similar copies. *d.* adds वा after स्पर्धनीयजवः. 13. *a. b.* omit वित्तं; *m.* omits धनं and नद्यो; *a. d.* omit आययौ 14. *a. b. d.* read सिन्ध्वादिभि. 16. *a. b. d. m.* read गाधोदका for गाधाः स्वल्पोदकाः of *bi.* 17. *d.* adds अपि before द्विवचन°; *a. b. d. m.* omit तत् before तत्र. 18. *d.* omits द्विवत्; *d.* reads द्विवचन for द्विवचनवत् and चतुर्दशेऽध्याये for चतुर्दशाध्याये.

---

8. विश्वामित्र-" विश्वस्य ह वै मित्रं विश्वामित्र आस ।" Ait. Br. 29. 4.

18. चतुर्दशाध्याये *i. e.* in Nir. IX. 39. ( RS. III. 33. 1. )

" प्रपर्वतानाम् "—

इत्येतस्यामृचि व्याख्यास्यामः । अथ पुनरेतद्बहुवत् व्याख्यायते— ॥ २४ ॥

" रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥ "

5 उपरमध्वं मे वचसे सोम्याय सोमसंपादिन ऋतावरीर्ऋतवत्य ऋतमित्युदकनाम प्रत्यृतं भवति मुहूर्तमेवैरयनैरवनैर्वा । मुहूर्तो मुहुर्ऋतुर्ऋतुरर्तेर्गतिकर्मणो मुहुर्मूढ इव कालो यावदभीक्ष्णं चेति । अभीक्ष्णमभिक्षणं भवति क्षणः क्षणोतेः प्रक्ष्णुतः कालः । कालः कालयतेर्गतिकर्मणः । प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया 10 मनस ईषया स्तुत्या प्रज्ञया वावनाय कुशिकस्य सूनुः । कुशिको राजा बभूव क्रोशतेः शब्दकर्मणः क्रंशतेर्वा स्यात्प्रकाशयतिकर्मणः साधुविक्रोशयितार्थानामिति वा । नद्यः प्रत्यूचुः ॥ २५ ॥

रमध्वं मे वचस इति । त्रिष्टुभ एताः । उपरमध्वं मे । उपेत्ययमुपसर्गो मन्त्रस्य मध्यादाकृष्य भाष्यकारेण रमध्वमित्यनेन क्रियापदेन योजितः । उपरमध्वं 15 मम वचसे सोम्याय सोमसंपादिने सोमा हि अनेनास्मद्वचसा देवतानामभूता

---

7 C. D R. मूह, B मूल, B1 मूल्ह   8. A. क्षणः क्ष्णोते for क्षणः क्षणोतेः 9. D. omits महत्या and reads मनीषा for मनीषया. 12 A. B1. conclude II vii 3 after प्रत्यूचु. 13. m omits इति after वचसे. 14. m. मन्त्रमध्यात् for मन्त्रस्य मध्यात् 15. a. b. d. m. read मे before मम; a. b d m. read सोमस्य संपादिने.

---

3. The quot. is RS. III. 33. 5.

13 त्रिष्टुभ एताः, i. e, this and the Riks in the two following sections.

14. भाष्यकारेण......योजितः—On the authority of the two Sûtras of Pâṇini [I. 4. 81, 82] छन्दसि परेऽपि । व्यवहिताश्च ।

बहुवः संपादिताः। ता यूयमस्मै प्रतिविशिष्टाय वचसे सत्यतायै कथं नाम सत्यमिदं स्यादित्येवमर्थमुपरमध्वं मन्दवेगा गाधाश्च भवतेत्यभिप्रायः। हे ऋतावरीरुदकवत्यः। कियन्तं पुनः कालमुपरमध्वम्। मुहूर्तं न च नित्यमेव मन्दवेगतां गाधोदकतां वा प्रार्थये। किं तर्हि। यावदुत्तरेयमहं तावदेवेत्यभिप्रायः। एवैः एभिरुदकैरतिप्रवृद्धैरुपरमध्वम्। अयनैर्वा कामैरेतैरस्मत्प्रार्थनाविशेषैः–उत्तरेम गृहान्गच्छेम वित्तं प्राप्येम 5 इत्येवमादिभिर्निमित्तैः प्रार्थ्यमाना अस्माभिरुपरमध्वम्। अथ वा अयनैः विचित्रैर्गमनैर्वेगवद्भिर्यैर्यूयमभिप्रवृत्तास्तैरुपरमध्वं मुहूर्तम्। यदैवमविशेषेणोच्यमाना न शुश्रुवुस्तदैकामुद्दिश्य प्रवृत्ते वक्तुम्। सिन्धुमच्छ। अच्छाभेः स्थाने। अह्वे–इत्येतत्पदमाकृष्य प्र अभि ह्वयामि इत्येवं योजितं भाष्यकारेण। किं प्राभिह्वयामि। सिन्धुम्। कया। बृहती मनीषा–बृहत्या मनीषया–मनस ईषया–मनःपूर्विकया स्तुत्या 10 इत्यर्थः अथवा प्रज्ञया। कमर्थमिच्छन्नभिह्वयामि। अवस्युरवनमिच्छन् गमनमित्यर्थः। कुशिकस्य सूनुरहमिति। पितुरपि गौरवान्मम गौरवमेताः कुर्युः इति समस्तार्थः।

अथैकपदनिरुक्तम्।–ऋतमित्युदकनाम। तद्धि देशं देशं प्रत्यृतं भवति गतमित्यर्थः। मुहूर्तो मुहुर्ऋतुः एवं विगृह्य ऋतुशब्दं तावन्निर्ब्रवीति–ऋतुरर्तेः 15 गतिकर्मणो गत्यर्थे वर्तमानस्य। स हि गच्छत्येव। अधुना मुहुःशब्दं निर्ब्रवीति–मुहुर्मूढ इव कालोऽल्पत्वात्। मूढ इव यः काल ऋतुः स मुहूर्त इत्युच्यते। किं च यावत् एव च अभीक्ष्णं तावानेव मुहूर्तः। यावांश्च मुहूर्तस्तावदेवाभीक्ष्णमित्यर्थः। सारूप्यप्रसक्तं निरुच्यते–अभीक्ष्णमभिक्षणं भवति तद्धि क्षणमाभिमुख्येन स्थितं भवति। क्षणः क्षणोतेर्हिंसार्थस्य। स हि प्रक्ष्णुतः प्रकर्षेण हिंसितः कालोऽल्प- 20 त्वात्। कालः कालयतेर्गतिकर्मणः। स हि सर्वाण्येव भूतानि कालयति क्षयं

3. *a. b. d. m.* read मुहूर्तमेवैः मुहूर्तम् for मुहूर्तं of *bi*. 8. *a. d.* read प्रवर्तते for प्रवृत्ते; *a. b. d. m.* read प्रसिन्धु for सिन्धु; *m.* omits अच्छ before अभेः 9. *a. b. d. m.* read केन for कया 10. *a. d.* add महत्या after बृहत्या. 11. *a. b. d. m.* read प्राभिह्वयामि for अभिह्वयामि of *bi* 12. *bi.* गौरव for गौरवं. 16. *a. b d. m.* omit गतिकर्मणः. 17. *a.* omits सः. 18. *b. d. m.* omit च before अभीक्ष्ण; *bi.* तावत् for तावानेव of *b. d. m* 20. *bi.* reads क्षणं for क्षणः of *a. b. d. m.* 21. *m.* adds हि after सर्वाण्येव.

8. अच्छाभेः स्थाने–" अच्छाभेराप्तुमिति शाकपूणिः " [Nir. V. 5. 4.].

9. किं–Should it be rather कां for किम्?

नयतीत्यर्थः । कुशिको राजा—इति तत्त्ववचनम् । क्रोशतेर्वा शब्दार्थस्य स हि साध्वेव क्रियतामिति नित्यकालमेव क्रोशयति। क्रंशतेर्वा स्यात्प्रकाशयत्यर्थस्य स हि प्रकाशयिता साधूनां धर्माणामात्मनैव प्रकाशकः। अथवा साधुविक्रोशयितार्थानामिति–साधुषु ब्राह्मणेषु विक्रोशयिता अर्थानां दातेत्यर्थः ।

एवमुक्तवन्तं नद्यः प्रत्यूचुः–॥ २५ ॥

"इन्द्रो॑ अ॒स्माँ अ॑रद॒द्वज्र॑बाहु॒रपा॑हन्वृ॒त्रं प॑रि॒धिं न॒दीना॑म् ।
दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः ॥"

इन्द्रो अस्मानरदद्वज्रबाहू रदतिः खनतिकर्मापाहन्वृत्रं परिधिं नदीनामिति व्याख्यातम्। देवोऽनयत्सविता सुपाणिः कल्याणपाणिः।
10 पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान्पूजयन्ति। तस्य वयं प्रसवे याम उर्वीः। उर्व्य ऊर्णोतेर्वृणोतेरित्यौर्णवाभः। प्रत्याख्यायान्तत आशुश्रुवुः ॥ २६ ॥

इन्द्रो अस्माँ अरददिति। अरदत्–अखनदित्यर्थः। रदतिः खनतिकर्मा। कथं पुनरखनत्। अपाहन् वृत्रमपावधीन्मेघम्। परिधिं नदीनां–परिधारयितारं
15 नदीनां–नदनानामपाम्। स हि निपतन्तीरपो निरुणद्धि तमिन्द्रो वज्रेण हन्ति। तस्मिन्हते

---

2 *a. d.* add एव after इति, *b. m* read एव for इति, *a. b. d. m.* read क्रोशयति for क्रोशति of *b*1  3 *a d* प्रकाश॰ for प्रकाशक. and *a. b d. m.* omit साधुविक्रोशयितार्थानामिति.  5. *b m* add विश्वामित्र before एव.  12. A. B1. conclude II vii. 4. after आशुश्रुवु.  13. *b. m.* add after खननिकर्मा, – वज्रबाहु । वज्रयुक्तौ बाहुर्यस्यासौ । बाहुनात्र हस्तो लक्ष्यते वज्रहस्त इत्यर्थः  14. *a d.* read अभन् for अपावधीन्, *b*1 omits परिधारयितारं नदीनां before नदनानाम्. 15. *b*1. स ■ निपत तीरयोर्निरुणद्धि. We read above with *a. b. d. m.*

---

2. क्रशतेर्वा स्यात् etc. किंशुक is derived from the same root in Nir. XII. 8.

7. The quot is RS, III. 33 6.

पृथिवीं प्राप्यापो यथानिम्नानुसारिण्यः खातानि कुर्वत्यो वहन्ति तैः खातैर्वयं गच्छामः । एवं कृत्वा अस्मान् इन्द्रः अरदत् । एवं च कृत्वा स एव इन्द्रो देवः सविता–सर्वार्थप्रसविता वर्षद्वारेणास्मान् अनयत्सुदम् । सुपाणिः–प्रशस्तपाणिरित्यर्थः । यत एव सोऽस्माकं खनिता नेता च अतः तस्य इन्द्रस्य प्रसवे अनुज्ञायामादेशे वर्तमाना वयं यामः–गच्छामः उर्वीः–कुर्वत्यः संमजमाना वा तानि तानि देशान्तराणि ऊर्मिभिः । सोऽस्माकमीश्वरः । स एवास्मानाज्ञापयितुमर्हति न त्वमित्यभिप्रायः ।

पाणिः पणायतेः पूजार्थस्य । प्रगृह्य पाणी संयतौ कृत्वा ततो देवान् पूजयन्ति इति ।

प्रत्याख्याय एवं तमृषिं तत्सूक्तस्य अन्ततः अन्ते अनयर्चा आशुश्रुवुस्ता नद्यः श्रुतवत्य इत्यर्थः–॥ २६ ॥　　10

"आ ते॑ कारो शृणवामा॒ वचां॑सि य॒याथ॑ दू॒राद॑नसा॒ रथे॑न ।
नि ते॑ नंसै पी॒प्याने॑व॒ योषा॒ मर्या॑येव क॒न्या॑ शश्व॒चै ते॑ ॥"

आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वा ॥　　15

---

1. *bi.* कुर्वन्त्यो for कुर्वत्यो; *b.* गच्छाम for गच्छामः.　2. *a. d.* add च after स एव; *b. m.* सर्वार्थस्य प्रसविता.　3–4. *d.* य एव for यत एव.　4. *m.* अनुज्ञानायां for अनुज्ञायां.　6. *a, d.* स एवे for स एव; *b. m.* add च after स एव.　9. *a. d.* add अन्ततः before सूक्तस्य instead of तत्; *b. m.* omit अन्ते; *a. d.* read प्रतिशुश्रुवुः for आशुश्रुवु॰.

---

7. For पणायतेः पूजार्थस्य *Cf.* उणादिसूत्र 4. 134. "अतिपणाभ्यो रवयलुकौ च" ।

9. तत्सूक्तस्य–Properly it should be तद्वर्गस्य as the verse next quoted is not the last of RS. III. 33, but is the last of the वर्ग, 13, of the second Adhyâya of the third Ashtaka.

12. The quot is RS. III. 33. 10.

अश्वनामान्युत्तराणि षड्विंशतिः । तेषामष्टा उत्तराणि बहुवत् । अश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा । तत्र दधिक्रा इत्येतद्दधत्क्रामतीति वा दधत्क्रन्दतीति वा दधदाकारी भवतीति वा । तस्याश्ववद्देवतावच्च निगमा भवन्ति । तद्यद्देवतावदुपरिष्टात्तद्व्याख्यास्यामोऽथैतदश्ववत् ॥ २७ ॥

आ ते कारो इति । तदा श्रुतं भवति यदा तद्वचः क्रियते श्रूयमाणमपि तत्रैव श्रुतं भवति यत्र क्रियते । **आ ते कारो शृणवाम** । आभिमुख्येनावस्थिताः सत्यः शृणवाम हे कारो स्तोमाना कर्तः । किमाशृणवाम । **वचांसि** । अतो ब्रूमः **ययाथ** याहि त्वम् । **अनसा**–शकटेन– सह– **रथेन च** । कस्मात्पुनरेवमादरवत्यो ब्रूमो याहीति । इतो यस्मात् **दूरात्** आयातस्त्वं परिश्रान्तस्तस्मात्कारुण्यं नस्त्वयि । तेन वयमेता **नि ते नंसै**–निनमाम ते–नीचैर्नमाम–याधोदका भवामेत्यर्थः । कथं पुनर्निननाम । **पीप्यानेव योषा**–पाययमानेव योषा पुत्रं यथा निनमेदेवं वयं तव निनमाम । एवमुक्त्वा पुत्रोपमया कदाचिदयं कोपमियादिति मन्वानाः सत्यः पतिकन्यासंबद्धामन्यामुपमामुपाददिरे–**मर्यायेव कन्या शश्वचै ते** । **मर्याय**–मनुष्याय **कन्या**–नवोढा **शश्वचै ते**–परिष्वजनाय कथं नाम परिष्वजेत मामयमित्यभिप्रायेण यथा सा निनमेदेवं वयं तव निनमाम । **निनमा इति वा** । यदि वा निनमाम इत्येवं विपरिणामो निनंसै इत्येतस्य पदस्य । अथ वा निनमै इति ॥

---

6. A. B1. conclude II vii. 5 after अश्ववत्. 6. *a b. d. m* omit आ ते कारो इति. 8. *a b. d m* add after वचांसि,–वचनानि श्रुतानि चैतानि तावकानि [ *m.* कानि ] वचांसि यतो ब्रूम. 9 *a. d.* add च after शकटेन. 10 *a. b. d. m.* ययाथेति for याहीति. 11. *b.* भवेम for भवाम. 12. *m.* adds ते after निनमाम. 16–7 *b*1. निनमेत् for निनमेत्; *m.* निनमै इति वा । यदि वा निनमाम इत्येव परिणामः । निनंसै इति वा निनंसै इत्येतस्य पदस्य &c., *b.* निनमै इति वा । यदि वा निनमाम इत्येव विपरिणाम निनंसै इत्येतस्य पदस्य &c., *a.* निनमै इति वा । यदि वा निनमा इत्येव विपरिणामः निनंसै इत्येतस्य पदस्य &c., *d* निनमे इति वा । यदि वा निनमाम इत्येव परिणामः निनंसै इत्येतस्य पदस्य &c., *b*1. निनमा इति वा । यदि वा निनमा इत्येव परिणामः निनंसै इत्येतस्य पदस्य &c.

**अश्वनामान्युत्तराणि षड्विंशतिः** । अश्वस्य नामानि **अश्वनामानि** । **उत्तराणि** प्रकृतेभ्यो नदीनामभ्यः । अब्जा एव ह्यश्वाः । एवं ह्युक्तम्–

"अप्सु जाता अश्वाः स्वादेवैतान योनेर्जनयन्ति"

इति । तस्मान्नदीनामभ्य उत्तराण्यश्वनामानि । कियन्ति पुनस्तानि । **षड्विंशतिः** षडधिका विंशतिः । कतमानि पुनस्तानि । "अत्य हयः अर्वा"–इत्येवमादीनि । 5 अतति गच्छतीत्यत्यः । हयति गच्छतीति हन्ति वाध्वानमिति हयः । ईरणवानर्वा गमनवानित्यर्थः । एवमादि ।

**तेषामश्वनाम्नामष्टौ** यानि **उत्तराणि** अव्यथय इत्येवमादीनि तानि **बहुवत्**–बहुवचनसंयुक्तानीत्यर्थः ।

आह–**अश्वः कस्मात्** । उच्यते–अश्नुतेऽध्वानं–व्याप्नोतीत्यर्थः । **महा-** 10 **शनो वा भवति इति** स हि बहु भुङ्क्ते । **तत्र**–तस्मिन् षड्विंशके अश्वाभिधानगणे **दधिक्रा इत्येतत्** पदं संदिग्धम् । तत्पुनरेतत् **दधत् क्रामतीति**–धारयन्नयमश्वारोहं क्रामतीति दधिक्राः । अथवा **दधत्**–धारयन्नयमश्वारोहं **क्रन्दति**–शब्दं करोति **इति** दधिक्राः । अथ वा **दधत्**–धारयन् अयमश्वारोहम् **आकारी**–आकारवान् **भवतीति** दधिक्राः । स हि अधिरूढेऽश्वारोहे आकुञ्चितग्रीवो विपुष्पितसर्वगात्र आकृतिमान् भवति । 15

**तस्य**–दधिक्राशब्दस्य **अश्ववत्**–अश्वसंयुक्ताः **देवतावत्**–देवतासंयुक्ताः **च निगमा भवन्ति** । **तत्** एतदुच्यते– **यद्देवतावत्** अस्य दधिक्राशब्दस्य **तत् उपरिष्टात्पञ्चदशेऽध्याये**

---

3. *a. b. d. m.* पतान् for पतान्; *d. m.* जनयन्तीति. Is this not better? 6. *a. b.* गच्छतीत्यर्थः for गच्छतीत्यत्यः; *d.* हयगच्छति for हयति गच्छति, *a. d.* omit इति after गच्छति. 8 *a. d.* अव्यय for अव्यथय, ■ *b. d m.* omit बहुवत्. 10. *b. d. m.* add स हि after उच्यते. 11. *b. m.* महाशनो भवतीति वा. 12. *b. d. m.* add [ *m.* वा ] अथवा after क्रामतीति and before धारयन्. 13. *a. b. d. m.* omit दधत् before धारयन् 14. *a. b. d. m.* omit अयम् after धारयन्. 15. *m* °सर्वगात्राकृतिमान्; 16. *m.* दधिक्राशब्दस्य; *m.* देवतासंयुक्ताश्चनिगमाः

---

3. It is not certain whether this is a quotation. Br in the foot-note refers the reader to RS. I. 163, where the *horse* is said to be born of water.
5. For अत्यः हयः etc *vide* Nigh. I. 14.
18. पञ्चदशेऽध्याये, *i. e.*, in Nir. X. 31. ( RS. VI. 38. 10. )

"आ दधिक्राः शवसा"

इत्यस्यामृचि व्याख्यास्यामः। अथ पुनर्येन् अभवत् अस्य तत् एतत् व्याख्यायते ॥ २७ ॥

"उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि।
5 क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥"

अपि स वाजी वेजनवान्क्षेपणमनु तूर्णमश्नुतेऽध्वानं ग्रीवायां बद्धो ग्रीवा गिरतेर्वा गृणातेर्वा गृह्णातेर्वापिकक्ष आसनीति व्याख्यातम्। क्रतुं दधिक्राः कर्म वा प्रज्ञां वा अनुसंतवीत्वत्। तनोतेः पूर्वया प्रकृत्या निगमः। पथामङ्कांसि पथां कुटिलानि पन्थाः पततेर्वा पद्यतेर्वा 10 पन्थतेर्वाङ्कोऽञ्चतेरापनीफणदिति फणतेश्चर्करीतवृत्तम् ॥

दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय ॥

ज्वलतिकर्माण उत्तरे धातव एकादश ॥

तावन्त्येवोत्तराणि ज्वलतो नामधेयानि नामधेयानि ॥ २८ ॥

मि- उत स्य वाजीति। गोतमपुत्रस्य वामदेवस्येयमार्षम्। जगती। वाजपेये
निनमाम गतं रथमधिष्ठाय यजमानोऽनुवाकं जपति तत्रैषा। उत स्यः—अपि सः
5. A. Bi. वाजी—वेजनवान्। ओविजी भयचलनयोः। भयवान् परेभ्यो
क्षा ते कारो इति.
कानि [ m. कानि ] Bi conclude II. vii 6. after नामधेयानि R omits one
b d. m. ययायेति 14. a. b. d. m गौतम॰ for गोतम॰ of bi ; a. d omit इयं
निनमाम. 16–
परिणामः। निनसे इ
इत्येव विपरिणामः नि ...t. is RS. IV. 40 4, Yaj. Vāj. Sam. IX. 14. The latter
विपरिणामः निनसे इत्
णामः निनसे इत्येतस्य
निनसे इत्येतस्य पदस्य तथाहि कात्यायन –'देवस्याहमिति यजुर्युचमारोहति यजमान '। (XIV.
...नुवाक consists of three mantras of which this is the last
–स्यादि ( 23 ).
5. व्याख्यास्यामः, a. c.,

भयदाता परेषां हि तं दृष्ट्वा भयमुत्पद्यते। चलनवान् वा स हि नित्यं चलनशीलः। **क्षिपणि**–क्षेपणमनु–कशाघातमनु **तूर्णमश्नुतेध्वानं**–व्याप्नोतीत्यर्थः। अपि कशाप्रहारमनु **तुरण्यति** अप्यनाहत एवेत्यपिशब्दः। किंच **ग्रीवायामुरसि** वध्रेण **बद्धः। अपिकक्षे** कक्ष्यया। अथ **आसनि**–मुखे खलीनेन बद्धः। एवमनेकेषु स्थानेषु बद्धः। तथापि तुरण्यत्येव। अन्यो ह्येकस्मिन्नपि प्रदेशे बद्धश्चलितुमपि न शक्नोति किमुत त्वरितुम्। किंच **क्रतुमात्मीयं** गमनं **कर्म वा प्रज्ञां वा** अश्वारोहस्य संतनोति काममभिप्रेतार्थेन शीघ्रगामित्वात् **दधिक्राः** अश्वोऽनुसंतनोतीत्यर्थः। किंच यान्यपि च कानिचित् **पथां**–मार्गाणाम**ङ्कांसि**–अञ्चितानि–कुटिलानि सन्ति तान्यपि अनुलोमानीव कुर्वन्नाशुगामित्वात् आभिमुख्येन पुनः पुनर्भृशं वा **फणति** गच्छतीत्यर्थः। एष समस्तार्थः।　　10

अथैकपदनिरुक्तम्।–**ग्रीवा गिरतेर्वा** गिलनार्थस्य। तया हि गिलत्यन्नम्। **गृणातेर्वा** शब्दार्थस्य तया हि शब्दो गीर्यते। **गृह्णातेर्वा** तया क्षुदकादि गृह्यते तस्यामेव वा गृह्यते यः शृङ्खलीक्रियते। **अनुसंतवीत्वत्** इति **तनोतेर्धातोः पूर्वया प्रकृत्या निगमः**। षड्विधो हि धातुः।

" प्रकृत्यन्तः सनन्तश्च यङन्तो यङ्लुगेव च।　　15

ण्यन्तो ण्यन्तसनन्तश्च षड्विधो धातुरुच्यते॥ "

---

2 *a b d. m* add तुरण्यति after कशाघातमनु　3 *a.* उरसि वध्रेद्-बणबद्धः, *d.* उरसि वरत्रद्बणबद्धः, *b. m.* उरसि वध्रेण बद्धः (Mahidhara in his commentary on Yaj. Vâj Sam. IX. 14. renders this by ग्रीवायां उरोवध्रेण बद्ध). We give the reading of *b₁.* as it makes the same sense as that of *b. m*, though वरत्र appears to be a preferable reading to वध्र It may be noticed that M W.'s dictionary gives वरत्रा as a fem. word only.　4. *a b. d. m* कक्ष्यया for कक्षाया of *b₁* : *a. d.* अपि for अथ. 5 *a d* स्पन्दितु for चलितु　6. *a. b d. m* read गमनकर्म for गमन कर्म, and omit वा after it.　7. *b. d. m.* अभिप्रेतेनार्थेन.　8 *d* यान्यपि च कानिचिदश्च कुटिलानि मार्गाणां &c.; *d.* reads सन्ति after तान्यपि and not before it.　9. *a d m.* add वा after पुनः पुनः　11. *a. d.* गिलनेन्नं. 13. *b₁.* omits तस्यामेव वा गृह्यते before यः शृङ्खलीक्रियते read by *a. b. d. m*

---

16. The quotation is not traced.

आसां पञ्चां धातुप्रकृतीनां या पूर्वा प्रकृतिस्तयैव निगमः न सम्भक्तीत्यादीनामन्यतमया । पन्थाः पततेर्वा पद्यतेर्वा पन्थतेर्वा त्रयोपि ह्येते गत्यर्था एषामन्यतमस्य । अङ्कः अञ्चतेर्गत्यर्थस्य । आपनीफणदिति फणतेर्गत्यर्थस्य चर्करीतान्तत्वेन वृत्तम् ॥

5 दश यानि उत्तराणि नामानि तान्यश्वनामसंबन्धेनैवोच्यन्ते तान्यपि त्वश्वनामेवेति । तानि पुनरादिष्टोपयोजनानि इति एवमाचक्षते आचार्याः । इदमिन्द्रस्याश्वानां नाम इदमग्नेः इदमादित्यस्य–इत्येवमादिष्टोपयोजनानि । कतमानि पुनस्तानि । " हरी इन्द्रस्य "–इत्येवमादीनि । हरी हरितवर्णौ इन्द्रस्याश्वौ । " रोहितोग्नेः " रोहितवर्णौ इत्येवमादि ॥

10 ज्वलतिकर्माण उत्तरे धातव एकादश । य एव अश्ववन्तो भवन्ति त एव ज्वलन्तीव तेजसा ततोश्वनामभ्य उत्तरे ज्वलत्यर्था धातवः । कतमे पुनस्त इति । " भ्राजते भाशते भ्राश्यति "–इत्येवमादयः ॥

---

2 *d* reads पन्थतेर्वा before पततेर्वा and not after it. 3. *j*. सञ्चतेः for अञ्चते, *ε*. अपनीफणत् । 5–6 *d*. omits इति after अश्वनामेव. 9. *a* *d* रोहितावग्ने (not supported by Nigh. I. 15.), *b* reads रोहितोग्नि । It is doubtful whether the dual °वर्णौ is right, but that is the reading of all and hence retained. 12. *a*. *d*. read भ्लाशयते, *b*. भ्राशयते, both unsupported by Nigh. I. 16. which reads भ्राश्यति more generally. The Nigh. reading however is no where found used in the Samhitā, while these are met with

---

8. For हरी इन्द्रस्य etc *vide* Nigh. I. 15.

12. For भ्राजते etc *vide* Nigh. I. 16.

**तावन्त्येवोत्तराणि** "जमत् कल्मलीकिनम् जञ्जणाभवन्"–इत्येवमादीनि **ज्वलतो नामधेयानि ।** जमति गच्छतीति जमत् । कमहं मलिनं शोधयामीति कल्मलीकिनम् । जनं भावयतीति जञ्जणाभवन् । इत्येवमादि ॥

अध्यायपरिसमाप्त्यर्थो द्विरभ्यासः ॥ २८ ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य 5

कृतौ द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

( [१]अथ निर्वचन[२]योर्घो[३]रा[४]क्षोवियाहवा [५]अथातोनुक्रमिष्यामो[६]न्नक्षेत्र[७]क्षेता

वांवास्तु[८]नियईवकारा[९]यंसशिङ्क्ते [१०]हिरण्यनामान्या[११]र्ष्टिषेणो[१२]यद्देवापिः [१३]साधा-

रणानि[१४]स्वरादित्यो [१५]रश्मिनामान्य[१६]तिष्ठन्तीनां[१७]दासपत्नी[१८]रात्रिनामानी[१९]दंश्रेष्ठं-

[२०]उषा[२१]द्वत्साह[२२]श्वक्रुष्यं[२३]देवानांमाने[२४]श्वाद्नामानी[२५]यंशुष्मे[२६]भीरमघ्वंम इन्द्रो अ- 10

स्मा[२७]नातेकारो [२८]उतस्योष्टाविंशतिः ॥ )

इति निरुक्ते पूर्वषट्के द्वितीयोऽध्यायः ॥ २ ॥

---

3. *d m.* जन जन भावयतीति (perhaps better); *a. d. m* इत्येवमादि [दीनि m] ज्वलतो नामधेयानीति ।

---

2. For जमत् etc. *vide* Nigh. I 17.

# अथ तृतीयोऽध्यायः ।

ॐम् । कर्मनामान्युत्तराणि षड्विंशतिः । कर्म कस्मात्क्रियत इति सतः । अपत्यनामान्युत्तराणि पञ्चदश । अपत्यं कस्मादपततं भवति नानेन पततीति वा । तद्यथा जनयितुः प्रजैवमर्थीये ऋचा उदाहरिष्यामः ॥ १ ॥

कर्मनामान्युत्तराणि षड्विंशतिः । कर्मणो नामानि कर्मनामानि । उत्तराणि-इति प्रकृतेभ्यो ज्वलन्नामधेयेभ्यः । ज्वलत्येवाग्नौ कर्माणि क्रियन्त इति ज्वलनामभ्य उत्तराणि कर्मनामानि । कियन्ति पुनस्तानि । षड्विंशतिः षडधिका विंशतिः । कतमानि पुनस्तानि । " अपः अप्नः दंसः "-इत्येवमादीनि । आप्यते
10 पुरुषेणेतदाप्नोतीति वा पुरुषमेतदिति अपः । अप्न-इत्येतदप्यप्नोतेरेव । एवमादि योज्यम् ॥

आह-कर्म कस्मात् । उच्यते क्रियत इति सतः । सत इति कारकावधारणार्थमिति ॥

अपत्यनामान्युत्तराणि पञ्चदश । अपत्यस्य नामानि अपत्यनामानि ।
15 उत्तराणि-इति प्रकृतेभ्यः कर्मनामभ्यः । सर्वकर्मणां अपत्योत्पादनकर्मैव प्रधानभूतमुपाकरणद्वारेणेति कर्मनामभ्य उत्तराण्यपत्यनामानि । कियन्ति पुनस्तानि । पञ्चदश । कतमानि पुनस्तानि । " तुक् तोकम् तनयम् "-इत्येवमादीनि । तुक् तकतेर्गतिकर्मणस्तुज्यतेर्वा । तोकं तुद्यतेस्तनयं तनोतेरिति वक्ष्यति ॥

---

2 D हरि ॐम्; B omits ॥ altogether 5. A. B1. conclude III. 1 after उदाहरिष्यामः. 7 d omits कर्मनामानि, a. b d read ज्वलतिनामधेयेभ्य [m as text] after प्रकृतेभ्य., b1. omits it, b1. अग्नौ for अग्नौ of a. b. d m., m adds हि after ज्वलत्येव 9 a b. d. add षड्विंशतिः after विंशतिः; d आप for अपः ! 18. m omits तुज्यतेर्वा.

---

9. For अपः अप्नः etc vide Nigh. II. 1.

17. For तुक् etc vide Nigh II 2.

18 वक्ष्यति, i. e., in Nir X 7.

आह–अपत्यं कस्मात् । उच्यते–अपततं भवति । पितुः सकाशादपेत्य पृथगेव ततं भवति । अथ वा अनेन जातेन सता पितरो नरके न पतन्तीत्यपत्यम् ॥

अत्र पुनर्विवदन्ते–द्वयोः संनिपाते किं क्षेत्रिणोपत्यमुत बीजिन इति । तदेतदुच्यते–यथा जनयितुरेव प्रजा भवति एवमर्थीये ऋचावुदाहरिष्यामः–॥ १ ॥

" परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥"

परिहर्तव्यं हि नोपसर्तव्यमरणस्य रेक्णोरणोपार्णो भवति रेक्ण इति धननाम रिच्यते प्रयतः । नित्यस्य रायः पतयः स्याम 10 पित्र्यस्येव धनस्य । न शेषो अग्ने अन्यजातमस्ति । शेष इत्यपत्यनाम शिष्यते प्रयतोचेतयमानस्य तत्प्रमत्तस्य भवति मा नः पथो विदूदुष इति तस्योत्तरा भूयसे निर्वचनाय ॥ २ ॥

परिषद्यं हि, न हि ग्रभाय, इति च एते त्रिष्टुभौ वसिष्ठाग्निसंवादे । वसिष्ठेन हत-पुत्रेणाग्निरभ्यर्थितः पुत्रं मे देहीति । तेन किलासौ प्रत्युक्तः क्रीतकदत्त्रिमदत्तकादीनां 15 पुत्राणामन्यतमं कुरुष्व पुत्रमिति । स एवमुक्त एताभ्यामृग्भ्यामन्यजान्पुत्रानिन्दन्नौरसं पुत्रं ययाचे परिषद्यमिति । परिषद्यं हि परिहर्तव्यं–परिहरणीयं–परित्याज्यमित्यर्थः ।

---

1. *bi.* पत्य for अपत्य of *a b d. m.* 2. *a. b. d.* पृथगेव for पृथगिव of *bi.*
5. *m.* adds इति after भवति. 10 C and a ms used by Bı. read रिच्यते.
11. Bı. अस्ति for अस्ति. 13. A Bı. conclude. III. i. 2 after निर्वचनाय.
14 *f* omits हि before ग्रभाय 15. *a. b d.* read अभ्यर्थितः for अभ्यर्थित.
17. *bi. m.* read परिषद्......वि दुक्षः for परिषद्यमिति, *bi.* omits हि after परिषद्य;
*a. b. d.* omit परिहर्तव्य after परिषद्यं हि and add it after परित्याज्य.

---

8. The quot. is RS. VII. 4. 7.

14. For न हि ग्रभाय etc. see next section

किं पुनस्तत्। **अरणस्य रेक्णः** । अरणस्य–अपगतार्णस्य–अपगतोदकसंबन्धस्य परकुलजातस्य रेक्णः–यदपत्याख्यं धनं तत्परिहर्त्तव्यं न पुत्रत्वेन परिकल्पयितव्यमित्यर्थः। न हि तत्पुत्रत्वेन कल्प्यमानमपि पुत्रकार्येष्ववतिष्ठते परकीयत्वात्। यत एवमतो ब्रूमः–**नित्यस्य रायः पतयः स्याम पित्र्यस्येव धनस्य।** यथा हि यदेव पित्र्यं
5 धनं पुत्रत्वे भवति तस्यैव ह्यपर्यगौणं स्वामित्वं भवति। एवं यदेव स्वयंजातमपत्यं भवति तदेव मुख्यं भवति नेतरत्–क्षेत्रजं वा क्रीतकं वा। यत एवमतो ब्रूमः–यदेव नित्यमात्मीयमगौणं स्वयमुत्पादितं पुत्राख्यं राः–धनं तस्यैव वयं पतयः–पालयितारः स्याम मा परकीयस्येत्यभिप्रायः। कस्मात्पुनरेवं ब्रूमहे। इतो यस्मात् **न शेषो अग्ने अन्यजातमस्ति।** नास्ति शेषो–नास्त्यपत्यमन्येन जातं हे अग्ने
10 य एव जनयति तस्यैव हि तद्भवति नेतरस्येत्यभिप्रायः। **अचेतानस्य** य एव हि अचेतयमानो भवत्यविद्वान्प्रमादी तस्यैव **अचेतयमानस्य**–प्रमत्तस्य–अश्रुतवतो धर्मान्परितोषमात्रं भवति–ममेदमपत्यमिति मापत्यकार्येष्ववतिष्ठते। यत एवमतो ब्रूमः–**मा पथो विदुक्षः** मास्मानेतस्मात्पितृपितामहप्रपितामहानुसन्ततात्पथो–मार्गात्येन केनचित्प्रत्याख्यानद्वारेण **विदूदुषः**। त्वं देहि नः पुत्रमौरसमित्यभिप्रायः। इति
15 समस्तार्थः।

अथैकपदनिरुक्तम्। **अरणोपार्णः** अपगतोदकसंबन्ध इत्यर्थः। **रेक्ण इति धननाम।** तद्धि रिच्यते–अतिरिच्यते इतो लोकादमुं लोकं **प्रयतो** म्रियमाणस्येत्यर्थः। **शेष इत्यपत्यनाम।** तद्धि शिष्यते–इहैव लोकेऽवतिष्ठते पितुरमुं लोकं प्रयतः गच्छत इत्यर्थः॥

20 एवमस्यामृचि न शेषो अग्ने अन्यजातमस्तीत्यनेन विशेषलिङ्गेनोपपन्नमेतद्भवति–जनयितुरेव प्रजा भवति न क्षेत्रिणो नापि क्रेतुरन्यस्य वा कस्यचिदिति। एवं चैष शब्दार्थ उपपद्यते–यस्मादेवापेत्य ततं भवति तस्यैवापत्यमिति।

---

2. *d m* परकुलजस्य for परकुलजातस्य. 3. *d m* अवतिष्ठते; *bi* अवतिष्ठति 7. *a. b d m* रायो धन for रा धनं of *bi*. 8. *a b d*. पालयितार [ स्याम *b*. ] पतय स्याम; *m* इत्यर्थ for इत्यभिप्राय 10 *a b d* read अचेतानस्य for अचेतनस्य of *j*. 11. *d* तस्य वा for तस्यैव; *a. b d. m* अचेतानस्य for अचेतयमानस्य of *bi*. 12. *a. b d* धर्म, *m* धर्मान् for धर्मान् of *bi*. 13 *bi*. प्रतत्पित्° for प्रपितामहपितृ° of *a. b d. m.*; *j*. °पितामातृ° ? 14. *j*. इति समास्तर्थ !

अनेनैव चापत्यशब्दनिर्वचनप्रसङ्गेनायं मन्त्रो व्याख्यातः । उत्तरं च सावशेषमपत्यशब्दे प्रसक्तानुप्रसक्तमेवोच्यते ।-तस्योत्तरा भूयसे निर्वचनाय ॥ २ ॥

"न हि ग्रभायारणः सुशेवोन्योदर्यो मनसा मन्तवा उ।
अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥"

न हि ग्रहीतव्योऽरणः सुसुखतमोऽप्यन्योदर्यो मनसापि न मन्तव्यो 5
ममायं पुत्र इत्यथ स ओकः पुनरेव तदेति यत आगतो भवत्योक इति निवासनामोच्यते। एतु नो वाजी वेजनवानभिषहमाणः सपत्नान्नवजातः स एव पुत्र इति। अथैतां दुहितृदायाद्य उदाहरन्ति पुत्रदायाद्य इत्येके ॥ ३ ॥

न हि ग्रभायेति । न हि ग्रहीतव्यः-नाङ्गीकर्तव्यः-पुत्रो ममायमित्यनेनाभिप्रायेण । कः पुनरसौ नात्मीयीकर्तव्यः । अरणः-अपार्णः-अपगतोदरसंबन्धः-अन्यकुलजः । यद्यपि सुशेव एव स्यात्सुसुखतमः परिचारको हितैषी तथा अपि अन्योदर्यः-अन्येनोदीरितः-इतरो जातोन्यजायोदरसंभूतो वा । यो हि स्वस्या जायायां संभवति स स्व एवोदरे संभूतो भवति । 10

"अर्धो ह वा एष आत्मनो यज्जायेति विज्ञायते"। 15

तस्माद्योन्यजायोदरसंभूतः स मनसापि न मन्तव्यो ममायमिति किं पुनः पुत्रत्वेन परिकल्पयितव्य इति । किं कारणं मनसापि न मन्तव्य इति । अधा चिदोकः पुनरित्स एति । अधशब्दोऽथशब्दस्यार्थे वर्तते स च हेत्वर्थः । यस्मात् ओकः-स्वं

1. *m.* वा for च after अनेनैव 2. *a b. d.* अपत्यशब्दप्रसक्तानु°. 4. *d.* अभीषालेतु for अभीषाळेतु. 6 B. C D. R. *m.* add पुत्र after ममाय, *b*1. omits it. 9 A. B1. Conclude III i. 3. after इत्येके. 10. *a. b d. m.* नात्मीयीकर्तव्यः for नाङ्गीकर्तव्यः 12. *b*1 reads परिचारितो for परिचारिता of *a. b d. m.* 14 *m.* स स्वस्य एव for स स्व एव. 17. *m* पुत्रत्वे for पुत्रत्वेन. 18 *j.* अथ शब्द for अधशब्दो of *b*1 *a. b d. m.*

1. The quot. is RS. VII. 4. 8.
15. ?

निवासस्थाने–स्वं वेशं बहुनापि कालेन स एति–तद्देश्य एव भवति तस्मादपुत्र एवासौ । यत एवमतो ब्रवीमि–आ नो वाज्यभीषाळेतु नव्यः । ऐतु–आगच्छतु नः वाजी वेजनवान्–परेभ्यो भयदाता अभीषाट्–अभिषहमाणः–अभिभवन्सपत्नान्–नव्यः–नवजातः–शिशुरित्यर्थः । स एव पुत्र आगच्छतु किं नः परकीयैः पुत्रैः संकल्पितैरित्यभिप्रायः ।

अथैतां दुहितृदायाद्य उदाहरन्ति । इदमुक्तम्–अपेत्य यस्मात्पितुः सकाशात्ततं भवति तस्मादपत्यमिति तदिदमुभयोरपत्यत्वं प्राप्नोति दुहितुः पुत्रस्य च । दुहितापि ह्यपेत्यैव तता भवति पितुः सकाशात् । तत्रैवं सति उभयोर्दुहितृपुत्रयोरपत्यकार्याणि दायाद्यादीनि अविशेषेण प्राप्नुवन्ति तदिदं विचार्यते तदधिकारार्थोऽयमथ-
10 शब्दः । एतामृचं शासद्वह्निरित्यादि या वक्ष्यमाणा तां दुहितुर्दायाद्ये अर्थे उदाहरन्ति धर्मविदः । अस्यामृचि वक्ष्यमाणायां दुहितुरपि दायाद्यत्वमस्तीति दृश्यते ।

पुत्रदायाद्य इत्येके । एके पुनर्धर्मविदो मन्यन्ते यत्पैतृकं वित्तं तत्पुत्रस्यैव दायाद्यं न दुहितुरिति ।

यथा दुहितापि दायाद्यमर्हति तथेयमृग् निरुच्यते—॥ ३ ॥

15 “ शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् ।
पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे ॥”

प्रशास्ति वोढा संतानकर्मणे दुहितुः पुत्रभावम् । दुहिता दुर्हिता दूरे हिता दोग्धेर्वा । नप्तारमुपागमद्दौहित्रं पौत्रमिति । विद्वान् प्रजननयज्ञस्य रेतसो वाङ्गादङ्गात्संभूतस्य हृदयादधिजातस्य मातरि

4. *b₁.* reads न for किं न. of *a. b. d. m.* 5. *b₁.* इत्यभिप्रायः, *a. b d. m.* इत्यर्थं. 7. *a. b. d. m.* उभयोरपत्यत्वं दुहितृपुत्रयो प्राप्नोति, *b₁.* उभयोरपत्य प्राप्नोति दुहितु पुत्रस्य च. 8. *b₁.* अपेत्येव for अपेत्यैव of *a. b. d. m.* 9. *a. b. d. m.* add इति after दायाद्यादीनि. 10. *b. d. m* दुहितृदायाद्येऽर्थे. 12 *d.* पैतृकवित्त. 17. *b₁.* वोल्हा, R. and the Mss. वोढा.

16. The quot. is RS. III. 31. 1.

प्रत्यृतस्य विधानं पूजयन् । अविशेषेण मिथुनाः पुत्रा दायादा इति । तदेतदृक्-श्लोकाभ्यामभ्युक्तम् ।

अङ्गा॑दङ्गात्सं॒भव॑सि हृद॑या॒दधि॑जायसे ।
आ॒त्मा वै पु॒त्रना॑मासि॒ स जी॑व श॒रदः॑ श॒तम् ॥

इति । 5

अविशेषेण पुत्राणां दायो भवति धर्मतः ।
मिथुनानां विसर्गादौ मनुः स्वायंभुवोऽब्रवीत् ॥

न दुहितर इत्येके । तस्मात्पुमान्दायादोऽदायादा स्त्रीति विज्ञायते । तस्मात्स्त्रियं जातां परास्यन्ति न पुमांसमिति च । स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः । पुंसोऽपीत्येके शौनःशेपे दर्शनात् । अभ्रातृमतीवाद इत्यपरम् । 10

अ॒मूर्या॑ यन्ति जा॒मयः॒ सर्वा॑ लोहि॑तवाससः ।
अ॒भ्रा॒तर॑ इव॒ योषा॒स्तिष्ठ॑न्ति ह॒तव॑र्त्मनः ॥

---

12. A. omits the first line अमूर्या......to लोहितवाससः ; all others have it.

---

2. The following verses are written with accents in some Mss. and are so printed in Bi. and J. as well as in R. Many mss. accent the first line only of the first verse. Vaidic recitation does not retain the tradition of accents here. Yet, since the first verse is referred to by Yāska as ऋक् and the second as श्लोक, I print the first with accents and the second without them. The first verse is referred to in गोभिलगृह्यसूत्र II. 8. 21, and occurs in आश्वलायनगृह्यसूत्र I. 15. 11. I cannot yet trace the source of the second.

8. पुमान्दायादोऽदायादा स्त्रीति विज्ञायते ।।

9 तस्मात्स्त्रियं .....न पुमांसमिति च । vide Taitt. Sam. VI. 5. 10.

12. अमूर्या etc. – this verse occurs with slight variation in Ath. Sam. I. 17. 1.

अभ्रातृका इव योषास्तिष्ठन्ति संतानकर्मणे पिण्डदानाय हतवर्त्मान इत्यभ्रातृकाया अनिर्वाह औपमिकः । तस्योत्तरा भूयसे निर्वचनाय ॥ ४ ॥

**शासद्वह्निरिति** । एषा त्रिष्टुप् । ऐन्द्रे सूक्ते विश्वामित्रेण दृष्टा । माध्यन्दिने सवने उभयपर्यायेष्वच्छावाकस्य यच्छस्यमभिजिद्विश्वजिदादिष्वहीनकेष्वहःसु अहीनसूक्तं नाम तत्रैषं शस्यते । "न जामये तान्वं"—इतीयमपि अनयैव समानार्थविनियोगदैवतच्छन्दस्का । **शासद्वह्निः-प्रशास्ति**-प्रख्यापयति-प्रज्ञापयतीत्यर्थः । कः पुनरसौ प्रशास्ति । किं वा प्रशास्तीति । **वोढा** य उढ्वोढा स्त्रियो भवति स तस्यां या जायते दुहिता तस्याः पुत्रभावं प्रशास्ति-**संतानकर्मणे** अर्थाय । **दुहिता दुर्हिता** । सा हि यत्रैव दीयते तत्रैव दुर्हिता भवति । **दूरे** वा सती सा पितुः **हिता**-पथ्या भवतीति दुहितेत्युच्यते । **दोग्धेर्वा** । सा हि नित्यमेव पितुः सकाशाद्द्रव्यं दोग्धि प्रार्थनापरत्वात् । आह-कथं पुनर्गम्यते प्रशास्ति वोढा संतानकर्मणे दुहितुः पुत्रभावमिति । उच्यते-इतः । यस्मात् **नप्त्यं गात्-नप्तारमुपागमत्**-उपागच्छति चेतसा । **दौहित्रं**-दुहितृपुत्र **पौत्रमिति** । पौत्रो ममायमित्येवमुपागच्छति । न ह्यपुत्रस्य पौत्रः स्यात् । उपागच्छति च दुहितुः पिता पौत्रो ममायमिति दौहित्रम् । तस्माद् दुहितापि पुत्र एव यस्याः पुत्रः पौत्रो ममायमित्येवं चेतसा उपगम्यते । **विद्वाँ ऋतस्य दीधितिं सपर्यन्** । विद्वान् कस्य । **ऋतस्य-प्रजननयज्ञस्य** । ऋत इत्येतदपठितं यज्ञनाम । **दीधितिं**-विधानमित्यर्थः । प्रजननयज्ञविधानमविशेषेण **सपर्यन्** पूजयन्नित्यर्थः । यथैव हि पुत्रजनने प्रजननयज्ञः-मन्यते तथैव हि दुहितृजननेऽपि-तैरेव मन्त्रैस्तेनैव च विधानेन पुत्रगर्भं आधीयते

तैरेव मन्त्रैस्तेनैव च विधानेन दुहितृगर्भोऽपि । अथ वा ऋतशब्देन रेत उच्यते । तद्धि अङ्गादङ्गात् संभूतं सर्वगात्रेभ्यो हृदयानुस्मरणनिमित्तेन गर्भजनने मातरि प्रसृतं-प्रवृत्तं भवति रेतः । तस्य रेतसो विधानमविशेषेण पूजयन् स वोढा दौहित्रं पौत्रो ममायमित्येवमुपागच्छति चेतसा । येनैव हि विधानेन पुत्रजनने रेत उत्सृज्यते तेनैव हि दुहितृजननेऽपि तत्रैव सति रेतउत्सर्गविध्यविशेषात् प्रजननयज्ञ- 5
विशेषाद्वा अविशेषेण मिथुनाः पुत्राः स्त्रियश्च उभयेऽपि दायादा इत्येवमेके धर्मविदो मन्यन्ते । तदेतदृक्श्लोकाभ्याम् अभि आभिमुख्येन उक्तं-मिथुनाः पुत्रा दायादा इति । "अङ्गादङ्गात्संभवसि", "अविशेषेण पुत्राणाम्"- इत्येताभ्याम् ।

शासद्वह्निः—इत्येतस्या ऋचः प्रथमोऽर्धर्चो व्याख्यातः । 'पिता यत्र दुहितुः - 10
इत्ययं द्वितीय उपरिष्टादस्य पादस्य व्याख्यास्यते अनयोरर्धर्चयोरन्तरा तदेतदृक्श्लोकाभ्यामभ्युक्तमित्यत आरभ्य प्रसक्तानुप्रसक्तं दायाद्यधर्माश्रितमेव पूर्वोत्तरपक्षसंबन्धादाचारगतं बहु व्याख्यायते मन्त्रविषयस्यापनाय ईदृशोऽपि मन्त्राणां विषयो भवतीति धर्मसंविज्ञानाय च । सर्व एवायमेवंप्रकारो धर्मो मन्त्रेभ्य एव निर्वभावित्येतदेतेन ज्ञापितं भवति ॥ 15

"अङ्गादङ्गात् संभवसि"—इत्येतामृचं प्रवासादेत्य पुत्रस्य मूर्धनि जपन् जिघ्रति । अनुष्टुबेषा । स पुत्र उच्यते—हे पुत्र । अङ्गात् अङ्गात् संभवसि त्वं

---

2. *b d. m* add हि after तत् and before अङ्गात्, *bt.* omits it; *a b d. m* omit यत् before संभूतं and तत् after ॥ read by *bt*; *m*, however, has the latter, ॥ *b. d* गर्भजन्मने 3. *bt.* विधान न विशेषेण for विधानमविशेषेण 4. *bt.* उपग-च्छति for उपागच्छति of *a b d m.* 4–5 *a b d* read पुत्रजन्मने and दुहितृजन्मने for पुत्रजनने and दुहितृजनने. 5. *m.* omits हि after तेनैव; *j* 'यज्ञविशेषा° for °यज्ञाविशेषा° 14. *b d. m* add प्रकारेण after एतेन

---

11. व्याख्यास्यते i. e. in the next section, after the interpretation of this line in this section.

17. जिघ्रति, *Cf.* ' विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेद् यदा वा पिता म इति विद्याद्रूपेणास्य वाङ्गादङ्गात्संभवसीति । (Gobhil. Gr. Sû. II 8 '21.) or 'प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति अङ्गादङ्गात्......शतमिति मूर्धनि त्रिरवघ्राय' (Âs'v. Gr. Sû. I. 15. 11.)

**हृदयादधिजायसे** यदुक्तम्—अङ्गादङ्गात्संभूतस्य हृदयादधिजातस्य-इति । तदनेनापि स्पष्टार्थतरेण मन्त्रेणोच्यत इति पूर्वस्यास्पष्टार्थतायां स्पष्टीकरणार्थोऽयं मन्त्रः । तत्र हि **ऋतस्य दीधितिं सपर्यन्**-इत्यत्र ऋतस्य प्रजननयज्ञस्य रेतसो वा विधानमविशेषेण पूजयन्नित्युक्तम् । तत्पुनरेतदस्पष्टम् । इह पुनरङ्गादङ्गात्संभवसि हृदयादधिजायसे इत्येवमुच्यते । तत्रैवं सति यथैव पुमानङ्गादङ्गात्संभवति हृदयाच्चाधिजायते तथैव दुहितापीत्यविशेष उपपद्यते । तस्मात्साधूक्तम्-" अविशेषेण मिथुनाः पुत्रा दायादा इति ।" **आत्मा वै पुत्रनामासि** । यस्मादङ्गादङ्गात्संभूतस्त्वं हृदयादधिजातस्तस्मादात्मैव त्वं ममैवावयवभूत इत्यभिप्रायः । केवलं तु पुत्रनामा त्वमहं पितृनामा एतावानावयोर्विशेषो नाममात्रं भिन्नमित्यभिप्रायः । **स त्वं जीव** 10 **शरदः शतम्**-इत्याशीः । सर्वस्मिन्नपि संवत्सरे शरदेव दुर्जीवा प्रचुररोगत्वाच्छरदः तस्माच्छरदेवोपलक्ष्य संवत्सरशतमेतदायुराशास्यते ॥

**अविशेषेण पुत्राणां दायो भवति धर्मतः मिथुनानाम्** । क एवमाह । **मनुः स्वायंभुवः** । स्वयंभुवोऽपत्यं स्वायंभुवः । कस्मिन् काले स एवमाह । **विसर्गादौ** सृष्ट्यादावित्यर्थः । पूर्वमर्धं श्लोकस्य ऋज्वेव । एवमेताभ्यामृक्श्लोकाभ्या-15 मुक्तमविशेषेण पुत्रस्य दुहितुश्च दायाद्यत्वम् ॥

**न दुहितर इत्येके** न दुहितरो दायायमर्हन्तीत्येवमेके धर्मविदो मन्यन्ते । ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति-**तस्मात् पुमान् दायादः स्त्री अदायादा इति विज्ञायते**-एतस्मिन् ब्राह्मणे विचार्यमाणे ज्ञायते । न दुहितरो दायायमर्हन्ति पुमान्-

---

1. *a b. d.* add एतत् after तत्. 2. *d* पूर्वस्यास्पष्टार्थतायाम् ; *b* स्पष्टार्थीकरणार्थं for °करणार्थोऽयं. 9. *m* adds तु after अहम् ; *a. b.* read शत जीव for स त्वं जीव 10 *a. b d. m.* सर्वस्मिन्नपि संवत्सरे शरदेव [ *m*. शरदेव ] दुर्जीव्य [ *m* दुर्जीवा ] प्रचुररोगत्वाच्छरदः ; *b*. सर्वस्मिन्नपि संवत्सरे शरदे बहुजीवा प्रचुररोगा भवन्ति । तस्माच्छरद । 11. *a. b. d* शरदेवो° for शरदेवो 14 *b. d m* add अपि after एताभ्या- 16. *m.* दायाद्यत्वं for दायाद्यम् 17. *a. b. d* दर्शयन्ति for दर्शयति; *a. b d. m* add च after इति. 18. *d. m.* read after विज्ञायते.-यदन्वेति स्पाली न दारुमय तस्मात्पुमान्दायादोऽदायादा स्त्रीति विज्ञायते एतस्मिन् ब्राह्मणे etc.

---

13 मनुः - *Cf* यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा । Manu IX 130; also compare 133 and 139 of the same chapter. The above verse however is not to be found in the present Manusmriti.

र्हतीति । तस्मात् स्त्रियं जातां परास्यन्ति न पुमांसमिति च । एतदपरं दर्शनं दुहितुरदायादत्वे लिङ्गो दर्शयति—

"अथ यत् स्थालीं परास्यन्ति हवनकर्मणो न तया जुह्वति न दारुमयं परास्यन्ति हवनकर्मणः दारुमयेनैव जुह्वति तस्मात् स्त्रियं जातां परास्यन्ति परस्मै प्रयच्छन्ति न पुमांसम् ।" 5

तस्मात्पुमानेव पैतृकस्य वित्तस्येष्टे न दुहिता । किं च स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः । प्रदीयते हि परस्मै स्त्री विक्रीयते च वैवाहिकेन शुल्केन ।

"विक्रयं चाप्यपत्यस्य मतिमान् कोऽनुमंस्यते ।
स्वल्पो वाथ बहुर्वापि विक्रयस्तावदेव सः ॥"

इति भगवता वासुदेवेनोक्तं सुमद्राहरणे । तथा च ब्राह्मणमपि दर्शयति— 10

"चातुर्मास्येष्वनृतं वा एषा करोति या पत्युः क्रीता सती अन्यैश्चरति"

इति । तस्माच्छुल्केन प्रदानं विक्रयः कन्याया इत्युपपद्यते । अतिसर्गः परित्यागः परित्यज्यते हि कन्या स्वबन्धुभिः स्वयंवरे यो बलिष्ठः स गृह्णात्विति । यो वा तुभ्यं रोचते तं वृणीष्वेति । स एष क्षत्रियाणामेव स्वयंवरधर्मो नेतरेषां वर्णानामिति । स पुनरयमितरेषामपि वर्णानामदायादार्हत्वे कन्याया लिङ्गं भवति । तस्मान्न दायमर्हति 15 कन्येति ॥

---

3-4. *a. b. d.* omit यत् before स्थालीं, *d.* omits न तया जुह्वति न दारुमयं परास्यन्ति हवनकर्मणः 4. *a. b. d.* ■ add कारणात् after तस्मात् 5. *a b. d. m.* omit न पुमांसम् 8. *a. b. d. m.* विक्रयं चाप्यपत्यस्य, *a. b.*, however, विक्रयं चाप्यपत्यस्य; *a d.* appear to read कोऽनु मस्यते. *bi.* विक्रयश्चाप्यपत्यस्य मतिमान् को न मन्यते 9. *a. b. d.* read स्वल्पो वाप्यबहुर्वापि 13. *bi.* योऽबलिष्ठः ■ गृह्णातु. 15. *d* अदायादार्हत्वे, ■ अदायादार्हत्वे for अदायादार्हत्वे of others; *j.* omits न after तस्मात् read by all others.

---

3-5. अथ यत्स्थालीं etc. Two Brāhmaṇa texts are here referred to in the Nirukta. The exact references however are not yet found.

8. *विक्रयं चापि etc.–the quot. is not traced.*

11. ब्राह्मणमपि etc.–the quot. is not traced.

12 उपपद्यते–*Cf.* शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयं Manu. IX. 100.

पुंसोऽपीत्येके शौनःशेपे दर्शनात् । यदुक्तं दानविक्रयातिसर्गहेतुभिरदाया-
दत्वं स्त्रिया इति । अनेकान्त एषः । पुंसोऽपि दानविक्रयातिसर्गा विद्यन्त एव ।
पुरुषोऽपि हि परस्मै दीयते । एवं ह्युक्तम्–

"दत्तक्रीतकृत्रिमक्षेत्रजौरसाः पुत्राः"

5 इति । तथा च शौनःशेपे दर्शनात् । शौनःशेप आख्याने बह्वृचानां भारते च
शुनःशेपस्य विक्रयो दृष्टः–

'विक्रीतं मध्यमं मन्ये'

इत्येवमादि । तथा च परित्यागोऽपि दृष्टः—यथा विश्वामित्रेण मधुच्छन्दआदीनाम् ।
तस्मादनैकान्तिकत्वादेवैषां हेतूनामुभयोरपि दायादत्वमित्येके मन्यन्ते ॥

10 अभ्रातृमतीवाद इत्यपरम् । आचार्यमतमिति वाक्यशेषः । यैवाभ्रातृका
भवति कन्या सैव पित्र्यं धनमर्हति नेतरा सभ्रातृका । पुत्रेषु हि पितुः पिण्डदातृषु
तिष्ठत्सु न स्त्री धनमर्हति सा हि परकीयं वंशं वर्धयति न स्वम् । तस्मादसौ नार्थभा-
गिनी । अभ्रातृकायां पुनरयं विशेषः—अभ्रातृकायाः पितुरन्यः पुत्रो नास्तीति दौहित्रः
पिण्डदानादिषु कार्येष्ववतिष्ठते इति भवत्यर्थभागिनी अभ्रातृका दुहिता । तदुक्तम्—

15 'पितोत्सृजेत् पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वास्मदर्थमपत्यमिति संवादाभिसन्धान-
मात्रं पुत्रिका'

इत्येकेषामिति ।

---

2 m adds हि after पुंसोऽपि 9 a, b d omit एव after अनैकान्तिकत्वात्, a b, d m add एव after दायादत्वमिति 11 m. adds न before पुत्रेषु ! 13 a b, d अभ्रातृका पितु 15 g अस्मादर्थं for अस्मदर्थं.

---

3 उक्तम्–vide Manu IX. 158, 159, 160.

5 बह्वृचानां–Ait. Br XXXIII 3.

7 The quot is not traced.

8 मधुच्छन्दआदीनां–vide Ait. Br. XXXIII. 6. Here, however, मधुच्छन्द and the younger brothers appear to be favoured and those older than मधुच्छन्द cursed by विश्वामित्र.

15 The quot. is not traced.

निगममप्येतस्मिन्नर्थे उदाहरन्ति—अभ्रातरं इव योषास्तिष्ठन्ति हतवर्त्मन

इति । निगमस्य समासतोर्थमाह—अभ्रातृका इव योषास्तिष्ठन्ति संतानकर्मणे पिण्डदानाय हतवर्त्मान इति । अस्यामृचि अभ्रातृकायाः कन्यायाः अनिर्वाहः—अनिर्वहणं-विवाहनिषेध इत्यर्थः । औपमिकः-उपमया दर्शितः । अभ्रातर इवेति । अमूर्या यन्ति जामयः 5 सर्वा लोहितवाससः । अभ्रातरं इव योषास्तिष्ठन्ति हतवर्त्मनः ॥ इयमथर्वणा प्रसवमार्गवहनरोगिणी या स्त्री भवति तस्यास्तत्प्रतिकारकर्मणि विनियुज्यते । अमूर्या यन्ति-स्रवन्ति नाड्यो रक्तमजस्रमविरताः स्त्रिय इवातिलोहितवस्त्राः सर्वाः एतास्तिष्ठन्तु उपरमन्तु हतलोहितवहनमार्गा अस्य मन्त्रस्य वीर्येण । कथं पुनस्तिष्ठन्तु । अभ्रातर इव योषाः यथा काश्चिदभ्रातृका योषा हतभर्तृवंशमार्गास्तिष्ठन्ति संता-10 नकर्मणे पिण्डदानाय एवमेता नाड्यस्तिष्ठन्त्विति । एवमस्यामृचि अभ्रातृकाया अनिर्वाह उपमया लिङ्गो दर्शितः ॥

तस्य-अनिर्वाहस्य उत्तरा ऋक् भूयसे-बहुतराय निः-निर्विविच्य वचनाय ॥ ४ ॥

"अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् । 15
जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः ॥"

अभ्रातृकेव पुंसः पितृनेत्यभिमुखी संतानकर्मणे पिण्डदानाय न पतिं गर्तारोहिणीव धनलाभाय दाक्षिणाजी । गर्तः सभास्थाणुर्गृणातेः सत्यसंगरो भवति तं तत्र यापुत्रा यापतिका सारोहति तां

1. *b* omits अपि after निगमम्   6. *m.* adds हि after सर्वा.   11. *b. d. m.* संतानकर्मणे, *bi.* °नकर्मणि; *m.* अभ्रातृकानिर्वाह   13. *a. b d m.* omit नि.
18. Br. नपति for न पतिं of A. B. C. D. R.; Br. gives the variant as दाक्षिणापाजी

5. For अमूर्या etc. *vide* Ath. Sam. I 17. 1.

16. The quot. is RS. I. 124. 7.

तत्राक्षैराघ्नन्ति सा रिक्थं लभते । श्मशानसंचयोऽपि गर्त उच्यते गुरतेरपगूर्णो भवति । श्मशानं श्मशयनं श्म शरीरं शरीरं शृणातेः शम्नातेर्वा । श्मश्रु लोम श्मनि श्रितं भवति । लोम लुनातेर्वा लीयतेर्वा ।

"नोपरस्याविष्कुर्याद्यदुपरस्याविष्कुर्याद्गर्तेष्ठाः स्यात्प्रमायुको यज-
5 मानः"

इत्यपि निगमो भवति । रथोऽपि गर्त उच्यते गृणातेः स्तुतिकर्मणः । स्तुततमं यानम् ।

"आ रोहथो वरुण मित्र गर्तम्"

इत्यपि निगमो भवति । जायेव पत्ये कामयमाना सुवासा ऋतुकाले-
10 पूषा हसनेव दन्तान् विवृणुते रूपाणीति चतस्र उपमाः ।

"नाभ्रात्रीमुपयच्छेत तोकं ह्यस्य तद्भवति ।"

इत्यभ्रातृकाया उपयमनप्रतिषेधः प्रत्यक्षः ।

पितुश्च पुत्रभावः ॥ पिता यत्र दुहितुरप्रत्ताया रेतःसेकं प्रार्जयति संदधात्यात्मानं संगमेन मनसेति ॥ अथैतां जाम्या रिक्थप्रतिषेध
15 उदाहरन्ति ज्येष्ठं पुत्रिकाया इत्येके ॥ ५ ॥

---

1. A and the variant given by Bi. तत्राक्षेण अघ्नि. 2. B गुरुते. 3. Bi. gives variant as शृत for श्रित. 4. C. D. read क्यावि कुर्यात्. 11. Bi. gives the variant as नाभ्रातृकां for नाभ्रात्रीं of all our mss 15. A. Bi conclude III. i. 5. after इत्येके.

---

4. The quot. is not traced.

9. The quot is RS. V. 62. 6.

11. The quot. is not traced.

**अभ्रातेव पुंस** इति । दीर्घतमःपुत्रस्य कक्षीवत आर्षम् । त्रिष्टुप् । औषसी । प्रातरनुवाकाश्विनयोः शस्यते । **अभ्रातेव पुंसः** । यथा अभ्रातृका कन्या दत्तापि सती पित्रा स्वीकृतापि भर्त्रा पुनः **प्रतीची पितॄन्** एव पितृवंशमेव **अभिमुखी एति संतानकर्मणे पिण्डदानाय न पतिं** पतिवंशमित्यर्थः । सा हि पितृवंशं पुत्रैः पौत्रैश्च वर्धयति न भर्तृवंशमिति तस्मादभ्रातृका पैतृकं दायाद्यमर्हतीत्युपन्यते । 5
**गर्तारुगिव सनये धनानाम्** । गर्तारोहिणी इव काचित् दाक्षिणात्या स्त्री सा यथा **गर्तः** सभास्थाणुस्तमारोहति **सनये** लब्धये **धनानाम्** । एवम् **उषाः** अपरकाले रात्र्या नभ आरोहति । किंच । **जायेव पत्य उशती सुवासाः** । यथा जाया पत्ये भर्त्रे सुवासा भूत्वा ऋतुकाले आत्मानं दर्शयत्येवमुषा आत्मानं दर्शयति जनानाम् । किंच **उषा हस्रेव निरिणीते अप्सः** । यथा हसना हसन- 10
स्वभावा दन्तानात्मनो दर्शयति एवमुषा अपि आत्मनोन्तर्भूतानि सर्वद्रव्याणां रूपाणि विवृणुते शार्वरेण तमसा दिग्धानि सर्वद्रव्याणि प्रकाशोद्रेकेन धौतानीव करोति ।

**चतस्रः एता उपमाः** अस्यामृचि ।—अभ्रातेव पुंस इत्येका । गर्तारोहिणीवेति द्वितीया । जायेव पत्य इति तृतीया । हस्रेवेति चतुर्थी । अत्र प्रथमयोपमया अभ्रातेव पुंस इत्यनया अभ्रातृकाया अनिर्वाहो दिश्यते । यथा अभ्रातृका पितॄनेव प्रत्येति न 15
पतिमेवमुषा आदित्यमेव प्रत्येति । एवमभ्रातृका कन्या यस्मिन्नेव वंशे उत्पन्ना भवति तमेव प्रकाशयति वर्धयति न भर्तृवंशम् । इत्येवमुपमया नार्यो बोधव्येतदुपप्रदर्शितं

---

1. *d. m.* पनि for इति, *a. b. d.* read गौतमपुत्रस्य, *m* दीर्घतमस पुत्रस्य for दीर्घतम॰ पुत्रस्य. 3 *a. b. d. m.* read उक्ता for स्वीकृता; *a. b. d.* add पुनः॰ after पुनः॰. 4. *a b. d m.* सन्तानकर्मणे पिण्डदानार्थं न पतिवंशमित्यर्थः; *b1* सन्तानकर्मणे पिण्डदानाय नयति पतिवंशमित्यर्थः. We read in accordance with the text of the *Nirukta* given above. 7 *d* दाक्षिण्या for दाक्षिणात्या; *a. b. d m.* add after आरोहति,–असतिपतिस्त्रीमुपरितरतीत्यर्थः । तत्र गत्वा भर्ता अपुत्रा स्त्रियः लभन्ते कितवा दापयन्ति रिक्थमिति दाक्षिणात्येषु देशेषु ; and then proceed to read सनये लब्धये etc. 8 *a. b. d. m* रात्र्या for रात्र्या of *b2*. 9. *a b. d. m* ऋतुकालेषु for ऋतुकाले. 10–11. *a. b. d.* add स्त्री after हसनस्वभावा ; *b. d.* omit हसना; *m.* adds स्त्री after हसना ; *d.* adds हसनस्वभावा again before दन्तान. 12. *a. b. d. m.* add स्वेन before प्रकाशोद्रेकेन. 14. *b1.* प्रथमोपमा for प्रथमयोपमया 17. *a. b. d. m* नार्याबुद्धोऽव्येत्येनदुपदर्शितम्

भवति पुत्रार्थत्वाद्विवाहस्य । तस्मादवर्धयितृत्वाद्भर्तृवंशस्य वर्धयितृत्वाच्च पितृवंशस्य अभ्रातृका पितृदायाद्यमर्हतीत्युपपद्यते ।

निगमप्रसक्तस्य तत्त्वमाचष्टे—**गर्तः सभास्थाणुः** इति अक्षनिवपनपीठमित्यर्थः । **गृणातेः** स हि **सत्यसंगरो भवति** समीर्यते हि तत्र सत्यमिदमत्र पतितमिदमत्र 5 न पतितमित्येवं प्रायेण । कितवास्तत्रानृतं ब्रुवते । तमेवंलक्षणं गर्तमारोहति या स्त्री सा गर्तारुगित्युच्यते । तदेतद्गर्तस्य सभास्थाणोरारोहणं रिक्थलाभहेतुर्दाक्षिणात्येषु अपुत्राया अपतिकायाः स्त्रियाः प्रसिद्धम् । तयैव प्रसिद्ध्या निरुच्यते । देशसमाचारव्यवस्थयापि क्वचिन्मन्त्रार्थो निर्वक्तव्य इत्येतदनेन प्रदर्शितं भवति । तं तत्र **या अपुत्रा या अपतिका सा आरोहति** तं सभास्थाणुं तत्र कितवमध्ये अवस्थितं या 10 अपुत्रा स्त्री या अपतिका सा आरोहति तस्मिन्नुपविशतीत्यर्थः । ततः **सा** भर्तृबन्धुभ्यः सकाशात् **रिक्थं लभते** यत्तस्या भर्तृसक्तो धनांशस्तम् । एवमसौ सनये लब्धये धनानां गर्तमारोहति ।

गर्तशब्दप्रसक्तमुच्यते—**श्मशानसंचयोऽपि गर्त उच्यते । गुरतेरपगूर्णार्थस्य** । स हि लोकविनाशायाभ्युद्यत इव भवति । यानि हि तत्र पिशाचादीनि 15 सत्त्वान्याश्रितानि भवन्ति तानि जनमरणमाशासते म्रियमाणेषु जनेषु तानि प्रमुदितानि भवन्ति । **श्मशानं श्मशयनम्** इत्याख्यानप्रसक्तमुच्यते । तत्र हि श्म शेतेऽस्मिन्निति श्मशयनं सत् तत् श्मशानमित्युच्यते । श्मशब्दार्थमाह—**श्म शरीरम्** इति । तद्धि तत्र शेते तत्र हि तन्निक्षिप्यते मृतस्य सतः । **शरीरं शृणातेः शम्नातेर्वा** । कृतव्याख्यानमपि पुनराह मुख्यत्वादस्य । तत्र औपमिकं वृत्रसंबन्धात् न हि वृत्रस्य

---

1. *d* omits च before पितृवंशस्य. 3. *b₁* अक्षनिवपनपीठ for अक्षनिवपनपीठम्. 4. *d* मरीर्यते for समीर्यते. 8. *d. m.* read तु before तत्र in the प्रतीक, others do not. 9. *a. l. d. m.* add या before अपतिका, *b₁*. omits it. 11. *b₁* धनांशस्तम् । एवमसौ etc., *a. d.* read धनांश. । तमेवमसौ- 13 *b₁* गर्तप्रसक्तं for गर्तशब्दप्रसक्तम् of *a. b. d. m.* 14. *d.* omits स before हि; *a. d* read शिवादीनि for पिशाचादीनि, *m.* reads पिशाचशिवादीनि. 15 *a. b. d.* read जनमरणकामान्याशासते, *d.* जानेषु for जनेषु. 16. *d. m.* omit अत्र after शेते 18. *b. d. m* add शरीरं शृणातेः before शम्नातेर्वा, *b₁*. शम्नातेर्वा only.

---

18 मृतस्य सत —*Cf* "श्मशाने [illegible] निचख्नुः" Ath. Sam. V 31, 8.

19. For कृतव्याख्यान° *vide* Supra Nir, II 16.

मुख्यं शरीरम् । श्मशब्दप्रसक्तं निराह–श्मश्रु लोम इति तद्धि श्मनि शरीरे श्रितं भवति । पर्यायप्रसक्तं निराह–लोम लुनातेः । तद्धि लूयते । लीयतेर्वा । तद्धि शरीरे लीयते ।

तत्र निगममपि चोदाहरन्ति–श्मशानसंचयोपि गर्त इति ।

"नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्याद्गर्तेष्ठाः स्यात् प्रमायुको यजमानः" इति । 5

उपर इति यूपस्यानष्टप्रदेश उच्यते

"पञ्चभागोपरा यूपाः"—

इति ह्युक्तम् । तदनष्टं यूपस्य नाविष्कुर्यादित्यर्थः । पांशुभिस्तदवच्छादनीयं बर्हिषा च । यदि पुनरुपरस्य कंचिदप्यवयवमाविष्कुर्यात् गर्तेष्ठाः गर्तप्रतिष्ठः श्मशानप्रतिष्ठः 10 प्रमायुकः–प्रमरणधर्मायुरेव यथाविहितादायुषो यजमानः स्यात् । इत्यपि निगमो भवति अप्ययमप्यन्ये बहव इत्यपिशब्दः ॥

रथोपि गर्त उच्यते । गृणातेः स्तुत्यर्थस्य । तद्धि स्तुततमं यानम-श्वादिभ्यो यानेभ्यः सुखतरं हि तेन गम्यते । रथोपि गर्त इत्यस्मिन्नर्थे आरोहथो वरुण मित्र गर्तमित्यपि निगमो भवति । 15

> "हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।
> आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च ॥"—

इति श्रुतविदात्रेय एतया त्रिष्टुभा मित्रावरुणावस्तौत् । राजसूयेभिषेचनीयो नाम क्रतुस्तत्र यजमानस्य रथमारुरुक्षतः गृहीतेषुधनुष्कौ बाहू अनया अभिमन्त्र्येते । तावेवात्र मित्रावरुणावधिदेवताभिप्रायेण । एवं ह्याह— 20

---

2 a. b. d. m. आह for निराह. 4. a. b. m. add अत्र after च and उच्यते after गर्तः 7. a b d. read अनष्ट प्रदेश ; b. d. omit उपर इति. 8. b. पञ्चममागोपरा. All our Mss. read पञ्चमागोपरा. 9. d. आवि कुर्यात्; m. पांशुभि. 10. m किंचित् for कचित् 13 a. d. m. omit यान after स्तुततम. 16. d. reads हिरण्यरूप उषसो व्युष्टौ only for the verse. 19 b. reads सः after क्रतु. 20 a. b. d. m. add अभिप्रेतौ after मित्रावरुणौ.

---

17. The quot. is RS V. 62 8.

18. अभिमन्त्र्येते Cf. 'बाहू उद्गृह्णाति हिरण्यरूपा इति' Kâty. Sû. XV. 5. 28.

19. आह–Ait. Br. III 1 4 The word रूप is technically used in the sense of द्रव्य and देवता.

"मित्रोसीतीममभिमन्त्रयते मित्रस्य ह्येतद्रूपम् वरुणोसीतीमं वरुणस्य ह्येतद्रूपमिति"।
तावुच्येते । हे मित्र हे वरुण हिरण्यरूपं-हिरण्यसदृशवर्णं उषसो व्युष्टौ-उषसो व्युच्छेदनकाले उदिता च-उदयकाले सूर्यस्य यौ युवामेतस्मिन् काले एवंरूपमयःस्थूणमयोमयस्थूणं स्वं गर्तं रथमारोहथस्तौ युवां ब्रवीमि ममाप्येवं रथं गर्तमेतस्मिन्
5 विधावद्भूतं तत्स्वरूपमेव साम्प्रतमारोहतम् । अत एनमारुह्य चक्षाथे कुरुतमित्यर्थः । अदितिं दितिं च अदीनमनुपक्षीणमात्मपक्षं दीनं चोपक्षीणममित्रपक्षमित्यर्थः ।

गर्तः सभास्थाणुरित्यत आरभ्य प्रसक्तानुप्रसक्तमुक्तम् । जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः-इत्ययमप्यर्धर्चः पूर्वमेव व्याख्यातो भाष्यकारव्याख्यानुक्रमे भिन्नत्वादस्माभिस्तथाप्यृग्वाक्यस्यास्यैकवाक्यता न विच्छिन्ना भवेदिति ।
10 चतस्र उपमा इति यदुक्तं भाष्यकारेण तदपि परिसंख्याय ता उपपादिता अस्माभिः । एवम् अभ्रातेव पुंस एति प्रतीची-इत्यनेन पादेनास्यामृच्यनिर्वाहो दर्शितः ।

अन्यत्रापि चोक्तम्-नाभ्रात्रीमुपयच्छेत तोकं ह्यस्य तद्‌ भवति-इति । अयमस्मिन् वाक्ये नाभ्रातृकामुपयच्छेतेति प्रत्यक्ष एवोपयमनप्रतिषेधो विवाहार्थे पाणिग्रहणप्रतिषेध इत्यर्थः । पूर्वयोर्हि मन्त्रयोरुपमया लिङ्गतो विवाहप्रतिषेधो दर्शितः
15 एतस्मिंस्तु वाक्ये साक्षादेव प्रतिषेधः आहत्य विधानेनैव नाभ्रातृकामुपयच्छेतेति । अत इदमुक्तम्-उपयमनप्रतिषेधः प्रत्यक्षः-इति । आह-किमुपयमनप्रतिषेध एव ।

---

1. *b₁.* reads इय for इमं and अभिमन्त्रयति for °मन्त्रयते of *a. b. d. m.* and omits हि after वरुणस्य read by *a. b. d. m.* 2. *b₁.* omits हे before वरुण and reads हिरण्यवर्णं for हिरण्यरूपं हिरण्यसदृशवर्णम् 3. *a. b. d. m.* व्युच्छेदकाले for व्युच्छेदनकाले of *b₁* 4. *a. b. d. m.* omit गर्तं in both places and read अयोमय स्थूण for अयोमयस्थूण, *m.* ममैव रथ for ममाप्येव रथ. 5. *b₁.* तत्स्वरूपमेव for तत्सरूपमेव of *a. b. d. m.*; *a. b. d. m.* तत पत्र for अत एन of *b₁.* 6. *b₁.* अमित्रपक्ष for अमित्रपक्षं 9. *a. b. d.* ऋग्वाक्यस्यास्यैकता, *b₁.* ऋग्वाक्यस्याप्येकवाक्यता, *m.* ऋग्वाक्यस्यास्यैकवाक्यता, *a. b. d. m.* अनवच्छिन्ना for न विच्छिन्ना of *b₁.* 10. *a. b. d. m.* add उपमा after ता. 12. *b₁.* नाभ्रातृकां for नाभ्रात्रीं, *m.* omits इति. 16. *a. b. d. m.* एतत् for इद

---

16. The word प्रत्यक्ष would show that the text is from some Brāhmana. *Cf.*

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥

— Manu III. 11.

नेत्युच्यते-पितुश्च पुत्रभावः प्रत्यक्षः श्रूयते। कथम्। तोकं ह्यस्य तद् भवति-
इति। तोकमित्यपत्यनाम। यदप्यस्यमभ्रातृकायास्तत् पितुर्भवति नेतरस्य योऽतुरित्येव-
मितरस्य विवादप्रतिषेध एव नेत्युच्यते पुत्रभावादितरस्य च पुत्रिकापितुरपत्यप्राप्तिरिति।
तस्मादुपपन्नं भवति-यथाभ्रातृमती नैव पैतृकं धनमर्हति नेतरेति ॥

अधुना योऽसौ शासद्वह्निरित्यस्या ऋचः उत्तरोऽर्धर्च उत्कृष्टः ॥ एषाभ्रातृकावाद- 5
पक्षेणैव निरुच्यते। पूर्वोऽपि च शासद्वह्निरित्ययमभ्रातृमतीवादपक्षेणैव योजयितव्यः।
एष एव हि स्थितः पक्षः। तस्या एव ह्यभ्रातृमत्या यः पुत्रो भवति तमेव पुत्रिका-
विधानेन कृताभिसंधित्वात् पौत्रो ममायमिति अपुत्रः सन् मातामह उपगच्छति
नेतरान् भ्रातृमतीपुत्रान् अन्यथा सर्व एव हि दौहित्रपुत्राः स्युः ततो विवाद-
परिभ्रमो व्यर्थ एव स्यात्। अथवा सर्व एव लोको द्व्यामुष्यायण एव स्यात्। 10
किं च पुत्रिकापितुरपि या भार्या साप्यस्य दुहितेति तस्यामपि या जायते
[illegible] मातामहस्यैव नेतरस्य पुत्रिकापितुः स्यात्। अनिष्टं चैतत् सर्वेषाम्।
तस्माद् येनाभिसंधिपूर्वकं धर्मेण पुत्रिका क्रियते तस्या एव पुत्रो मातामहस्य भवति
न सर्वस्या इति नैव च दायादार्हो नेतरा भ्रातृमती। अत इदमुच्यते-'**पिता यत्र
दुहितुः**' इति **पिता यत्र** यस्मिन् काले **दुहितुरप्रदत्तायाः** प्राक् 15
प्रदानादित्यर्थः। **रेतःसेकं**-रेतसः सेक्तारं यो दुहितरि रेतः सिञ्चति तं जामातरं
**प्रार्जयति**-प्रगमयति प्रकल्पयति उपावर्तयतीत्यर्थः तदा तस्मै तां दुहितरं ददत्
किं करोति। '**संशग्म्येन मनसा दधन्वे**' **संदधाति** अभिसंदधाति आत्मानं
यदस्यामपत्यमुत्पत्स्यते तन्ममेति। कथं पुनरभिसंदधात्यात्मानमिति '**संशग्म्येन**

---

1. a. b. d. read प्रत्यक्ष for प्रत्यक्षः. 2. a. b. d. m. omit इति; bi. omits यत् before पितु°. 3. a. b. d. °पत्यप्राप्तिरिति 4. d. नैवभ्रातृमती। 5. a. b. d. m. उत्कृष्टः for उत्कृष्टः. 9. a. b. d. m. add हि after अन्यथा and omit it after सर्व एव. 10. a. b. d. omit एव 11. a. b. d. m. omit या and read साप्यस्य for साप्यस्य; a. b. omit या before जायते and m. सापि for सा after it. 12. a. b. read पितामहस्य for मातामहे°. 14. a. b. d. m. नैव च दायादार्हो नेतरा भ्रातृमत्य; bi. नैव च दायादार्हो भ्रातृमती We read with bi. 15. a. b. d. m. अप्रदत्ता for अप्रदत्तायाः. 17. bi. उपावर्तयति for उपावर्तयति. 18. a. b. d. m. add इति after करोति 19. d. m. शग्म्येन for संशग्म्येन

---

5. उत्कृष्टः, i. e., in the explanation of the last section.

**मनसा**'-संगमेन मनसा-विगतापुत्रत्वसंतापेन चेतसा नाहमपुत्रः इयमेव पुत्रिका मम पुत्रो यो ह्यस्यामुत्पद्यते स पौत्रो मम भविष्यति इत्येवं सुखेन मनसा संदधात्यात्मानं तस्यां पुत्रिकायाम् । तत्रैवं सति यस्तस्यामेव कृतपुत्रिकाधर्मिण्यामुत्पद्यते दौहित्रस्तमेव नप्ता ममायमित्येवमुपगच्छति मातामहो न सर्वानेव दौहित्रान् भ्रातृमत्या
5 अपि । स तस्या एव पुत्रो मातामहस्य भवति न सर्वस्या इति सैव च दायादहीं नेतरा । स एव च मुख्यया वृत्त्या मातामहस्य पौत्रो भवति नेतरे भ्रातृमतीपुत्राः । ते हि गौण्या वृत्त्या जनयितुः पितुः पुत्राः सन्तो मातामहस्य पौत्रा इत्युच्यन्ते कदाचिल्लोके शास्त्रे वा ।

तत्रैवं सति '**अङ्गादङ्गात् संभवसि**' '**आत्मा वै पुत्रनामासि**' इत्ये-
10 वमादिषु गौणं दुहितुः पुत्रत्वमुच्यते । किञ्च यदि दुहिता पुत्रेण अविशिष्टैव स्यात्ततो दुहितेति विशेषसमाख्या नैव स्यादस्ति चेयं तस्माद्विशिष्टतरः पुत्रो दुहितुः सकाशादित्युपपद्यते ।

यदपि चोक्तम्—'**अविशेषेण पुत्राणां दायो भवति**' इति तदप्यभ्रातृमतीपक्षे द्रष्टव्यम् । अथवा वेदस्मृत्योर्विरोधे वेददृष्ट एव धर्मो ज्यायान् न स्मृतिदृष्टः । तस्मिंश्च
15 वेदे **अथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति धर्मविदः** येयमृग् वक्ष्यमाणा

"**न जामये तान्वे**"—

इति । अथशब्दो विशेषाधिकारार्थः । ज्येष्ठं पुत्रिकाया इत्येके इति । यदोत्कृष्टायां पुत्रिकापितुरन्ये पुत्रा जायेरंस्तदा विभागकाले ज्येष्ठं भागं पुत्रिकायै च दद्यु-

---

1. *m.* मनसाभिगतापुत्रत्व संतापेन । 2. *a. b. d. m.* उत्पत्स्यते for उत्पद्यते. 3. *m.* यस्यामेव for यस्तस्यामेव, *m b.* उत्पाद्यते for उत्पद्यते 4–6 *a b d. m.* read भ्रातृमत्या अपि संतानकाम् । स एव च मुख्यया वृत्त्या मातामहस्य पौत्रो भवति. This reading is probably simpler and better The reading of *bi.* is however retained as it makes sense. 11. यस्मात् for तस्मात्. 17. *a. b d. m* read after ज्येष्ठं पुत्रिकाया इत्येके as follows –ज्येष्ठमपत्यं यत्पुत्रिकायास्तदेव मातामहस्य नेतराणि जनयितुरेवेत्येवमेके मन्यन्ते अथवा ज्येष्ठं पुत्रिकाया इत्येके इति । यदोत्कृष्टाया etc.

---

6. भ्रातृमतीपुत्रा –*Cf.* Manu IX. 131. 'दौहित्र एव च हरेदपुत्रस्याखिलं धनम् ।'

14. न स्मृतिदृष्टः–This remark shows that *Durga* understands 'अविशेषेण' etc. as a verse from *Smṛti*. *Yāska* also seems to do the same as he calls it a *S'loka* as distinguished from *Ṛk*. The concensus of the Smṛtis is towards giving the right in the property of the maternal grand-father only when he is sonless. *Cf.* Manu IX. 131. *et seq*

धाभागमितरान् पुत्रान् विभजेत् अभागा एव स्त्रियो दुहितर इति । तदेतदनयर्चा निरुच्यते यथा दुहितॄणां भागो नास्तीति—

"न जा॒मये॒ तान्वो॑ रि॒क्थमा॑रैक् च॒कार॒ गर्भं॑ सनि॒तुर्नि॒धान॑म् ।
यदी॑ मा॒तरो॑ ज॒नय॑न्त॒ वह्नि॑म॒न्यः क॒र्ता सु॒कृतो॑र॒न्य ऋ॒न्धन् ॥"

न जामये भगिन्यै जामिरन्येऽस्यां जनयन्ति जामपत्यं जमतेर्वा 5
स्याद्गतिकर्मणो निर्गमनप्राया भवति । तान्व आत्मजः पुत्रो रिक्थं
प्रारिचत् प्रादाच्चकारैनां गर्भनिधानीं सनितुर्हस्तग्राहस्य । यदि ह
मातरोऽजनयन्त वह्निं पुत्रमवह्निं च स्त्रियमन्यतरः संतानकर्ता भवति
पुमान् दायादोऽन्यतरोऽर्धयित्वा जामिः प्रदीयते परस्मै ॥ ६ ॥

न जामये इति । न जामये–भगिन्यै तान्व–आत्मजः आत्मनो पित्रो 10
जातः स आत्मजः किं करोतीति रिक्थम् आरैक् । रिक्थं पैतृकं धनं न
प्रादात्–न प्रददौ । किं तर्हि तस्याः करोतीति । उच्यते—च॒का॒र॒ गर्भं सनितुर्नि॒-
धानम् । सनितुः–हस्तग्राहस्य भगिनीभर्तुः प्रसवसमर्थां करोति–पुष्णातीत्यर्थः ।
किंच यदिह मातरः यत् पुत्रद्वयं मातरो जनयन्ति वह्निं च वोढारं पुत्रम् अवह्निं
च अवोढ्रीं स्त्रियम् तयोर्द्वयोरपि वोढ्रवोढ्रोः पुत्रयोः अन्यतरः–एकतरः कर्ता– 15

2. *m.* adds भ्रातृमतीनां before दुहितॄणाम् 5. A. जनयत्यपत्यमपत्यं 7. B. C. D. E. read यदि ह for यदी मा॰ of Ei 9. A. Ei. conclude III. i. 6. after परस्मै. 10. *d. m.* omit न जामये इति ; *a. b. d.* add स again after आत्मजः. 11. *d.* रिक्थं for पैतृकं ; *m* omits न after धनं 12. *a. b. d. m.* add इति after प्रददौ 13. *d.* प्रसवसमर्थां करोतीत्यर्थः 14. *bi* reads यदी for यदिह of *a. b. d* ; *m.* adds इह after पुत्रद्वयं and *a. b. d. m.* यथा before वोढारं. 15. *a. b. d. m.* वोढ्रवोढ्रोः ; *bi.* वोढ्रवोढ्र्यो

1. विभजेत् *Cf.* Manu IX. 134.

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते ।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥

4. The quot. is RS. III. 31. 2.

**संतानकर्ता भवति** । कतमः यः **पुमान्** । स एव **दायादः**–दायार्हः नेतरः कन्याख्यः । किंच तयोरुभयोरपि **सुकृतोः**–सुकृतयोः सुतरामेकेनापि प्रयत्नेन कृतयोरुत्पादितयोरन्य **ऋन्धन्**–अन्यतरोऽर्द्धयित्वा सुकृतोऽपि सन् **जामिः**–जाम्याख्यो भगिन्याख्यः **प्रदीयते परस्मै** न कस्याचिदप्यवस्थायामसावात्मीयो भवतीत्यभिप्रायः । एवमस्यामृचि न **जामये तान्वो रिक्थमारैक्** इति न दुहितरो रिक्थभागिन्यो भवन्ति नैताः संतानकर्मणि पितुरुपतिष्ठन्ते वर्धयित्वा ह्येताः परस्मै दीयन्ते तस्मादभागा एता इति ।

यत् पुनरुक्तं पुंसोऽपि दानातिसर्गविक्रया विद्यन्त इति तद् कदाचित् केनचिन्निमित्तेन भवति स्त्री तु निसर्गेणैव दीयते विक्रीयते विसृज्यते वा सा हि परार्थमेवो-
10 त्पद्यते तस्मादभागा इति ॥ ६ ॥

**मनुष्यनामान्युत्तराणि पञ्चविंशतिर्मनुष्याः कस्मान्मत्वा कर्माणि सीव्यन्ति मनस्यमानेन सृष्टा मनस्यतिः पुनर्मनस्वीभावे मनोरपत्यं मनुषो वा । तत्र पञ्चजना इत्येतस्य निगमा भवन्ति ॥ ७ ॥**

प्रसक्तानुप्रसक्तमुक्तम् तद्यथा जनयितुः प्रजाः इत्येवमादि प्रकृतमिदानीमुच्यते–

15 **मनुष्यनामान्युत्तराणि पञ्चविंशतिः** । मनुष्याणां नामानि मनुष्यनामानि । उत्तराणि प्रकृतेभ्योऽपत्यनामभ्यः । अपत्यान्येव हि विवृद्धानि सन्ति मनुष्या इत्युच्यन्ते । कियन्ति पुनस्तानि । पञ्चविंशतिः । पञ्च च विंशतिश्च पञ्चविंशतिः । कतमानि पुनस्तानि । " मनुष्याः नरः "—इत्येवमादीनि ।

---

1. *a b d. m* omit संतानकर्ता and add संतानकर्मणः after भवति ; *a. b. d. m.* add च after स एव 2. *m.* adds च after सुकृतो . *a b. d.* omit सुकृतोः. 3 *m.* reads ऋन्धत् for ऋन्धन् ; *a. b d m.* add सुपुष्टोऽपि after सुकृतोऽपि and omit जामिः 8 *a. b d* ■ add पुनः after यत्पुन 9. *bi* निसर्गेणैव for निसर्गेणैव , ■ omits विक्रीयते and *a. b. d* read अतिसृज्यते for विसृज्यते ; *m.* परमार्थं for परार्थं ? 10 *a. b d m.* तस्मादसममिति. 13. A. B1. conclude III. ii 1. after भवन्ति 14. *a b d. m.* add इद after °प्रसक्त- 18. *d* ■ after इत्येवमादीनि add:–नृत्यन्ति कर्मसु नरा इत्येवमादि ।

---

18. For मनुष्याः नरः etc. *vide* Nigh II. 3.

आह-मनुष्याः कस्मात् । उच्यते-मत्वा-ज्ञात्वा तत एते कर्माणि सीव्यन्ति-तक्षन्तीत्यर्थः । अथवा मनस्यमानेन प्रजापतिना सृष्टाः । मनस्यतिः पुनः अयं धातुः मनस्वीभावे । मनस्वीभावो नाम प्रहृष्टता । प्रहृष्यता प्रजापतिनैते सृष्टाः । अथवा मनोरपत्यं मनुष्याः मनुषो वापत्यं मनुष्याः ।

तत्र पञ्चजना इत्येतस्य निगमा भवन्ति संदिग्धाः । तत्रेयमृगुदाहरणम् । 5 तद्यथा-॥ ७ ॥

"तद॒द्य वा॒चः प्र॑थ॒मं म॑सीय॒ येना॒सुराँ॑ अ॒भि दे॒वा असा॑म ।
ऊर्जा॑द उ॒त य॑ज्ञियासः॒ पञ्च॑ जना॒ मम॑ हो॒त्रं जु॑षध्वम् ॥"

तदद्य वाचः परमं मंसीय येनासुरानभिभवेम देवाः । असुरा असुरता स्थानेष्वस्ता स्थानेभ्य इति वा । अपि वासुरिति प्राणना- 10 मास्तः शरीरे भवति तेन तद्वन्तः । सोदेवानसृजत तत् सुराणां सुरत्वमसोरसुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते । ऊर्जाद उत यज्ञियासः । अन्नादाश्च यज्ञियाश्च । ऊर्गित्यन्ननामोर्जयतीति सतः पक्वं सुप्रवृक्णमिति वा । पञ्चजना मम होत्रं जुषध्वम् । गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके । चत्वारो वर्णा निषादः पञ्चम इत्यौपम- 15 न्यवः । निषादः कस्मान्निषदनो भवति निषण्णमस्मिन् पापकमिति नैरुक्ताः ।

---

2. *a. b. d.* read मतक्षाणि, *m.* सीतन्वन्ति, *b₁.* तक्षन्ति. 3. *b₁.* प्रहृष्टेन प्रहृष्यता &c., *a. b. d.* प्रहृष्टता । हृष्यता &c., *m.* प्रहृष्टता । प्रहृष्यता &c. 4. *a. b. d. m.* मनुषो वापत्य मनुष्या. । *b₁.* मनुषो वा ।. 6. *m.* omits तद्यथा. 9. C. D. read प्रथमं for परमं 16. B. C. R. add निषदनो भवति after निषादः कस्मात्, *bi* omits it.

---

8. For the quot. *vide* RS X. 53. 4.

12. विज्ञायते ।

यतपाञ्चजन्यया वि स एव दायादः–दायार्हः
–सुकृतयोः सुतरामेकेनापि प्रयत्नेन
पञ्चजनीनया विशा । पञ्च पृक्ता यित्वा सुकृतोपि सन् जामिः–
बाहुनामान्युत्तराणि द्वादश । बाहू कस्मा।त्स्वाचिदप्यत्रस्थायामसावात्मीयो
स्पर्क्ष इति न दुहितरे
अङ्गुलिनामान्युत्तराणि द्वाविंशतिः । अङ्गुलयो त्वा येता: परस्मै
भवन्तीति वाग्रमालिन्यो भवन्तीति वाग्रकारिण्यो
सारिण्यो भवन्तीति वाङ्कना भवन्तीति वाञ्चना भ केनचिदि-
वाभ्यञ्जनादेव स्युः । तासामेषा भवति ॥ ८ ॥ पदार्थमेवो-

तदद्य वाच०–[1]जुषध्वम् सौचीकस्याग्नेरार्षम् । तस्य विश्वैर्देवैः स
तस्येयं होतृत्वे विनियुक्ता । तद्द्य वीर्यं वाचः परममुत्कृष्टमद्यमय मंसीय प्रीणि
10 जाने इत्यर्थः । तेन वीर्येण त्वामिनि । येन असुराननभिभवेम वयम् । ऊर्जा
अन्नमदयितारः । अपिच हे यज्ञियासः यज्ञसंपादिनो देवा यूयम् । अपि
हे पञ्चजनाः मनुष्या निषादपञ्चमा वर्णाः मम इदं होत्रं जुषध्वम्–अनुगृह्णीध्वम्
इति समस्तार्थः ।

अथैकपदनिरुक्तम् । असुरा असुरता स्थानेषु ते हि न सु रताः स्थानेषु
15 चपला इत्यर्थः । अथ वा अस्ताः स्थलेभ्यः इति प्रच्यविता देवैरित्यर्थः ।

---

5 B. after अग्रकारिण्यो भवन्तीति वा adds–अग्रसारिण्यो भवन्तीति वाग्रसादिन्यो भवन्तीति वाग्रमालिन्यो भवन्तीति वा. C D R. add अग्रसारिण्यो भवन्तीति वा only. 6–7. B1 ( variants ) gives अञ्जना for अञ्चना, and अभ्यञ्जना for अभ्यञ्चना°. Our mss almost all show to be conscious of this reading as A. reads अभ्यञ्जना°, B does so but marginally corrects by अभ्यञ्चना, C reads as our text but notes अभ्यञ्जना in the margin It would appear that the weight of tradition favours reading अञ्जना and अभ्यञ्जना respectively. 7. A B1 conclude III ii 2. after भवति 8. d. reads the Pratiks as तदद्य वाच प्रथम मसीयेति ; m b. d omit अद्य 9 m reads उत्कृष्ट महदद्य 10 a, b, d. m. read येन for तेन. n b d m. after वयम् add [ m हे ] देवा ; m. ऊर्जादा 12 a b d m. after जुषध्वम् add आमेवध्वम्, b1 omits it, l1 reads अनुगृह्णीध्वम् for अनुगृह्णीध्वम्. 15 a. d. m omit इति after स्थानेभ्य°.

---

1 For the quot. vide RS VIII. 63 7, and see the commentary there-on.

**अपि वा असुरिति प्राणनाम** । स हि **अस्तः**—क्षिप्त इव **शरीरे भवति** तस्य हि तत्र नित्यमवस्थानमित्यभिप्रायः । **तेन हि तद्वन्तः** भवन्ति । रो मत्वर्थे । अथवा इदमन्यद् ब्राह्मणोक्तं निर्वचनं स्यात् **सोदेवानसृजत** सुरिति प्रशस्तनाम । प्रशस्तात्मनः प्रदेशात्प्रजापतिः सुरानसृजदूर्ध्वेभ्यः प्राणेभ्यः । तदुक्तम्—

'ऊर्ध्वमुदतृणत् पूर्वपक्षः पञ्चदशः तेन सोदेवानसृजत तत् सुराणां सुरत्वम् ।'— 5

इति विज्ञायते । एवमेव प्रातिलोम्येन **असोरसुरानसृजत** । असुरिति प्रशस्तप्रतिषेधः । अप्रशस्तादात्मनः प्रदेशात्प्रजापतिरसुरानसृजत । तदुक्तम्—

'अर्वाङ् वा तिरदपरपक्षः तेन असुरानसृजत'—

इति । **ऊर्जाद उत यज्ञियासः**—अन्नादाश्च यज्ञियाश्च । **ऊर्गित्यन्ननाम** तद्धि **ऊर्जपति**-बलिष्ठं करोतीत्यर्थः । **अथ वा पक्वमनन् सुप्रवृक्णं** भवति । 10
इति ककाररेफसामान्यात् पचेर्वधनेर्वा स्यात् । द्वयोरपि वा । तद्धि पक्वं सन्मृदुत्वात्सुच्छेद्यं भवति ।

**पञ्चजना मम होत्रं जुषध्वम्** । एतदत्र सन्देहपदमेकमुद्धृत्य प्रदर्शितम् । **गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके** मन्यन्ते । **चत्वारो वर्णाः निषादः पञ्चमः—इत्यौपमन्यवः** । निषद्य हन्तीति निषादः प्राणिवधजीवनः । 15

---

1 *b.* reads क्षिप्र for क्षिप्त  5 *a d. m.* omit सो before देवान.  8 *a. d m.* read अवाङ् for अर्वाङ् of *b.*  10 *a* reads ऊर्जानि for ऊर्जपति; *a. d* सुप्रवृक्त for सुप्रवृक्ण  15. *a d m* add निषद्य again after निषद्य, *d* प्राणिगवजीवन ।

---

9 यज्ञियाश्च—Our ms. *b.* ends with यज्ञियाश्च here. It appears to be independent of *a.* in the 1*st* and the 2*nd* adhyāyas, but the portion of the third it possesses looks like a later copy of *a*, as here it shows no differences of reading, though in the previous portion it has shown many variants from *a*.

14. मन्यन्ते—*cf.* Ait. Br. III. 3. 7. "पाञ्चजन्यं वा एतदुक्थं यद्वैश्वदेवं । सर्वेषां वा एतत्पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां चैतेषां वा एतत्पञ्चजनानामुक्थं सर्व एनं पञ्चजना विदुः."

15. प्राणिवधजीवन—*cf.* Manu X. 48.

अथवा निषण्णमस्मिन् पापकमिति निषादः ॥ सौधन्वन इत्येके मन्यन्ते । स च रथकारः । तस्य भिन्नकालमाधानं श्रूयते—

"वर्षासु रथकारः" ।

"ऋभूणां त्वा इति रथकारस्य ।"

5 इति च मन्त्रभेदः—

"सौधन्वना ऋभवः ।"

इति च मन्त्रलिङ्गात् ।

यथा ॥ पञ्चजनशब्देन मनुष्या एव निषादपञ्चमा वर्णा उच्यन्ते तथैव निगमः—

"यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत ।

10 अस्तृणाद्बर्हणा विपो३र्यो मानस्य स क्षयः ॥"

---

1 b. सौधन्वना for सौधन्वनः of a. d. m. 2. j. adds after रथकारः ॥ ऋक् namely रथं ये चक्रुः etc. See foot-note below. a. d add हि after तस्य 8. a. d. तथैव निगम, m. तथैव निगमः, b. यथैव निगम

---

1. सौधन्वनः–The passage beginning from सौधन्वनः to the end of the para appears to be quite out of its place. The only possible defence of its occurrence here is that it may be an additional explanation of पञ्चजनाः attempted by *Durga*; this would make the plu. सौधन्वनाः preferable but we have given the singular here as it is supported by our mss. and besides is consistent with स च रथकारः following immediately. *cf.* Nir. XI. 16. "ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः" &c. It would appear that these three produced the horses, the chariot, and the cow for इन्द्र, अश्विनौ, and बृहस्पति. *Vide* RS. I. 161. 6, and hence got the honour of participating in the soma sacrifice.

2 रथकारः ॥ *j.* here adds, and *b.* gives in a foot-note the following text –

रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया ।
ताँ ऊ न्व१स्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि ॥

RS IV. 36. 2

There are other verses and hymns also speaking of this feat of the Ribhus or perhaps of Ribhu the eldest of the three brothers e. g. RS. I. 111.

5. इति च मन्त्रभेदः –The quot. is not traced.

7. The quot. is RS. I. 110. 4. *Vide* Nir. XI. 16.

10 The quot. is RS VIII. 63. 7.

इति । अगायेन इन्द्र । इयमनुष्टुप् । ऐन्द्री । वृत्रस्य पञ्चमेऽहनि मरुत्वतीयशस्त्रस्य प्रतिपदेषा । यत्-यदा पञ्चजनीनया विशा-पञ्चजनसमुदायलक्षणया सहितैः स्तोतृभिः ऋत्विग्भिः अवर्षति इन्द्रे वर्षार्थिभिः घोषाः-स्तुतीः असृक्षत-असृज्यन्त । निदाघसमये वर्षो आर्ताः सन्तो वर्षाभावे अस्तुवतैवेन्द्रम्-वर्ष भगवन् ! -इत्येवमर्थयन्तः । अत इदमुक्तम्-यदा पाञ्चजन्यया विशा सह 5 घोषा ऋत्विग्भिः असृज्यन्तेति । तदा किमिति । तदोच्यते ॥ इन्द्रस्ताभिः प्रह्लादितचेता अस्तृणात्-अहन् वर्षार्थं मेघान् । बर्हणा-परिवृद्धेन वज्रेण परिवृद्धानि वा मेघजालानि विपः-विपाटयिता मेघानां मेधावी वा अर्यः- ईश्वरः कृत्स्नस्य जगतः । कस्मात् पुनरस्तृणात् । यस्मात् मानस्य स क्षयः मानस्य दर्पस्य बलस्य वीर्यस्य स क्षयः निवासः तस्मात् अस्तृणात् । अर्वाचो हि स्तूयमानः किं कुर्यात् परितुष्टोऽपि । 10 अथवा मानस्य सत्कारस्य पूजायाः स इन्द्रः क्षयो निवासो भाजनमिति मन्वानैः स्तोतृभिः वर्षार्थिभिः सत्कृतस्तान् वर्षप्रदानेन प्रतिसत्कारयिष्यन्नस्तृणात् मेघान् । अपि वा अस्य जगन्निर्माणस्य देवादेः स्थावरान्तस्य स इन्द्रः क्षयो निवास आश्रयो यस्मात् ततो मेघानस्तृणात् । अनावृष्टिद्वारेणास्य जगतो विनाशो मा भूत् कथमपीत्यभिप्रायः । 15

पञ्च इत्येका संख्या । सा हि स्त्रीपुंनपुंसकेष्वविशिष्टा एव भवति । तद्यथा-पञ्च स्त्रियः पञ्च पुरुषाः पञ्च कुलानि इति । एवं पञ्चशब्दे स्त्रीपुंनपुंसकेषु विशेषो नास्ति ।

बाहुनामान्युत्तराणि द्वादश । बाहोर्नामानि बाहुनामानि । उत्तराणि पठितेभ्यो मनुष्यनामभ्यः । मनुष्याणामेव हि बाहवो भवन्तीति मनुष्यनामभ्य उत्तराणि 20 बाहुनामानि । कियन्ति पुनस्तानि । द्वादश-द्वौ च दश च द्वादश । कतमानि पुनस्तानि । "आयती च्यवाना अभीशू"-इत्येवमादीनि । आभिमुख्यीभवतः कर्मभेद-

1. a. d. m. पृष्ठ्यस्य; bi. पृष्ठस्य. 2. a. d. m. omit यत् before यदा. 7. a. d. m. वरेन; bi. वज्रेण for वधेण. 8. a विपाटयिता य मेघानां, d m. विपाटयिता मेघानां, bi. विपाट यिता मेघानां. 9. a. d. वीर्यस्य बलस्य 10 a. d. परितुष्टोऽपि किं कुर्यात् 11. m. मन्वा नै. for मन्वानैः. 15. a. d. °भिप्रायेण, m. bi. °भिप्रायः. 20. a. d. m. read बाहवो after हि as above, bi. omits it. 21. a. d. m. द्वौ; bi. द्वे; a. d. कानि.

22 For आयती च्यवाना vide N II. 1.

ताविति आयती । च्यावयितारौ कर्मणा च्यवाना । अभीद्ध् अभ्यश्नुवाते कर्माणि । इत्येवमादि योज्यम् ।

आह–**बाहू कस्मात्** । उच्यते **प्रबाधत आभ्यां कर्माणि**–प्रकर्षेण बाधते प्रक्षपयत्याभ्यां कर्माणि ॥

5 **अङ्गुलिनामान्युत्तराणि द्वाविंशतिः** । अङ्गुलीनां नामानि अङ्गुलिनामानि । उत्तराणि प्रकृतेभ्यो बाहुनामभ्यः । बाह्वोरेव ह्यङ्गुलयो भवन्तीति बाहुनामभ्य उत्तराणि अङ्गुलिनामानि । कियन्ति पुनस्तानि । द्वाविंशतिः–द्वे च विंशतिश्च द्वाविंशतिः । कतमानि पुनस्तानि । "अग्रुवः अण्व्यः क्षिपः"–इत्येवमादीनि । बाह्वग्रे अवस्थिता अवन्त्येताः कर्माणीति अग्रुवः । अण्व्यः परिमाणात् एताः । क्षिप्यते आभिः
10 क्षेप्तव्यं द्रव्यमिति क्षिपः । इत्येवमादि ।

आह **अङ्गुलयः कस्मात्** । उच्यते **अग्रगामिन्यो भवन्ति** अग्रे ह्येताः कर्मसु गच्छन्ति । अथ वा **अग्रगालिन्यो भवन्ति** अग्रे ह्येता गलन्ति उदकानि । **अग्रकारिण्यो वा भवन्ति** अग्रे ह्येताः कर्माणि कुर्वन्ति । **अङ्कना भवन्ति वा** तथाहि–यो ह्येताभिरभिहन्यतेऽसावङ्कित इव भवति । **अपि वा अभ्यञ्चनादेव**
15 **स्युः** एता हि त तमर्थमाभिमुख्येनाञ्चन्ति गच्छन्ति । ये तु अभ्यञ्जनाः इत्यभिधीयन्ते तेषामभ्यज्यत आभिरिति ॥

**तासाम्**–अङ्गुलीनाम् एषा–**निर्वाचिका ऋक् भवति**–

"**दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।**
**दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥**"

---

1-2, *d m.* कर्माणीत्येव योज्यम् । 3. *a. d.* omit कर्माणि, *a d. m.* प्रक्षपयति, *bl.* प्रक्षिपयति  8-9, *bi* अग्रुव.  9. *a. d. m* परिमाणत्.  14. *a. d m.* तथाहि, *d m* °रभिहन्यते and °भवति, *bi* °रभिहन्यन्ते and °भवन्ति  15 *a. d. m.* अभिधीयते for अभिधीयन्ते of *bi*.  16. *a. d.* add अङ्गुलय after आभिरिति ।

---

8. For अग्रुवः अण्व्यः etc. *vide* Nigh. II. 5.

19. For the quot. *vide* RS. X. 94. 7.

अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि । कक्ष्याः प्रकाशयन्ति कर्माणि । योक्त्राणि योजनानीति व्याख्यातम् । अभीशवोऽभ्यश्नुवते कर्माणि । दश धुरो दश युक्ता वहद्भ्यः । धूर्धूर्वतेर्वधकर्मण इयमपीतरा धूरेतस्मादेव विहन्ति वहं धारयतेर्वा ॥ कान्तिकर्माण उत्तरे धातवोऽष्टादश ॥ अन्ननामान्युत्तराण्यष्टाविंशतिः । अन्नं कस्मादानतं भूतेभ्योऽत्तेर्वा ॥ अत्तिकर्माण उत्तरे धातवो दश ॥ बलनामान्युत्तराण्यष्टाविंशतिः । बलं कस्माद्बलं भरं भवति बिभर्तेः ॥ धननामान्युत्तराण्यष्टाविंशतिरेव । धनं कस्माद्धिनोतीति सतः ॥ गोनामान्युत्तराणि नव ॥ क्रुध्यतिकर्माण उत्तरे धातवो दश ॥ क्रोधनामान्युत्तराण्येकादश ॥ गतिकर्माण उत्तरे धातवो द्वाविंशशतम् ॥ क्षिप्रनामान्युत्तराणि षड्विंशतिः । क्षिप्रं कस्मात् संक्षिप्तो विकर्षः ॥ अन्तिकनामान्युत्तराण्येकादश । अन्तिकं कस्मादानीतं भवति ॥ संग्रामनामान्युत्तराणि षट्चत्वारिंशत् । संग्रामः कस्मात् संगमनाद्वा संगरणाद्वा संगतौ ग्रामाविति वा । तत्र खल इत्येतस्य निगमा भवन्ति ॥ ९ ॥

दशावनिभ्य इति । अवनय इत्येवमादीनि नद्यादिनामभिः संदिह्यन्ते तदर्थमिदमुदाह्रियते । त्रिष्टुबेषा । अर्बुदस्य काद्रवेयस्य सर्पस्यार्षम् । ग्रावस्तुतौ विनियुक्ता । दशभिरवनिभिः ये उपचर्यन्ते ग्रावाणः सोमाभिषवकर्मणि प्रवृत्ते ते दशावनयः तेभ्यो दशावनिभ्यः हे ऋत्विजो यूयमपि अर्चत—स्तुतीः प्रोच्चारयतेत्यर्थः । एवमेव दशभिः कक्ष्याभिर्ये उपचर्यन्ते ते दशकक्ष्याः तेभ्यः दशकक्ष्येभ्यः अर्चत । दशभिर्योक्त्रैर्ये उपचर्यन्ते ते दशयोक्त्राः तेभ्यो दशयोक्त्रेभ्यः अर्चत । दशभिर्योजनैर्ये उपचर्यन्ते ते दशयोजनाः तेभ्यो दशयोजनेभ्यः अर्चत । दशभिरभीशुभिर्ये उपचर्यन्ते ते दशाभीशवः तेभ्यो दशाभीशुभ्यः अर्चत । अजरेभ्यः—

14. A. Bı. conclude III. 11. 3 after भवन्ति 15. a. d. m. संदिह्यन्ते, li. संदिश्यन्ते. 16. a. d. इयं for इद of bi. m. 18. a. d. m. अर्चत for अर्चध of li. 19. a. d. ये after उपचर्यन्ते. 21-22. a. m. दशभिरभी°...अर्चत; d. ये after उपचर्यन्ते.

अजरणधर्मेभ्यः । दश धुरः य एते ग्रावाणः तेभ्यः अर्चत । दशभिर्दशभिरङ्गुलीभिर्ये एते युक्ता वहन्ति ग्रावाणः तेभ्य एभ्यः दशां युक्ता वहद्भ्यः अर्चत इति समस्तार्थः ॥

अर्थकरदनिरुक्तम् । अवनयोऽङ्गुलयो भवन्ति ता हि अवन्ति कर्माणि 5 रक्षन्ति भक्षयन्ति वा क्षपयन्तीत्यर्थः । कक्ष्याः अप्यङ्गुलय एव ता हि प्रकाशयन्ति कर्माणि प्रकटीकुर्वन्तीत्यर्थः । योक्त्राणि इत्येतत्पदं योजनानि इति अनेन पदेन व्याख्यातम् । योजनानीत्येतत् निगदसिद्धमेव । अभीशवः अपि अङ्गुलय एव ता हि अभ्यश्नुवते कर्माणि व्याप्नुवन्तीत्यर्थः । अनेकैर्नामभिरङ्गुलय एवोक्ताः अनेकक्रियाशक्तियुक्तप्रदर्शनाय । एते ग्रावाण एवमनेकक्रियायोगिनीभिरङ्गुली-10 भिर्गृहीतास्तदर्थमर्चतेति । धूर्धूर्वतेः वधकर्मणः । "ध्वरति धूर्वति" इति वधकर्मसु पठितम् । इयमपीतरा धूः अनडुहादिसम्बन्धिनी एतस्मादेव धातोः वधकर्मणः । सापि विहन्ति वहम् अनडुहोऽश्वस्य वा । धारयतेर्वा सा हि धारयत्यश्वमनड्वाहं वा ॥

कान्तिकर्माण उत्तरे धातवोऽष्टादश । स खल्वयं पुरुषो व्याख्यानः सबाहु-15 ल्यः तं खलु काम एव प्रथममभिनिविशति उत्तरे कान्त्यर्था इत्यर्थः । यदपि प्रकान्तं भवति तदप्यङ्गुलीभिरेव कान्तं क्रियत इत्यतोऽङ्गुलिनामभ्यः उत्तरे कान्तिकर्माणः समाम्नाताः । कियन्तः पुनस्त इति । अष्टादश अष्टौ च दश च अष्टादश कतमे पुनस्त इति । "वष्टि उश्मसि अवेति"—इत्येवमादयः ॥

अन्ननामान्युत्तराणि अष्टाविंशतिः । अन्नस्य नामानि अन्ननामानि । उत्त-20 राणि अङ्गुलिभ्यः कान्तिकर्मभ्यः । अन्नमेव हि कान्तं सर्वभावेभ्यो भवतीति कान्ति-

---

1. *m.* adds marginally जरावर्जितान् after अजरणधर्मभ्य. 5. *a. d. m.* read क्षपयन्ति for क्षिपयन्ति of *b₁*, *b₁ m.* omit अपि after कक्ष्या. 7–8. *a. d.* omit अपि अङ्गुलय एव after अभीशव 11. *a d.* read पठित for पठितम्; *d* अनडुहादिसम्बन्धिनी. 13. *b₁. m.* च for वा 14. *b₁.* omits स before खल्वयं, *a d. m* read सपाद for सबाहु- 17. *a. d.* omit कियन्त पुनस्त इति। अष्टादश । and अष्टादश after दश च. 18. *b₁.* ताः for ते

---

11. पठितम्-*vide* Nigh. II. 19.

18. For वष्टि etc. *vide* Nigh. II. 6.

कर्मभ्य उत्तराणि अन्ननामानि । कियन्ति पुनस्तानि । अष्टाविंशतिः अष्टौ च विंशतिश्च अष्टाविंशतिः कतमानि पुनस्तानि । "अन्धः वाजः पाजः पयः पृक्षः"–इत्येवमादीनि । अन्धः इत्ययं निर्वक्ष्यति । वाजयितव्यं पूजयितव्यमेतद् भोजनायोपस्थितं भवतीति वाजः । पीयत इति पाजः । पयः पानादेव ।

आह–अन्नं कस्मात्। उच्यते–आ–आभिमुख्येन ह्येतत् नतं प्रह्वीभूतं भवति 5 भोजनाय भूतानाम् अत्तेर्वा

"अद्यते अत्ति च भूतानि तस्मादन्नं तदुच्यते"

इत्युक्तम् ॥

अत्तिकर्माण उत्तरे धातवो दश । अन्नमेव ह्यद्यत इत्यन्ननामभ्य उत्तरेऽत्तिकर्माणः समाम्नाताः । कियन्तस्त इति । दश । कतमे पुनस्ते । "आवयति भर्वति 10 बभस्ति"–इत्येवमादयः ॥

बलनामान्युत्तराण्यष्टाविंशतिः । बलस्य नामानि बलनामानि । उत्तराणि प्रकृतेभ्योऽत्तिकर्मभ्यः । य एव ह्यदन्ति त एव बलवन्तो भवन्तीत्यत्तिकर्मभ्य उत्तराणि बलनामानि समाम्नातानि । कियन्ति पुनस्तानि । अष्टाविंशतिः–अष्टौ च विंशतिश्च अष्टाविंशतिः । कतमानि पुनस्तानि । "ओजः पाजः शवः"–इत्येवमादीनि । ओजः 15 ओजतेर्वोब्जतेर्वा । इत्येवमादि ।

आह बलं कस्मात् । उच्यते–तद्धि भरं भवति भ्रियते हि सः यो बलिष्ठो भवति । विभर्तेः वा । स ह्यन्येषां भर्ता भवति ॥

---

2. *a. d.* omit अष्टाविंशति ; *bi.* प्रय for पयः. 4. *m* omits पाजः. *bi.* प्रयः for पय. 5. *a d m.* omit आ. 8. *a d* add हि after इति. 10. *a. d* omit कियन्तस्ते इति दश. 11. *d.* बिभस्ति for बभस्ति. 13. *a. d.* omit अष्टाविंशति. after विंशतिश्च. 16. *a* ओजतेर्वाब्जतेर्वा. 17. *bi.* भवलिष्ठो for बलिष्ठो. 18. *a. d m.* स ह्यन्येषां भर्ता भवति । *bi.* स पति

---

2. For अन्धः etc. *vide* Nigh. II. 7. where however we have पयः in the place of प्रय here as read by *bi.*

3. निर्वक्ष्यति *i. e.* in Nir. V. 1.

7. The quot. is not traced.

10. For आवयति etc. *vide* Nigh. II. 8.

15. For ओजः etc. *vide* Nigh. II. 9.

**धननामान्युत्तराण्यष्टाविंशतिरेव ।** य एव बलवन्तो भवन्ति त एव धन प्राप्नुवन्ति इति बलनामभ्यः उत्तराणि धननामानि । कियन्ति पुनस्तानि । अष्टाविंश-तिरेव । बलनामान्युत्तराण्यष्टाविंशतिः इमान्यप्यष्टाविंशतिरेवेत्येवशब्दः । कतमानि पुनस्तानि । "मघम् रेक्णः रिक्थम् वेदः"–इत्येवप्रभृतीनि । रिच्यत इति रेक्णः ।
5 अतिरिच्यमानमेतद्दिहैव तिष्ठति म्रियमाणस्येति रिक्थम् । विद्यते लभ्यते एतदिति वेदः । इत्येवमादीनि ।

**आह धनं कस्मात् ।** उच्यते **धिनोतीति सतः ।** सत इति कारकावधारणम् धिनोतिस्तर्पणार्थः ॥

**गोनामान्युत्तराणि नव ।** गवा नामानि गोनामानि । उत्तराणि प्रकृतेभ्यो
10 धननामभ्यः । गाव एव हि प्रकृष्टं धनमिति धननामभ्य उत्तराणि गोनामानि । कियन्ति पुनस्तानि । नव । कतमानि पुनस्तानि । "अघ्न्या उस्रा उस्रिया"–इत्येवमादीनि । अघ्न्या अहन्तव्या भवति इत्येवमादि निर्वचनम् । उक्तनिर्वचने हि गोशब्दः अतो गौः कस्मात् इति न ब्रवीति ॥

**क्रुध्यतिकर्माण उत्तरे धातवो दश ।** धनार्थमेव हि गवार्थं च क्रोधो
15 भवतीति गोनामभ्यः उत्तरे क्रुध्यर्थाः समाम्नाताः । कतमे पुनस्त इति । "रेळते हेळते"–इत्येवमादयः ॥

क्रुध्यर्थसंबन्धेनैव **क्रोधनामान्युत्तराणि ।** कियन्ति पुनस्तानि । **एकादश ।** कतमानि पुनस्तानि । "हेळः हरः हृणिः त्यजः" इत्येवमादीनि । हे अरे इत्यने-

---

1 m adds हि after य एव , a. अत एव for त एव. 2 d. omits इति before बलनामभ्य . 3 bi om. अपि after इमानि 5-6 bi एव for एतत् and a. d. इत्येवमादि. 7. a, d m add एव before सत and शब्दस्य कर्तरि कारके after it 9. a m bi om उत्तराणि. 10. m om गाव . 11. a d omit कियन्ति to नव 12 a. d. omit इति after भवति 16. a d. read हेळते ( d omits ) रेळते इत्येवमादयः for रेळते etc. 18. a d हेळ , bi. हेडः, d. हेल. for हर .

---

5. For मघ etc vide Nigh. II 10.
11. For अघ्न्या, उस्रा etc. vide Nigh. II 11.
12. For उक्तनिर्वचने vide Nir. I, 5.
15. क्रुध्यर्था – Is it क्रुध्यत्यर्था ?
16 For रेळते, हेळते etc. vide Nigh. II. 12.
18. For हेळ., हरः etc. vide Nigh. II. 13

नाविष्टे ब्रवीतीति हेळः । नीचैरनेन नरकं प्रति ह्रियते इति ह्वरः । नीचैरनेन ह्रियते नरकं प्रतीति हृणिः । त्यजत्यनेनाविष्टो धर्मं जहातीति त्यजः । इत्येवमादि ॥

**गतिकर्माण उत्तरे धातवो द्वाविंशशतम्** । क्रुद्धा एव सन्तः सुतरां गच्छन्तीति क्रोधनामभ्यः उत्तरे गतिकर्माणः समाम्नाताः ॥

**क्षिप्रनामान्युत्तराणि षड्विंशतिः** । गतिसंबन्धादेव क्षिप्रनामानि उत्तराणि 5 समाम्नातानि । कियन्ति पुनस्तानि । षड्विंशतिः-षट् च विंशतिश्च षड्विंशतिः । कतमानि पुनस्तानि । " नु मक्षु द्रवत् "-इत्येवमादीनि । नुन्न इव क्षिप्रं गच्छतीति नु । मां क्षिणोति ■ क्षिणोतीति सर्वे एव हि क्षिप्रगामिनं मन्यन्ते इति मक्षु । द्रवन् द्रवते । इत्येवमादि ।

आह **क्षिप्रं कस्मात्** । उच्यते विकर्षः विप्रगो विक्षिप्तोऽर्थः संक्षिप्तः सन् 10 क्षिप्रमुच्यते ॥

**अन्तिकनामान्युत्तराण्येकादश** । य एव हि क्षिप्रं गच्छति स एवाभिप्रेतार्थस्य अन्तिके समीपे भवतीति क्षिप्रनामभ्यः उत्तराणि अन्तिकनामानि । कियन्ति । एकादश । कतमानि पुनस्तानि । " तळित् आसात् "-इत्येवमादीनि । ताडतेऽस्मिन् प्रदेशेऽवस्थित इति तळित् इत्युच्यते । अन्तिकप्रदेशो य आसन्नः ■ आसात् । इत्ये- 15 वमादि योग्यम् ।

आह **अन्तिकं कस्मात्** । उच्यते तद्धि आनीतं भवति संनिकृष्टत्वात् ॥

**संग्रामनामान्युत्तराणि षट्चत्वारिंशत्** । संग्रामस्य नामानि संग्रामनामानि । उत्तराणि प्रकृतेभ्योऽन्तिकनामभ्यः । अन्तिकीभूतानामेव हि संग्रामो

---

1 *b.* भवति for ब्रवीति. *a d. m.* om. °णिः to ह्वर; *a. d m.* नीचैरनेन नरकं प्रति ह्रियते प्राणिन इति हृणि । 3. *a d m* द्वाविंश शतम्, *m.* adds after शतम्-वर्तते अदन इत्येवमाद्यः. 6. *d.* om. षड्विंशतिः after विंशतिश्च. 7. *a. d.* add हि after इव ; *a. d.* मन्यन्तेति ■-9. *a. d. m.* om. हि after एव, and add एव after द्रवतेः 10 *a d. m.* om. विकर्षः; *b.* om. सन् 12-13. *a, d.* अभिप्रेतस्यार्थस्य, *b.* भवन्तीति 13-14. *a. d. m.* om. कियन्ति । एकादश. 14. *d.* आसा 15. *b.* °देशोऽसन्न; *d.* आसा 18. *a d.* om. संग्रामनामानि.

---

3. द्वाविंशशतम्-*cf.* Nigh. II. 14.

7. For नु, मक्षु etc. *vide* Nigh. II. 15.

14. For तळित्, आसात् etc. *vide* Nigh. II. 16.

भवतीत्यन्तिकनामभ्य उत्तराणि संग्रामनामानि । कियन्ति पुनस्तानि । षट्चत्वारिंशत् षट् च चत्वारिंशच्च षट्चत्वारिंशत् । कतमानि पुनस्तानि । "रणः विवाक् नदनुः" इत्येवमादीनि । रणन्त्यस्मिन् शूरा इति रणः । विविधा शूराणामत्र वाग् भवतीति विवाक् । नदन्त्यस्मिन् शूरा इति नदनुः । इत्येवमादि योज्यम् ।

5 आह संग्रामः कस्मात् । उच्यते संगमनाद्वा संगच्छन्ते [illegible] परस्परेण तत्र योधाः । संगरणाद्वा संगृणन्ति संशब्दायन्ते शूरास्तत्र परस्परेण । संगतौ ग्रामाविति वा । ग्राम इति संघात इत्युच्यते । तौ हि परस्परविजिगीषया समागतौ तत्र भवतः ।

तत्र षट्चत्वारिंशत्के संग्रामनामगणे खले इत्येतस्य नाम्नः निगमाः संदिग्धाः 10 भवन्ति । इतरोपि धान्यखलः खल इत्युच्यते संग्रामोपि च । तत्रैवं सति अस्यामृचि वक्ष्यमाणायां खले न पर्षान् इति व्यपदेशाद् विभागो लक्ष्यते शस्यखल-संग्रामखलयोः—॥ १ ॥

"अभी३ दमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति ।
खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥"

15 अभिभवामीदमेकमेकोस्मि निःषहमाणः सपत्नानभिभवामि द्वौ किं मा त्रयः कुर्वन्ति । एक इता संख्या द्वौ इततरा संख्या त्रयस्[illegible] संख्या चत्वारश्चालिततमा संख्याष्टावश्चोतेर्नव न वननीया न[illegible] दश दस्ता दृष्टार्था वा विंशतिर्द्विर्दशतः शतं दशदशतः सहस्रं सह[illegible]

---

2. *b*, om षट् च चत्वारिंशच्च षट्चत्वारिंशत् ।; *a d.* नदनु, *m* नदन॰. 4. *a. d* नदन, *m*, नदन. 5. *bi* समगच्छन्ति. 6. *a. d* संशब्दयन्ति, *bi.* यत्र. 7. *m*, om इति after संघात, *bi* om तौ हि, and reads परस्पर जिगीषया 9. *a. d m* read षट्चत्वारिंशके. 10. *bi* om. खल after धान्यखल॰ and च after अपि. 11. *d.* संग्रामखल॰.

---

2. For रणः, विवाक् etc. *vide* Nigh II. 17. The text of निघण्टु adds विखाद before नदनु॰.

14. For the quot *vide* RS, X. 48, 7.

त्तं प्रयुतं ततदभ्यस्तमम्बुदो मेघो भवत्यरणमम्बु तद्दोम्बुदोम्बुमद्भातीति वा ... भवतीति वा स यथा महान् बहुर्भवति वर्षस्तदिवार्बुदम्। खले न पर्षान् प्रति हन्मि भूरि। खल इव पर्षान् प्रतिहन्मि भूरि खल इति संग्रामनाम खलतेर्वा स्खलतेर्वायमपीतरः खल एतस्मादेव समास्कन्नो भवति। किं मां निन्दन्ति शत्रवोऽनिन्द्राः। य5 इन्द्रं न विविदुरिन्द्रो ह्यहमस्म्यनिन्द्रा इतर इति वा॥

व्याप्तिकर्माण उत्तरे धातवो दश। तत्र द्वे नामनी आक्षाण आश्नुवान आपान आप्नुवानः॥

वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत्। तत्र वियात इत्येतद् वियातयत इति वा वियातयेति वा॥ 10

"आखण्डल प्रहूयसे"।

आखण्डयितः। खण्डं खण्डयतेः॥ तळिदित्यन्तिकवधयोः संसृष्टकर्म ताडयतीति सतः॥ १०॥

अभीदं दमेक०—०निन्द्राः। वैकुण्ठस्येन्द्रपुत्रस्येयमार्षम्। जगती। दशा... नवमेहनि निष्केवल्ये शस्यते। आध्यात्मिको मन्त्रः। इदं तावज्जगत् एकः15 सं... अभि अस्मि—अभिभवामि अभिभूय च भवामि। अस्य सर्वस्यात्मानि

—B. C. D. R. read अम्बुदो for अर्बुदो of Bi. 6. B. C ... विविदु°, ... 12. B. C. D. R as text; B. D. however खण्डः; Bi. only खण्ड खण्डयतेः. 13 B ताडयतीति, A. Bi conclude III. ii. 4. after सतः 15. a. ... m. अध्यात्मिको. 16. a. d. चर्ते after च

1. अम्बुदो.—We are reading अम्बुदो here in preference to अर्बुदो of Bi. and J., as the former is supported by tradition and is read by our mss. as also by R. It must be admitted however that the word अर्बुद, not अम्बुद is usually used in the table of numeration and the derivation next given by यास्क as अरणमम्बु suggests that the word derived is अर्बुद. This is neuter sing. and is derived from अम्बुद etc. as here.

14. वैकुण्ठस्य etc. The anukramani *loc. cit.* gives वैकुण्ठ as the name of इन्द्र and the meter of this verse to be त्रिष्टुप्.

इमेकोधिपतिरित्यभिप्रायः । कथं पुनरभिभवाम्यहमेतत् । **एकम् एकः निःषाट्-** निःषहमाणः **सपत्नान्**-शत्रून् निश्चयेनाधिकं वाभिभवामीत्यर्थः । सहतिरभि- भवार्थश्छन्दसि । कथं पुनरभिभवन् सपत्नानहमस्य जगत आधिपत्ये वर्ते । यावदेकं तावदागतं सन्तमेक एवाभिभवामि सपत्नम् । **अभी द्वा**-द्वौ अभ्यागतौ एक एव 5 **अभिभवामि । किम् उ त्रयः कुर्वन्ति**-त्रयोपि युगपदागताः सन्तः एका- किनोपि मम किं कुर्वन्ति । न किंचिदपीत्यभिप्रायः । किञ्च **खले न पर्षान्** गाह्यमाने हन्यमाने । गम्यमानोत्र एकः खलशब्दः उपमानम् उपमासंबन्धात् । यथा खले खलस्थाने कर्षणेन **पर्षान्**-बहूनपि संचितान्पूलानप्रतिबन्धेन क्षुन्दीरन् एवमहमपि भूयसोऽपि शत्रूनागतान् क्षणादेव तैरप्रतिबध्यमानः **हन्मि** । तमेवप्रभावं 10 सन्तं **मा किं निन्दन्ति शत्रवः** । नाहं निन्दार्हः स्तुत्योहमित्यभिप्रायः । अपि च **अनिन्द्राः** ये माम् इन्द्रं न विदुः याथात्म्यतः ते कथमविज्ञायैव मां निन्दन्ति । नैतद्याय्यमित्यभिप्रायः । **अनिन्द्रा इतर इति वा** अथवा अनिन्द्राः सन्तः आत्मना कथमिन्द्रं सन्त मां निन्दन्ति । न तु नामेन्द्रत्वेनैवाहमतिरिक्तस्तेभ्यः अथ कथमितरे मां निन्दन्त्यनिन्द्राः सन्तो न लज्जन्तीत्यभिप्रायः । इति समस्तार्थः ।

15 अथैकपदनिरुक्तम् । **एक इता संख्या** गता संख्यात्वं प्राप्तेत्यर्थः । इणादिकं वापीयं गता । **द्वौ द्रुततरा संख्या** एकस्याः सकाशात् । **त्रयस्तीर्णतमा संख्या** द्वयोः सकाशात् । प्रसक्तानुप्रसक्तमुच्यते **चत्वारश्चलिततमा संख्या** त्रिभ्यः

---

5 *a. d.* यत for यावत्. 4. *a. d. m.* सन्तौ after आगतौ 7. *a. d.* om. गाह्यमाने; *a. d.* om. हन्यमाने and read गम्यमानोत्र for गम्यमानेत्रैं of *b1*, and खलशब्द. उपमानसंबन्धात् etc. 8. *d* वर्षकेण, *m.* कर्षणेन for कृपवेण of *b1*, *a. d. m.* appear to read संचितान्पूलानप्रतिबन्धेन क्षुदेरन् *b1*. संचितान् अप्रतिबन्धेन क्षुनेरन 11. ) याथात्म्यतः 13. *b1.* omits मा निन्दन्ति, *a.* om निन्दति. 15 *b1* गता संख्या अर्थं प्राप्तेत्यर्थं. 16. *b1.* गन्ता; *a.* चापर, *d.* वापर for वापीय.

---

7 हन्यमाने –The passage here is much tampered with. The readings are fully given. We have adopted an eclectic reading above so as to render some sense. But it is impossible to make out क्षुदेरन् of *b1*., or क्षुदेरन् or क्षुनेरन् of *a. d. m.* Both these are likely to be mistaken for each other. But क्षुदेरन् is passive and is unsuited in the sentence, and क्षुनेरन् is un- grammatical. Hence I have taken the liberty of adopting a suitable grammatically correct form from क्षुद् 7 A.

प्रकाशात्। अष्टावश्नोतेः ते हि सप्त संख्या व्याप्य वर्तन्ते। नव इति या संख्या सा न वननीया न सम्भजनीया भवति नवसंख्यायुक्तायां हि तिथौ न कश्चिदप्यारम्भः क्रियते। दश इति या संख्या सा दस्ता दसान्तैव हि संख्या भवति। दृष्टार्था वा दृष्टार्थेव हि दशानामुपरि पुनः पुनर्दृश्यते संख्या। तद्यथा-एकादशेत्येवमादि। तस्माद् दृष्टार्थदर्शनाद् दशेत्युच्यते। विंशतिर्द्विर्दशतः द्विः दश विंशतिरित्युच्यते। शतं दशदशतः-दशकृत्वोऽभ्यस्ता या दश ताः समुदिताः शतमित्युच्यन्ते। सहस्रं सहस्वत्। सह इति बलनाम तेन तद्वत्। दुर्बलानामपि सहस्रं समुदितं बलवदेव भवति संघातबलीयस्त्वात्। अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम्। सहस्रं दशकृत्वोऽभ्यस्तमयुतमामिश्रीभूतमयुतमित्युच्यते। अयुतमपि दशकृत्वोऽभ्यस्तं नियुतमित्युच्यते। नियुतमपि दशकृत्वोऽभ्यस्तं प्रयुतमित्युच्यते। अथार्बुदशब्दनिर्वचनेच्छया अम्बुशब्दं निर्वक्ति अरणशीलम्-गमनशीलं अम्बु तद्दः-तस्य दाता मेघः सः अम्बुदः इत्युच्यते। स यथा उदकभावमापद्यमानः महान् बहुर्भवति वर्षन् तदिवार्बुदम् तदपि वर्षदिव यद् बहु द्रव्यजातं भवति तदर्बुदमित्युच्यते। खल इति संग्रामनाम। खलतेर्वा अश्नोत्यर्थस्य अश्नुवन्ति हि तत्र योधाः। स्खलतेर्वा हिंसार्थस्य हिंस्यन्ते हि तत्र परस्परेण। अयमपीतरः खलः-धान्यखलः एतस्मादेव तत्रापि हि अश्नुवन्ति चूर्ण्यमानानि धान्यानि हिंस्यन्ते वा चूर्ण्यन्त इत्यर्थः। अथवा समास्कन्नः अस्मौ भवति विप्रकीर्णैः धान्यैः॥

---

1. *bi. a. d* सप्त संख्या, *m.* सप्तसंख्यां, *d* वस्य for व्याप्य  2 *d.* सम् for सा न  5 *bi.* द्विदशतः  6. *a d* दशादशत समुदिता तमुच्यन्ते, *bi* उच्यते  11. *bi* °शब्दनिर्वक्षया and *bi* *m.* गमनशील after अरणशील and तद् after अम्बु.  12. *bi.* तस्य for इत्युच्यते  13. *a. d* तदपि वर्षदिव, *bi m.* तदिव वर्षन्  14. *a d.* स्वलतेर्वा for खलतेर्वा; *bi.* reads प्रेरयत्यर्थस्य, and om तत्र after हि  15. *a. d.* खलतेर्वा for स्खलतेर्वा; *a d* omit खलः after इतरः.  16 *d* अश्यन्ति for अश्नुवन्ति  17. *a. d.* विप्रकीर्णो for विप्रकीर्णै of *bi.*

---

14. खलतेर्वा-The reading of *a. d.* is preferable so far as the sense of the roots goes. But the reading given here is supported by *bi* and *m.* and is according to the order of the words in the निरुक्त.

व्याप्तिकर्माण उत्तरे धातवो दश । संग्रामे हीतरेतरं व्याप्नुवन्ति योधा इति
संग्रामनामभ्यः उत्तरे व्याप्तिकर्माणः । कतमे पुनस्त इति । "इन्वति नक्षति"—
इत्येवमादयः । तत्र दशके व्याप्तिकर्मधातुगणे एते द्वे नामनी भवतः
आक्षाणः इति च आपानः इति च । तत्र आक्षाण आश्नुवानः यो हि अश्नोति
5 व्याप्नोति स आक्षाण इत्युच्यते । तथा च य आप्नोति सः आप्नुवानः सन्
आपानः इत्युच्यते ॥

वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत् । संग्रामे हीतरेतरं व्याप्य ततो घ्नन्तीति
व्याप्तिकर्मभ्यः उत्तरे वधकर्माणः समाम्नाताः । कियन्तः । त्रयस्त्रिंशत् । कतमे
पुनस्ते । इति । "दभ्नोति श्नथति ध्वरति धूर्वति"—इत्येवमादयः । तत्र वधकर्मधातुमध्ये
10 वियात इत्येतत् नाम । तत्पुनरेवं निर्वक्तव्यम् । वियातयते—नानाप्रकारं यातयते
यः शत्रून् स वियातः । अथ वा एवमन्यथा स्यात् वियातयेत्येवमुच्यते यः
स्तोतृभिः स वियातः । आखण्डल इत्येतदपि नामैव । निगममपि चात्र दर्शयति
आखण्डल प्रहूयसे । आभिमुख्येनावस्थितो यः खण्डयति मेघान् स आखण्ड-
यिता तस्य संबोधनम् । हे आखण्डयितः ॥

15 इरिम्बिठिर्नाम काण्वो मन्त्रदृक् । तस्येयमार्षम् । गायत्री । ऐन्द्री । रात्रिपर्यायेषु
मध्यमरात्रिपर्याये होतुरियं शस्त्रे विनियुक्ता ।

"शाचिगो शाचिपूजनायं रणाय ते सुतः ।
आखण्डल प्रहूयसे ॥"

शाचिगो इति चैकं पदम् । शचीति कर्मनाम । तस्य शच्याख्यस्य कर्मणो येय-
20 मिष्टिपशुसोमादिलक्षणा सन्ततिः सा शाचिः । अथवा स्वार्थिक एव तद्धितः स्यात् ।

---

4. *bi* om. च before आपान·  9 *a. d.* omit श्नथति.  11. *bi.* वियातय
एवमुच्यते &c  12 *m* adds शत्रून् after स्तोतृभि  15. *bi* कण्वो.
16 *a d* read महारात्रिके पर्याये for मध्यम° &c

---

■ For इन्वति, नक्षति etc. *vide* Nigh. II. 18. We read नक्षति with the text of the निघण्टु and as it is read by *m*. This word however is read by *a d bi* and j as नक्षते It will be seen that the variant for नक्षति is नक्षते and not ननक्षे

9 For दभ्नोति, श्नथति, etc. *vide* Nigh. II. 19.

17. The quot. is Ṛv. VIII. 17. 12.

शच्येव शाचिः । तां प्रत्याहूयमानो यो गच्छति स शाचिगुरिन्द्रः तस्य संबोधनं हे शाचिगो इति । तथैव शाच्या च आगतः सन् पूज्यते ॥ शाचिपूजनः तस्य संबोधनं हे शाचिपूजन । हे आखण्डल—आखण्डयितः । शत्रूणां मेघानां वा । इय-मस्माभिः प्रस्तुता शची यां प्रति ते नित्यमिच्छागन्तुं यया च पूज्यसे स्वनामतः सन् किं च एतस्यां च शच्यामस्मिन् कर्मणि अयं रणाय—रमणाय ते—तव पुनः—अभिक्रुशः 5 क्रोशो यतोऽस्माभिस्त्वं प्रहूयसे प्रकर्षेणादरवद्भिर्हूयसे आहूयसे । स एवमेतज् ज्ञात्वा अस्मदनुग्रहाय अनतीतकालमागन्तुमर्हसीत्यभिप्रायः ।

आखण्डलशब्देऽप्यन्तरं वक्तव्यं बहुतरं तडिदन्तरे इति कर्मभेदतो निरुच्यते–ताडि-दित्यन्तिकवधयोः संसृष्टकर्म । तडिदित्येतच्छब्दरूपमन्तिकमभिधायि वधाभि-धायि च इत्येकमेवैतदुभाभ्यामर्थाभ्यां संप्रयुज्यते । विद्युदपि च तडिदित्युच्यते । 10 सा पुनः कर्तरि कारके ताडयतीति सतः ॥ १० ॥

"त्वया॑ व॒यं सु॒वृधा॑ ब्रह्मणस्पते स्पा॒र्हा वसु॑ मनु॒ष्या॒ द॑दीमहि ।

या नो॑ दू॒रे त॒ळितो॒ या अरा॑तयो॒ऽभि सन्ति॑ ज॒म्भया॒ ता अ॑न॒प्नसः॑ ॥"

त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि याश्च नो दूरे तळितो याश्चान्तिकेऽरातयोऽदानकर्माणो 15 वादानप्रज्ञा वा जम्भय ता अनप्नसोऽप्न इति रूपनामाप्नोतीति सतः । विद्युत्तडिद्भवतीति शाकपूणिः सा ह्यवताडयति दूराच्च दृश्यतेऽपि त्विदमन्तिकनामैवाभिप्रेतं स्यात् ।

1. *bi.* तं *for* तां 1–2. *a.* only reads संबोधने । and *a. d.* read तथैव शच्या आगतः सन् &c. *for* तथैव &c. 4. *a. d.* read आगन्तुं । *m.* नित्यमिच्छागन्तुं ; *bi.* आगत. 5 *a. d.* omit रणाय 8. *a. d.* read कर्मभेदेनैव निरुच्यते 13. A. तळितो. B. D. तळितो 15. A. तळितो. R. D. तळितो. 16. A. तळिद्भवति. B. D. तळिद्भवति ; A. अवताळयति. B. D. अवताडयति.

12. The quot. is RS. II. 23 9.

"दूरे चित् सन्तळिदिवाति रोचसे ।"

दूरेऽपि सन्नन्तिक इव संदृश्यस इति ॥

वज्रनामान्युत्तराण्यष्टादश । वज्रः कस्माद् वर्जयतीति सतस्तत्र कुत्स इत्येतत् कृन्ततेर्ऋषिः कुत्सो भवति कर्ता स्तोमानामित्यौप-
5 मन्यवोऽत्राप्यस्य वधकर्मैव भवति तत्सख इन्द्रः शुष्णं जघानेति ॥

ऐश्वर्यकर्माण उत्तरे धातवश्चत्वारः ॥

ईश्वरनामान्युत्तराणि चत्वारि । तत्रेन इत्येतत् सनित ऐश्वर्येणेति वा सनितमनेनैश्वर्यमिति वा ॥ ११ ॥

यथा त्वन्तिकनामेदं तथेयमृगुदाहरणम् त्वया वयं०—० अनप्नसः इति । गृत्स-
10 मदस्यार्षम् । जगती । अनयैव विनियुक्ता । हे **ब्रह्मणस्पते त्वया वयं सुवृधा॰** **सुवर्धयित्रा** सुष्ठु वर्धिताः अनुगृहीताः सन्तः **वसु**—वसूनि यानि यानि **स्पार्हा**-स्पार्हाणि—स्पृहणीयानि तानि तानि **मनुष्या**—मनुष्येभ्यः तानभिभूय **आददीमहि** । **किं च याश्च नो दूरे तळितः**—या नो दूरे अथवान्यवस्थिताः **अरातयः याश्चान्तिके** । तडिच्छब्दस्यान्तिकाभिधायित्वम् । दूरे च अन्तिके च या अरातयः ।
15 अरातिः सेना । **अदानकर्माणः** । रातिर्दानार्थः । अस्माकमभिमतानर्थान् ददतो ये निवारयन्ति ते **अरातयः अदानप्रज्ञाः** न दातव्यमस्माभिरेभ्य इत्येवं येषां प्रज्ञा ते अदानप्रज्ञाः । द्विविधा हि शत्रवः दुःखसंनाश्याः सुखसंनाश्याश्च तत्र ये दुःख-संनाश्याः ते अदानप्रज्ञाः ये अदानकर्माणस्ते सुखसंनाश्याः । ते चोभयेऽपि दूरे चान्तिके चावस्थिता भवन्ति । ताः दूरान्तिकावस्थितानुभयानपि **जम्भय**—स्तम्भय निषेधान्

---

1 A तळिदिव, B D तळिदिव  3 A वज्रयतीति for वर्जयतीति  4–5. A. औपमन्यवोऽप्यस्य for °त्राप्यस्य  8. A B1. conclude III ii. 5 after ऐश्वर्यमिति वा  11. a d m. वय सुष्ठु वर्धयित्रा वर्धिताः अनुगृहीताः &c. 12. a d m omit स्पार्हाणि, a. d read तानि अभिभूय for तानभिभूय 13. a d m किं च या नो दूरे तळित याश्च दूरे अथवा व्यवस्थिताः &c  15 a. d m omit अदानकर्माण  16 a d add वा before न दातव्य &c.; d. omits एभ्य 17 a d read सुखसनाश्या दुःखसनाश्याश्च  18. a. d. omit ये अदानकर्माणस्ते सुखसनाश्या., b1. अदानकर्मा°.  19. a. d m. read तान् for ता and b1. om स्तम्भय

कुरु त्वं भक्षणस्यते किं च अनप्नसः धरुपांथैतान् कुरु । अप्न इति रूपनाम ।
तद्धि आप्नोति । आश्रयम् ।

**विद्युत्तडिद्भवतीति शाकपूणिराचार्यो मन्यते । किं कारणम् । सा ह्यव-
ताडयति** अशनिरूपेण । **दूरात् एव च दृश्यते** । तस्मान्न तस्या अन्तिकनामाभि-
संबन्धोऽस्ति । **अपि त्विदम्** अपरेणोदाहरणेन **अन्तिकनामैवाभिप्रेतं स्यात्** 5
**दूरे चित् सन्तळिदिवाति रोचसे-दूरेपि सन्नन्तिक इव** अवस्थितो
**दृश्यसे इति** । अत्र दूरेपि सन्नन्तिक इवेति स्फुटतरमन्तिकाभिधानत्वम् । न तथा
पूर्वस्मिन् मन्त्रे या नो दूरे तळितः इति ॥

एवमन्तिकनामत्वेन वा विद्युन्नामत्वेन वा वधनामत्वेन वा प्रकरणोपपदे अवेक्ष्य
यथासंभवं निर्वक्तव्यम् । 10

" यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन् तळिदिवाति रोचसे ।
राज्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ "

एषा जगती । आग्नेयी । कुत्सेन दृष्टा । महाव्रते आग्निमारुते शस्त्रे अभिप्लवस्य च
षष्ठेहनि आग्निमारुते एव च शस्यते । यः त्वं हे अग्ने विश्वतः-सर्वतः सुप्रतीकः-
सुदर्शनः शोभनदर्शनः अपिच सदृङ्-यतो यतो दृश्यसे ततस्ततः समानदर्शन- 15
स्तुल्य एव लक्ष्यसे । अपिच **दूरे** अपि **सन्** अतिभ्राजिष्णुत्वात् **तळिदिव**-
अन्तिक इवावस्थितः **अतिरोचसे**-अतिरोचिष्णुर्दृश्यसे । अपिच यदेतत् राज्या-
श्चित्-राज्या अपि संततमन्धः-अध्यानलक्षणं तमः यत्र ध्यातुमपि दु खं शक्यते
किमुत द्रष्टुम् । एतदपि अति-अतीत्य हे देव-सर्वभूतदीपयित. पश्यसि एव त्वम्
न तेऽस्माकमिव तेनान्धेनापि तमसा प्रतिबध्यते दर्शनम् । तस्य तवैवंगुणयुक्तस्य हे 20
अग्ने वय सख्ये-सखिभावे परिचरणकर्मणि आ उत्तमादुच्छ्वासात्कृताध्यवसायाः सन्तो
मा केनचिद्व्याधिना शत्रुणा वा रिषाम-मास्मान् कश्चिद्धिंसीत्त्वदनुध्यानादेवेत्यभिप्रायः ॥

---

1. *bi. m.* अप्पाश्र 2 *a d.* तद्याप्नोत्याश्रय 3. *bi.* om विद्युत्त-
डिद्भवतीति शाकपूणिराचार्यो मन्यते । किं कारणं । 14 *d* षष्ठे for पष्ठे 17. *d.*
*j* °रोचिष्णु दृश्यसे 18. *a. d* संततं and *bi* सन तन् for संततन् of *m.*; *a d.*
*m.* यत्र for यत्र of *bi.*; *bi.* om दु ख 19. *a. d.* om. अति ; *a, d. m.* °दीप-
यितव्य for °दीपयितः of *bi* ; *d* पश्यमेव त्व 22. *a. d. bi.* (ms.) व्याधिना.
*bi. m.* विधिना ; *bi.* किंचित्

---

12. The quot. is RS. I. 94. 7.

वज्रनामान्युत्तराण्यष्टादश। यो हि हन्यते स वज्रेणैवेति वधकर्मभ्य उत्तराणि वज्रनामानि। कियन्ति पुनस्तानि। अष्टादश–अष्टौ च दश च। कतमानि पुनस्तानि। "दिद्युत् नेमिः हेतिः"–इत्येवमादीनि। दिद्युत् द्यतेर्वा द्योततेर्वा पुनः पुनरतिशयेन वा द्यति अवखण्डयति द्योतते दीप्यते वा सा दिद्युत्। अवनामयति 5 खण्डयति प्रहारेणेति नेमिः। हेतिर्हन्तेः। इत्येवमादि॥

आह वज्रः कस्मात्। उच्यते। वर्जयति–विजोजयति प्राणैः प्राणिनः तत्र कुत्स इत्येतत् संदेहपदम्। ऋषिरपि कुत्स इत्युच्यते। तत्पुनरेतद्यदा वज्रनाम तदा कृन्ततेः कृत्यतेऽनेनेति कुत्सः। यदा पुनरेतदृष्यभिधानं तदा कर्ता स्तोमानामिति औपमन्यव आचार्यो मन्यते। अत्राप्यस्य वधकर्मैव अभिप्रेतं स्यात्। 10 अत्रापि एतदपो वर्तमानमभिधानमस्य ऋषेर्वधकर्मैव यथार्थसंयुक्तमेव स्यात्। किं कारणम्। तत्सख इन्द्रः शुष्णं जघान इति। तेन स्तूयमानो विवृद्धबलः शुष्णं शोषयितारं रसानामसुरं मेघं वा जघान। मेघो हि शुष्णः। तदुदये हि धान्यानि उदकग्राहनिमित्तेन शुष्यन्ति॥

ऐश्वर्यकर्माण उत्तरे धातवश्चत्वारः। प्रतामेव हि वज्रेणायुधेनैश्वर्यं 15 भवतीति वज्रनामभ्य उत्तरे ऐश्वर्यकर्माणः कतमे पुनस्ते। "इरज्यति पत्यते क्षियति राजति"–इति॥

ईश्वरनामान्युत्तराणि चत्वारि। ऐश्वर्यसंबन्धेनैवोच्यते। कतमानि पुनस्तानि। "राष्ट्री अर्यः नियुत्वान् इन"। तत्र इन इत्येतत् अभिधानमेवं व्युत्पाद्यम्। सनितः–संभृतः ऐश्वर्येणेति वा अथ वा सनितं–संभक्तम् 20 अनेनैश्वर्यमिति॥ ११॥

---

1 *d*. om स. 3–4 *a d*. omit पुनः पुनः &c to दिद्युत् 9. *a d*. औपमन्यव आचार्यो मन्यते 11. *a d*. omit इति after जघान 15. *a*. *d*. add इति after ते 17. *a d*. read उच्यन्ते for उच्यते

---

3. For दिद्युत्, नेमि etc *vide* Nigh II. 20.

11 तत्सख जघान इति *Cf* RS. I. 11. 7. and the com of सायण on it; *Cf* also I 103 8, IV. 16. 11–13

16 For इरज्यति पत्यते etc. *vide* Nigh. II. 21. Where however we have क्षपति and not क्षियति as here read by all.

18 For राष्ट्री, अर्य. etc. *vide* Nigh. II. 22.

" यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ।

इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥ "

यत्र सुपर्णाः सुपतना आदित्यरश्मयोऽमृतस्य भागमुदकस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषां भूतानां गोपायितादित्यः स मा धीरः पाकमत्राविवेशेति धीरो धीमान् पाकः 5 पक्तव्यो भवति विपक्वप्रज्ञ आदित्य इत्युपनिषद्वर्णो भवतीत्यधिदैवतम् । अथाध्यात्मं यत्र सुपर्णाः सुपतनानीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा स मा धीरः पाकमत्राविवेशेति धीरो धीमान् पाकः पक्तव्यो भवति विपक्वप्रज्ञ आत्मेत्यात्मगतिमाचष्टे ॥१२॥ 10

अधुना मन्त्रमपि स्पष्टयति यस्मिन्नेतदीश्वरनामेन इति । यत्रा सुपर्णा॰इति । त्रिष्टुबेषा वैश्वदेवे सूक्ते दीर्घतमसा दृष्टा । महाव्रते तृतीयसवने वैश्वदेवे शस्त्रे शस्यते । वैश्वदेवेषु हि सूक्तेष्वेकदेवता बहुदेवताश्च मन्त्रा भवन्ति तदप्युपेक्षितव्यम् । यत्र-अस्मिन् मण्डलेऽवस्थिताः सुपर्णाः-सुपतनाः आदित्यरश्मयः ते हि शोभनमर्थमुदित्य तमोविघातलक्षणं पतन्ति । अथवा शोभमानाः पतन्तीति सुपर्णाः । ते किं कुर्वन्ति । 15 उच्यते । अमृतस्य भागम्-उदकस्य अमरणधर्मणः भागं भजनीयमंशमादाय पृथिवीलोकस्तेनान्विताः सन्तः सर्वभूतानि अभिस्वरन्ति । ' स्वृ शब्दोपतापयोः ' अभितपन्तीत्यर्थः । अथवा अभिस्वरन्त्यादित्यमण्डलमाभिमुख्येन रसान् गृहीत्वा

10. A. Bi. conclude III, ii, 6 after माचष्टे. 12. M. वैश्वदेवीये ; a. d. omit महाव्रते. 13. d. omits हि. 14 a. d. m. omit सुपर्णाः. 15. a d. read तमोपघातलक्षणं. 16. d. m. अमरणधर्मिणो. 18. m. अभितपन्तीत्यर्थः ; a आदित्यमण्डलेन.

1. The quot. is RS. I 164, 21.

6. इत्युपनिषद्वर्णो भवतीति etc. The reference is not traced.

17. स्वृ-धातुरि

प्रयान्ति । कथं पुनः प्रयान्ति । अनिमेषं-अनिमिषन्तः-अनिमिषमाणा इव आदरवन्त इत्यर्थः । विदथा-वेदनेन विज्ञानेन स्वकर्मविशेषयुक्तेनान्विताः सन्तः इदमेवास्माभिः कर्तव्यं रसादानादिलक्षणं कर्मेति अभिस्वरन्ति । यत्रैतद्दैवलक्षणं कर्म कुर्वन्त्यादित्यरश्मयः तत्र किमिति । उच्यते । इनो विश्वस्य भुवनस्य गोपाः ।

5 इनः-ईश्वरः इनो ह्यसावादित्यः ऐश्वर्येण भवति विश्वस्य भुवनस्य-भूतस्य सर्वेषां भूतानां गोपाः-गोपायिता भवति आदित्यः मण्डलान्तःपुरुषो यस्तत्र मण्डले-वस्थितः । स मा धीरः-धीमान् प्रति विशित्वा सुप्याविनः बुद्धिरेव हि तस्य शरीरम् । पाकं पाकः पक्तव्यः पक्तव्यमतं विपक्वप्रज्ञः सम्यग्दर्शनेनुप्राह्यतया आविवेश आविशतु ।

10 इति शब्दः प्रकरणप्रदर्शनार्थः एवमयम् उपनिषद्वर्णो भवतीति । यद्वा ज्ञान-मुपगतस्य सतो गर्भजन्मजरामृत्यवो निश्चयेन सीदन्ति सा रहस्यं विद्या उपनिषदित्यु-च्यते । उपनिषद्भावेन वर्ण्यत इति उपनिषद्वर्णः । अधिदैवतम् उक्तम् । अथा-ध्यात्मम् उच्यते । अधिदैवतमध्यात्ममित्येतौ । शब्दौ व्याख्यातौ । यत्र यस्मिन् शरीरे सुपतनानि इन्द्रियाणि अवस्थितानि स्वेषु स्वेषु आयतनेषु कृष्णसारादिषु ।

---

1 *b* om कथं पुनः प्रयान्ति । अनिमेष 2. *bl.* om विज्ञानेन 3. *bl* कर्त-व्यमादानां°. 5–6 *a. d m.* add भवति after भुवनस्य, and read किंच for सर्वेषां भूतानां, and om भवति after गोपायिता 8. *a. d.* read पाक for पाकं°, and then proceed पक्तव्यः प्रज्ञ । विपक्वप्रज्ञ (ज्ञः *d.*) सम्यग्दर्शनेनुग्राह्यतया &c.; *bl m.* पाकं पक्तव्य पक्तव्यप्रज्ञ विपक्वप्रज्ञ &c 10 *a. d m* इतिकरण-, *bl.* इतिशब्द, *a d* om. प्रकरण° before °प्रदर्शनार्थं , *a d* मन्त्रो before भवतीति, a d यद्विज्ञान for यद्वा ज्ञान 11. *a d.* विनिश्चयेन ; *a. d. m* रहस्या 12–13. *a. d.* अथाध्यात्मिकमुच्यते, *m* °दैवतमाध्यात्मं.

---

8. None of the readings is satisfactory by itself I adopt a conjectural reading derived from the readings here and in l. 10–11, next page.

11. Is it रहस्यविद्या ? *bl* reads रहस्यं विद्या, *a. d m.* रहस्या विद्या The first can be construed. The second looks to be wrong as रहस्य is a noun and not an adj In all probability the true reading should be the one suggested.

13 व्याख्यातौ-*vide* the com. on Nir. I 4.

14. कृष्णसार°-Is it कृष्णतारादिषु ? All however read text as above.